# तन्त्रसङ्ग्रहः

## पञ्चमो भागः

कुलपतेः डॉ. मण्डनमिश्रस्य
'शिवसङ्कल्प' -पुरोवाचा पुरस्कृतः

सम्पादकः
पण्डितश्रीव्रजवल्लभद्विवेदी

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

योगतन्त्र - ग्रन्थमाला
[अष्टमं पुष्पम्]

# तन्त्रसङ्ग्रहः

## पञ्चमो भागः

कुलपतेः डॉ. मण्डनमिश्रस्य
'शिवसङ्कल्प'-पुरोवाचा पुरस्कृतः

सम्पादकः
पण्डितश्रीव्रजवल्लभद्विवेदी

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

YOGATANTRA - GRANTHAMĀLĀ

[ Vol. 8 ]

# TANTRASAṀGRAHA

## [ PART FIVE ]

[ SARVAVIJAYITANTRA, GUPTASĀDHANATANTRA,
MĀYĀTANTRA, ṢAḌĀMNĀYATANTRA,
GĀYATRĪTANTRA, CĪNĀCĀRATANTRA,
& BHŪTAŚUDDHITANTRA ]

*FOREWORD BY*

**DR. MANDAN MISHRA**

*Vice - Chancellor*

*EDITED BY*

**Pt. ŚRĪ VRAJAVALLABHA DVIVEDĪ**

*Ex-Head of the Dept. Yogatantra*

*Sampurnanand Sanskrit University*

*Varanasi*




VARANASI

1996

*Research Publication Supervisor—*
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.



*Published by—*
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at—*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002



First Edition, 1000 Copies
Price Rs. 140.00



*Printed by—*
**Tara Printing Works**
Kamachha, Varanasi-221 010

योगतन्त्र-ग्रन्थमाला
[ अष्टमं पुष्पम् ]

# तन्त्रसङ्ग्रहः

[ पञ्चमो भागः ]

[ सर्वविजयितन्त्रम्, गुप्तसाधनतन्त्रम्, मायातन्त्रम्, षडाम्नायतन्त्रम्,
गायत्रीतन्त्रम्, चीनाचारतन्त्रम्, भूतशुद्धितन्त्रञ्च ]

**कुलपतेः डॉ. मण्डनमिश्रस्य 'शिवसङ्कल्प'-पुरोवाचा पुरस्कृतः**

*सम्पादकः*

**पण्डितश्रीव्रजवल्लभद्विवेदी**

*योगतन्त्रविभागाध्यक्षचरः,*

*सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य*

*वाराणसी*




**वाराणस्याम्**

**२०५३ तमे वैक्रमाब्दे　　१९१८ तमे शकाब्दे　　१९९६ तमे खैस्ताब्दे**

*अनुसन्धानप्रकाशनपर्यवेक्षकः —*

**निदेशकः, अनुसन्धानसंस्थानस्य**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी।



*प्रकाशकः —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**

प्रकाशनाधिकारी,

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी-२२१ ००२.



*प्राप्तिस्थानम् —*

**विक्रय-विभागः,**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी-२२१ ००२.



प्रथमं संस्करणम्, १००० प्रतिरूपाणि

मूल्यम्— १४०.०० रूप्यकाणि



*मुद्रकः —*

**तारा प्रिंटिंग वर्क्स**

कमच्छा, वाराणसी-२२१ ०१०.

# शिवसङ्कल्पः

वाराणसेयसंस्कृतविश्वविद्यालयस्य योगतन्त्रविभागाध्यक्षचरैः सुगृहीत-नामधेयैः पुण्यश्लोकैर्महामहोपाध्यायैः **श्रीमद्भिर्गोपीनाथकविराज**महोदयै-र्योगतन्त्रविभागेन प्रकाश्यमानस्य **तन्त्रसङ्ग्रह**नामकग्रन्थस्य चत्वारो भागाः प्रकाशतामानीताः।

अत्र सप्त तन्त्रग्रन्थाः सङ्गृहीताः सन्ति — **१. सर्वविजयितन्त्रम्, २. गुप्तसाधनतन्त्रम्, ३. मायातन्त्रम्, ४. षडाम्नायतन्त्रम्, ५. गायत्रीतन्त्रम्, ६. चीनाचारतन्त्रम्, ७. भूतशुद्धितन्त्रम्**। एतेषां ग्रन्थानां नाम्नैव ग्रन्थविषयाः प्रकटीभवन्ति, तथाप्यस्य सम्पादकैरागम-शास्त्रनिष्णातैः **श्रीव्रजवल्लभद्विवेदि**महाभागैः प्रतितन्त्रं विषयाणां विस्तृतसूची निर्मिताऽऽदौ संलग्ना वर्तते।

एतेषां विरलप्राप्याणां दुर्लभानां ग्रन्थानां प्रकाशनेन तन्त्रशास्त्रस्य ग्रन्थानामुद्धारः संरक्षणं प्रचारः, सहैव वैदिक-पौराणिक-तान्त्रिकविद्याध्येतॄणां शोधार्थिनां च वैदिक-पौराणिकविषयैः सह तान्त्रिकविषयाणां तुलनात्मकाध्ययने प्रवृत्तिरपि भविष्यति। एवमेवानेके विषयाः सन्ति येषां वैदिकपौराणिकवाङ्मये नामान्यपि न सन्ति। येषां च नामानि सन्ति तेषां च केवलं नाममात्रसाम्यम्। तेषामर्थक्रियायां महान् भेदो ग्रन्थदर्शनेन बोद्धुं शक्यते। एकं निदर्शनं पर्याप्तमस्ति — गायत्री वेदमाता, वैदिक-पौराणिकवाङ्मये गायत्रीविषये बहु चर्चितं व्याख्यातं विवृतं च, तथापि तान्त्रिकग्रन्थेषु गायत्रीविषयक-विचाराणामवलोकनेन चक्षुरुन्मील्यते। एका नवीना दृष्टिः प्राप्यते। एवमेव चीनाचारतन्त्राध्ययनेन पूजाचारविज्ञानेन सहैका भौगोलिकी, ऐतिहासिकी च दृष्टिः समुद्घाटिता भवति।

विश्वविद्यालयस्यास्य तन्त्रसाहित्यप्रकाशने सम्पादने च स्वनामधन्यानां महामहोपाध्याय**श्रीगोपीनाथकविराज**महोदयानां शिष्यैः आचार्यैः **श्रीव्रजवल्लभद्विवेदि**महोदयैः सुमहत् प्रयतितम्। तेषां भूमिकायां संक्षेपेणास्य माहात्म्यं प्रतिष्ठापितम्। वस्तुतस्तन्त्रागमक्षेत्रे सम्प्रत्यपि बहु कर्तव्यमस्ति।

श्रीद्विवेदिमहोदयानां साधना अस्माकं भाविकार्यक्रमाणां कृते सहायिका प्रकल्पिष्यते। अयमपि ग्रन्थस्तेषामेव विद्वत्तायाः साक्षाद् निदर्शनभूतः प्रकाशकः संस्थापकश्च तन्त्रशास्त्रगौरवस्य। विश्वविद्यालयादवकाशग्रहणानन्तरमपि श्रीद्विवेदिमहोदयैर्महत्त्वपूर्णानां शोधग्रन्थानां सम्पादने सारनाथस्थ-केन्द्रीय-उच्च-तिब्बती-शिक्षासंस्थानद्वारा, शैवभारतीशोधसंस्थाननिदेशकत्वेन च कार्यक्रमाः सञ्चाल्यन्त इति सुमहदास्थास्थानम्। तन्त्रागमशास्त्राणां विकासस्यास्मिन् प्रसङ्गेऽहं तेषां वैदुष्यं प्रति स्वकीयमादरम्, प्रकाशनाधिकारिणे **डॉ. हरिश्चन्द्र-मणित्रिपाठिने**, ग्रन्थस्यास्य मुद्रकाय तारायन्त्रालयस्य सञ्चालकाय **श्रीरवि-प्रकाशपण्ड्या**महोदयाय च शुभाशंसनं समुपाहरन् ग्रन्थमिमं विदुषां समक्षं सादरभरं समुपस्थापयामि।

**वाराणसी**
रामनवमी,
वि. सं. २०५३
(२८.३.१९९६ खैस्ताब्दः)

**मण्डनमिश्रः**
*कुलपतिः*
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रास्ताविकम्

## [प्रथमसंस्करणस्य]

तन्त्रसङ्ग्रहस्य षड्ग्रन्थात्मकं पञ्चमं भागं तन्त्रशास्त्ररसिकानां पाठकानां करकमलयोः समर्पयतामस्माकं नितान्तं प्रसीदति चेतः। इतः पूर्वं सम्पूर्णानन्द-संस्कृतविश्वविद्यालयतः प्रकाश्यमानायां योगतन्त्रग्रन्थमालायामनेके तन्त्रग्रन्थाः प्रकाशिताः। तेषु भूयांसो ग्रन्थाः साम्प्रतं नोपलभ्यन्त इत्यनेनास्या योगतन्त्रग्रन्थ-मालाया लोकप्रियता प्रकटीभवति। नित्याषोडशिकार्णवस्य तन्त्रसङ्ग्रहभाग-द्वयस्य च नूतनं संस्करणं चिकीर्ष्यते विश्वविद्यालयेन। मन्ये तन्नातिविलम्बं प्रका-श्येत। अस्मिंश्च **पञ्चमे भागे सर्वविजयितन्त्रम्, गुप्तसाधनतन्त्रम्, मायातन्त्रम्, षडाम्नायतन्त्रम्, गायत्रीतन्त्रम्, चीनाचारतन्त्रमिति** षट्तन्त्राणि समाविष्टानि सन्ति।

कलिकातास्थितेन विदुषा श्रीमता रसिकमोहनचट्टोपाध्यायमहोदयेन स्वीये तन्त्रसङ्ग्राहके ग्रन्थे प्रायश्चत्वारिंशदधिकास्तन्त्रग्रन्था वङ्गलिप्यां प्रकाशिताः साम्प्रतं नोपलभ्यन्ते। ग्रन्थानामेतेषां देवनागरीसंस्करणं सुलभीक्रियेतेति धिया 'तन्त्रसङ्ग्रह' इति नाम्ना तेषां प्रकाशनं प्रारब्धम्। अस्य द्वितीये भागे निर्वाण-तोडल-कामधेनु-फेत्कारिणी-ज्ञानसंकलिनीतन्त्राणि, तृतीये भागे गन्धर्वतन्त्रम्, चतुर्थे च भागे मुण्डमाला-कामाख्या-सनत्कुमार-भूतशुद्धि-कङ्कालमालिनी-तन्त्राणि प्रकाशितानि तत्रत्यानि। उपर्युक्तानि षट् तन्त्राणि चात्र प्रकाश्यन्ते। मन्ये शिष्टानामपि यथावसरं प्रकाशनं स्यात्।

सरस्वतीभवनपुस्तकालये सङ्गृहीतानां मातृकाणां साहाय्येनैव ग्रन्थाना-मेतेषां संस्करणानि सम्पाद्यन्ते। भूतशुद्धितन्त्रस्य चतुर्थभागे प्रकाशितस्य सरस्वतीभवनस्य मातृकायां भिन्नमेव स्वरूपमासीत्। तस्य प्रकाशनं तन्त्र-सङ्ग्रहचतुर्थभागे परिशिष्टरूपेण क्रियेतेति तदा प्रतिज्ञातमासीत्। तदेतस्य भूत-शुद्धितन्त्रस्यात्र सर्वान्ते नूतनं स्वरूपं द्रष्टव्यम्। प्रायो विषय-साम्येऽपि नैकोऽपि श्लोकस्तत्रत्योऽत्र दृश्यते। अपि च, तत्त्वप्रकाशस्य भोजराजरचितस्य

शैवसिद्धान्तग्रन्थस्य तत्त्वप्रकाशिकाख्यायां कुमारदेवरचितायां टीकायां भूतशुद्धितन्त्रस्य सार्द्धैकः श्लोकः समुद्धृतो दृश्यते। तदेतत् पङ्क्तित्रयमप्यनयोरुभयोर्भूतशुद्धिसंस्करणयोर्न दृश्यत इति कुमारदेवोद्धृतं वचनमेतदन्यस्यैव कस्यचन भूतशुद्धितन्त्रस्य स्यात्। प्राचीनस्यास्य भूतशुद्धितन्त्रस्य समुपलब्धये प्रयतनीयं तन्त्ररसिकैः। इदं च वर्तते तत्रत्यं पङ्क्तित्रयम्—

अन्यथाख्यामुपाश्रित्य सांख्यवच्छिवशासनम्।
या अनिर्वचनीयेति तथा सिद्धान्तवादतः॥
वेदान्तवादिनां दृष्टिमाश्रितं वैष्णवं मतम्॥ इति।

एतेषु सर्वविजयितन्त्रस्य न कापि मातृका समुपलब्धा सरस्वतीभवने। गुप्तसाधनतन्त्रं २४८५८, २५१९७, २५१९८, २५७५९, २६४८७, २६५०२ इति संख्याकानां षण्मातृकाणां साहाय्येन, मायातन्त्रमपि २४७१३, २५३७४, २५५६१, २६४६२, २६४६३, २६४७० इति संख्याकानां षण्मातृकाणां साहाय्येन, गायत्रीतन्त्रं २५०२४, २५५७३, २५९८६, २६४७२ इति मातृकाचतुष्टयस्य, चीनाचारतन्त्रं च २३८५८, १०९१०१ इति मातृकाद्वयस्य साहाय्येन परिशोध्यात्र मुद्रणाय सज्जीकृतम्। षडाम्नायतन्त्रस्यापि न कापि मातृका सरस्वतीभवने समुपलब्धा। सन्ति चतस्रो षडाम्नायमातृकाः ५५६८५, ६१८६७, ९४४४३, १०८५९९ इति संख्याकाः। अत्र च केवलं षडाम्नायानां विवरणं वर्तते। पूर्वं पञ्चपटलात्मकमेव गायत्रीतन्त्रं मुद्रितमासीत्। अत्र च २५९८६, २६४७२ इति संख्याकयोर्मातृकयोः साहाय्येन नवपटलात्मकमेतत् तन्त्रं सम्पूर्णं प्रकाश्यते। भूतशुद्धितन्त्रस्य सरस्वतीभवनस्थाया मातृकायाः संख्या २५७५४ वर्तते। सर्वासामेतासां मातृकाणां परिचयात्मकं विवरणं मुद्रितायां मुद्र्यमाणायां वा तन्त्रविषयकसूच्यां द्रष्टव्यम्। ९४४४३, १०८५९९ इति संख्याके षडाम्नायमातृके च पुनः परीक्षणार्हे स्तः।

तन्त्रसङ्ग्रहपञ्चमभागे प्रकाशितेषु षट्सु तन्त्रेषु प्रथमं सर्वविजयितन्त्रं तान्त्रिकप्रयोगप्रतिपादकम्, गुप्तसाधनतन्त्रं च प्राधान्येन कुलाचारप्रतिपादकं वर्तते। मायातन्त्रे मार्कण्डेयोपासिताया महामायायाः, दुर्गायाः, काली-तारा-भुवनेशीनां च समाराधनं कुलाचारपद्धत्याऽपि वर्ण्यते। षडाम्नायतन्त्रे प्राधान्येन षडाम्नायदृष्ट्या निगमागमयामलादीनां स्वरूपं शक्तिगुरुयोगकर्मप्रभृतीनां च विवरणं समुपस्थापितम्। गायत्रीतन्त्रे तान्त्रिकपद्धत्या सप्रणवस्य गायत्रीमन्त्रस्य

सन्ध्यादीनां च व्याख्यानं वर्तते । चीनाचारतन्त्रं च नामानुगुणं चीनाचारं वर्णयति । सप्तमं परिशिष्टात्मकं भूतशुद्धितन्त्रं च तृतीयभागप्रकाशिततत्तन्त्रवदान्तरवरिवस्यां षट्चक्रभेदनात्मिकां प्रतिपादयति । जिज्ञासोपशमाय तेषां स्वरूपपरिचयोऽत्र नातिविस्तरेण समुपस्थाप्यते ।

## सर्वविजयितन्त्रम्

लघुकाये १६३ श्लोकात्मके देवी-ईश्वरसंवादात्मकेऽस्मिन् ग्रन्थे विविधरोगहरा वशीकरणादिसाधकांश्चौषधप्रयोगा वर्ण्यन्ते, यथा हि कुचुमारतन्त्रे तृतीयपुरुषार्थोपयोगिन औषधप्रयोगाः सन्ति सङ्गृहीताः । अस्मिन्नर्थे तन्त्रशब्दस्य प्रयोग आयुर्वेदग्रन्थेष्वपि दृश्यते, यत्र हि तादृशानां प्रयोगाणां प्रतिपादनं विस्तरेण भवति । एतादृक्षु स्थलेषु तन्त्रशब्दो विविधप्रयोगविस्तारकस्य शास्त्रस्याभिधायको भवति । एवं च कामशास्त्रस्य चिकित्साशास्त्रस्य च विषयान् क्रोडीकुर्वत् तन्त्रमेतत् स्वगौरवं विशेषतः ख्यापयति । आयुर्वेदग्रन्थेष्वेतादृशाः प्रयोगाः सौलभ्येन द्रष्टुं शक्यन्ते । अस्ति च कुचुमारतन्त्रं मुद्रितं कुचोपनिषन्नाम्नाऽपि प्रख्यातम् । पठ्यते च वात्स्यायनीये कामसूत्रे—"तदेव (कामशास्त्रमेव) साधारणसाम्प्रयोगिक-कन्यासम्प्रयुक्तक-भार्याधिकारिक-पारदारिक-वैशिक-औपनिषदिकैः सप्तभिरधिकरणैः...... कुचुमार औपनिषदिकम्" (१ ।१०,१७) इति । एवं च कामशास्त्रीयौपनिषदिकाधिकरणस्य सप्तमस्य विषयान् व्याकरोति तन्त्रमेतत् । सर्वेष्वेतेषु शास्त्रेषु वर्णितानामौषधप्रयोगाणां तुलनात्मकं प्रायोगिकं चानुशीलनं नितान्तमपेक्षितम् । विषयेऽस्मिन् सर्वविजयितन्त्रमेतद् बहूपकरिष्यतीत्यस्माकीनो दृढो विश्वासः ।

## गुप्तसाधनतन्त्रम्

देवी-(पार्वती)-शिव-(शङ्कर)संवादात्मके द्वादशपटलमयेऽस्मिन् तन्त्रे नामानुगुणमतिगोप्यानां कुलाचाराणां प्रतिपादनं विद्यते । तन्त्रशास्त्रेषु स्त्रीणां शूद्राणां च समानोऽधिकारः प्रतिपाद्यते । एतावदेव न, गुप्तसाधनतन्त्रेऽस्मिन् स्त्रियो गुरुपदमप्यारूढा भवन्तीति कुलीनस्त्रीगुरोर्ध्यानं वर्ण्यते । अत्र कुलाचारसम्मतस्य पञ्चाङ्गोपासनस्य रहस्यपुरस्क्रियायाश्च स्वरूपं निरूपितम्, कालीतन्त्रयामलादिसम्मतो दक्षिणाकल्पो वर्णितः, विष्णुतन्त्रोक्ता मुद्राश्च स्मृताः । पञ्च-

तत्त्वशोधनप्रसङ्गे नीलतन्त्रं सिद्धिचक्रप्रकरणे च पूर्वाम्नायतन्त्रमप्यत्र स्मर्यते। पार्थिवलिङ्गे देवीपूजा स्पष्टमत्र निषिद्धा। धनदा मातङ्गी च विद्या न्यासध्यान-कवचादिपुरस्सरा विस्तरेणात्र वर्णिता। अन्ते वैष्णव-शैव-शाक्त-सौर-गाणपत्य-मतेन मालास्वरूपमुन्मीलितम्, वेदमातृगायत्रीयन्त्रसमुद्धारश्च कृतः।

## मायातन्त्रम्

देवी-ईश्वर-(महादेव) संवादात्मके द्वादशपटलमयेऽस्मिन् तन्त्रे सर्वप्रथममेकार्णवीभूते जगति वटदलस्थितं नारायणं महामायां च मार्कण्डेयो महामुनिस्तुष्टावेति वर्ण्यते। नारायणोपदिष्टो मायामन्त्रस्तत्समाराधनविधिश्च विस्तरेणात्र प्रतिपाद्यत इति तन्त्रस्यास्यान्वर्थकं नाम। भूतशुद्धिप्रसङ्गेऽत्र (२।३७) भूतशुद्धितन्त्रं स्मर्यते। दुर्गामन्त्रयन्त्रस्तवकवचादीन्यप्यत्र वर्णितानि। मन्त्राणां पुरश्चर्याविधिप्रसङ्गे मञ्जुघोषादिमतेन मालानिर्णयः सूत्रविधानं च प्रोक्तम्। षष्ठे पटले सुषुम्नायामवस्थितानामान्तरतीर्थानाम्, सप्तमे च सुषुम्नामध्यस्थितस्य मन्त्रस्य विवरणं समुपस्थापितम्। कलिकाले यवना बलवत्तरा भवन्तीति तेभ्यस्त्र्यक्षरी एकाक्षरी वा विद्या देयेति स्पष्टमत्र (७।३५-३९) प्रतिपाद्यते। विश्वसारतन्त्रानुमतः कुलाचारसम्मतः पुरश्चर्याविधिरत्राष्टमे पटले विस्तरेण वर्णितः। हवनप्रतिपादके नवमे पटले चतुरस्रादिकुण्डविधानेषु तान्त्रिकाणां विदुषां मतभेदा वर्णिताः। ग्रन्थोपान्त्यभागे च कौलिको योगविधिर्भावत्रय-निरूपणलतासाधनपुरस्सरं वर्णितः, कालीदुर्गातारिणीनामभेदश्च प्रदर्शितः। अन्तिमे द्वादशे पटले भुवनेश्वरीकवचं पठ्यते।

## षडाम्नायतन्त्रम्

पटलचतुष्टयात्मकस्य षडाम्नायतन्त्रस्य उपदेष्ट्री भगवती (पार्वती), भगवान् शिवश्च प्रश्नकर्तेति निगमपरिभाषितमेतत् तन्त्रम्।

आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखे।
मतं च वासुदेवस्य तस्मादागममुच्यते॥
निर्गतं गिरिजावक्त्राद् गतं च गिरिशश्रुतौ।
मतं च वासुदेवस्य तस्मान्निगममुच्यते॥

इति हि निगमागमयोः परवर्तिनी परिभाषा। शाक्तमतान्तर्गतक्रमागमानामपि उपदेष्ट्री भगवती; किन्तु ते ग्रन्था आगमपदाभिलप्या एवासन्। निगमशब्दस्तदा

वैदिकं वाङ्मयं परिचाययति स्म, साम्प्रतमपि च प्राधान्येन तदर्थमेव स्मारयति। प्रस्तुतं तन्त्रं तु परिभाषयोपर्युक्तया निगमविभागान्तर्गतं मन्तव्यम्। निगमादागमस्य आगमाच्च यामलादितन्त्राणां प्रादुर्भावोऽत्र प्रारम्भ एव प्रदर्श्यते। पञ्चाम्नायान्तर्गतानां षडाम्नायान्तर्गतानां वा केषाञ्चन ग्रन्थानां मतमतान्तराणां चात्र ब्राहुल्येनोल्लेखो दृश्यते। कात्यायनः पाणिनिश्चात्र विष्णुसूत्रभक्तिसूत्रादीनां प्रकाशकावुपदिष्टौ। बिन्दु-परा-पश्यन्ती-वैखरी-योनिमुद्रा-षट्शून्य-कामकला-महाकाल-माया-सकल-निष्कल-नादचक्रप्रभृतयः शब्दा अत्र यथावसरं व्याख्याताः। गुरौ, देवे, मन्त्रे, परमात्मनि चाभेदोऽत्र द्वितीये पटले विस्तरेण प्रतिपादितः, शिक्षागुरुदीक्षागुरुभेदेन गुरोर्द्वैविध्यं च वर्णितम्। अस्मिन्नेव पटले पञ्चयोनीनां प्रेमाख्यस्य पञ्चमपुरुषार्थस्य च विवरणं समुपस्थापितम्। शक्ति-आनन्द-भक्ति-प्रेमभाव-वासना-कर्म-शक्तिसङ्गम-वृन्दावन-ह्लादिनी-वाराणसी-योग-योगाङ्ग-भूत-शुद्धि-निष्कल-सकल-पञ्चमपुरुषार्थ-आनन्द-प्रेम-अद्वैतब्रह्म-अवस्थापञ्चक-कुलाकुल-पञ्चदीक्षा-महाकाल-काली-नाद-बिन्दु-प्रभृतयः शब्दा विषयाश्चात्र तृतीये पटले वैशद्येन व्याख्याताः प्रपञ्चिताश्च। काली-तारा-त्रिपुरसुन्दरीणामैक्यमप्यत्र वारं वारं प्रकाश्यते। चतुर्थे पटले पुनरप्यत्र विविधानां मतमतान्तराणामुल्लेखो विद्यते, भाव-आचार-संकल्प-त्रिपुरा-काली-कुलाकुल-अष्टनारी-पञ्चयोग-पञ्चभोग-पञ्चानन्द-त्रिपुर-अमृतवारुणी-नवचक्र-कलाधार-त्रिशून्य-व्योमपञ्चक-षट्चक्र-प्राणायाम-लिङ्गप्रभृतयः शब्दा विषयाश्च विस्तरेण वर्ण्यन्ते। अस्य ग्रन्थस्य प्रारम्भे समाप्तौ च पञ्चवक्त्रो महाकाल एव अक्षोभ्यो भैरव इति निर्दिश्यते, काली तारा त्रिपुरा च तस्य शक्तय इति वर्ण्यते।

**मनोविलयो मोक्षश्च नेयो ध्येयो द्विधा मतः।**
**वासनासंक्षये नेयो ध्येयो वै अच्युतालये॥**

इति श्लोकान्तश्चायं ग्रन्थः।

## गायत्रीतन्त्रम्

मन्त्रपदनिरुक्तिपूर्वकं प्राधान्येनात्र तान्त्रिकपद्धत्या गायत्रीमन्त्रस्य न्यास-ध्यानमुद्रादीनि विनियोगाश्च प्रदर्शिताः। तान्त्रिकगायत्रीजपेऽत्र शूद्रस्याप्यधिकारो वर्ण्यते (१।८२)। यतो हि—

**स च शूद्रमयो विप्रः कलिकाले च भारते।**
**ब्राह्मणाः शूद्रकर्माण अत एव कलौ युगे ॥ (२।४०)**

इति किल स्पष्टमत्र प्रतिपाद्यते। प्रणवपदनिरुक्तिपूर्वकमत्र "**परस्य ब्रह्मणो माता गायत्री परदेवता**" (१।३४) इति "**सर्ववेदमयी विद्या गायत्री**" (१।६८) इति च वर्ण्यते। आगमसन्दर्भः शिववक्त्राद्विनिर्गतस्तन्त्रं च पार्वतीवक्त्रात् (१।८५-८६) इत्युक्त्वा शिवाज्ञया हेरम्बो हस्तैश्चतुर्भिर्विलिख्य सर्वमेतत् शिवाय निवेदितवानिति वर्ण्यते। अत एवात्र गणेशस्य तद्वाहनस्य च पूजाविधिः संक्षेपेण वर्णितः। प्रसङ्गेऽस्मिन्— "**लिङ्गतत्त्वमविज्ञाय शिवलिङ्गं प्रपूजयेत्। सा पूजा मृत्तिकापूजा**" (१।१३०) इति हेतोर्लिङ्गतत्त्वं सुविशदं व्याख्यातम्। शिव इत्यक्षरद्वयस्य, वामाप्रभृतीनां शिवशक्तीनाम्, अजपागायत्रीमन्त्रस्य, सन्ध्यायाश्चात्र विशिष्टं वर्णनं दृश्यते। अजपागायत्रीसम्बद्ध आवाहनविसर्जनादिविषयकः प्रश्नः सम्यगत्र समाहितः, पञ्चाङ्गनिर्णयश्च कृतः। अजपागायत्री ब्राह्मणीति पदेन, वेदगायत्री च ब्राह्मणपदेनात्र व्याख्याता। अत्र (३।१३४-१३७) ब्राह्मणस्य वामकायत्वं निरुच्यते, गङ्गा-गीता-गायत्रीणां च माहात्म्यं वर्ण्यते। अन्ये च यज्ञसूत्रसम्बद्धाः कर्तन-जीवन्यासादयो विषया अत्र यथायथं व्याख्याता द्रष्टव्याः। बलिदानविषयकः प्रश्नोऽत्र महता डम्बरेण समुपस्थाप्यते समाधीयते च। अन्ते च तिथिपक्षध्यानादिकमुक्त्वा गायत्रीकवचं परिपठ्यते।

## चीनाचारतन्त्रम्

महाचीनक्रमाचारं देवी श्रोतुमिच्छति। अस्याचारस्यातिगोप्यत्वमालक्ष्य शिवः प्रथमतस्तां निषेधति। प्राणत्यागं करिष्यामीति देवीवचनं श्रुत्वा कारुणिको भगवान् शिवो महाचीनक्रमाचारं वक्तुमुपक्रमते। ब्रह्मणो मानसः पुत्रो वसिष्ठो कामाख्यायोनिमण्डले तारामाराधयामास। नासौ प्रसीदतीति पितरं ब्रह्माणं वदति सः। ताराप्रसादादेव मया चतुर्दशभुवनसृष्टिसामर्थ्यं लब्धमिति त्वया पुनरपि मनोयोगेन तस्योपासा विधेयेति ब्रह्मणोऽनुज्ञां लब्ध्वा स पुनरपि नीलाचलं जगाम, बहुकालं यावत्तामाराधयामास च। यावत् सा न प्रसीदतीति क्रोधेनाविष्टो वसिष्ठस्तां शशाप। ततो भगवती तारा तत्र समागता, बुद्धरूपी जनार्दनो मदीयोपासनविधिं सम्यग् जानातीति तत उपासनविधिमधिगम्य त्वया मदीयोपासना विधेया, तदैवाहं प्रसन्ना भवेयमित्युक्त्वाऽन्तर्हिता सा। ततो वसिष्ठो बुद्धरूपिणं

जनार्दनं प्रार्थयति। स च तारिणीदेव्याः सम्यक् समाराधनाय यं विधिमुपदिशति, तस्यैवात्र विस्तरेण वर्णनं विद्यते। "**श्वपचोऽपि कुलज्ञानी ब्राह्मणादतिरिच्यते**" (४।१३) इति हि तन्त्रस्यास्य समुद्घोषः। अन्ततो महाचीनक्रमाचारेण तारां समाराध्य वरं लब्ध्वा वसिष्ठः कृतकृत्यो बभूव। मदिरां मैथुनं च व्याचक्षाणेनाप्यनेन तन्त्रेण—

**देया विद्यार्थिने विद्या व्याधितेभ्यश्च औषधम्।**
**देयं क्षुधार्थिने अन्नं त्रयं स्वर्गस्य लक्षणम्॥**

इत्येवमुपसंहारः क्रियते।

## भूतशुद्धितन्त्रम्

देवीभैरवसंवादमुखेन प्रवृत्तस्य पटलचतुष्टयात्मकस्यास्य तन्त्रस्य प्रतिपाद्यं प्रायस्तदेव यद्धि तन्त्रसङ्ग्रहचतुर्थभागे प्रकाशितस्य सप्तदशपटलात्मकस्य भूतशुद्धितन्त्रस्य। तत्र विस्तरेण प्रतिपादिताः कन्दमूल-नाडी-ब्रह्मरन्ध्र-सहस्रच्छद-प्रभृतयः शब्दा विषयाश्चात्रातीव संक्षेपेण विव्रियन्ते; परन्तु षट्चक्राणामान्तरतीर्थानां च स्वरूपं कियता वैशिष्ट्येन वर्ण्यते। षट्चक्रभेदानन्तरं नाद-नादान्त-शक्ति-समनी-उन्मनीस्थानानि क्रान्त्वा ब्रह्मपुरं प्रविशति साधकः पिण्डविशोधनप्रक्रियया परिशुद्ध इति प्रक्रियाद्वयस्यात्र समन्वय इव दृश्यते। सहस्रारे चात्र गुरोर्ध्यानं विधीयते।

तदेतस्य षड्ग्रन्थात्मकस्य सपरिशिष्टस्य तन्त्रसङ्ग्रहपञ्चमभागस्य मुद्रणाय पाण्डुलिपिसज्जीकरणे पाठभेदादिसंकलने तन्निर्धारणे च व्यापृतेषु चतुर्षु विद्वत्सु तदानीन्तनयोगतन्त्रप्राध्यापकः श्रीरघुनाथमिश्र आगमाचार्यः, वरिष्ठानुसन्धाता डॉ.एन. एच. चन्द्रशेखरस्वामी च साम्प्रतं शिवसायुज्यमापन्नाविति निवेदयतामस्माकं चेखिद्यते चेतः। कविराजमहोदयानां प्रियतरौ शिष्याविमौ स्वल्पेनैव कालेन स्वप्रतिभया योगतन्त्रविभागं समृद्धमकुरुताम्। साम्प्रतं तयोः सन्निध्यमतितरामपेक्षितमासीत्। विवशा वयं वैवश्वतं यममुपालभामहे। किं तेन भवति? वर्तमानाः सांख्ययोगतन्त्रागमविभागसदस्याः पूरयन्तु कविराजमहोदयानामेतयोश्च तत्प्रियतरशिष्ययोर्मनोरथानित्येव मृत्युञ्जयः शिवः प्रार्थ्यते। तदानीन्तनवरिष्ठानुसन्धाता श्रीमान् श्रीपतिरामत्रिपाठी साम्प्रतं व्याकरणविभागे,

कनिष्ठानुसन्धाता श्रीजगन्नाथशास्त्री तैलङ्गश्च प्राचीनराजशास्त्रार्थशास्त्रविभागे कार्यव्यापृतौ स्तः। विभागस्यास्य सर्वविधोन्नतये तौ साम्प्रतमपि मनसा वाचा कर्मणा च संलग्नौ स्त इति साधुवादेन सभाज्येते। सांख्ययोगतन्त्रागमविभाग-प्राध्यापकोऽध्यक्षश्च श्रीमान् अनन्तप्रसादमिश्रोऽत्र चीनाचारतन्त्रस्य सरस्वतीभव-नस्य मातृकयोराधारेण पाठनिर्धारणं महताऽऽयासेन कृतवान्, ईक्ष्य(प्रूफ)संशोधने श्लोकसूचीनिर्माणे च वरिष्ठानुसन्धाता डॉ. हीरालालमिश्रः कनिष्ठानुसन्धाता श्रीराजनाथत्रिपाठी च व्यापृतावास्तामिति सर्वे एते धन्यवादार्हाः। प्रसङ्गेऽस्मिन् प्रकाशनविभागाधिकारिणः मुद्रणालयसदस्याश्च सादरं स्मर्यन्ते, येषां हि सहयोगेन द्रुततरमेतत् कार्यं निर्विघ्नं च सम्पन्नमभवत्। अन्ते ज्ञानदातारं मृत्युञ्जयं शिवं स्मरामः, योगतन्त्रविभागे प्रवर्तमानोऽयं ज्ञानयज्ञो निर्विघ्नं प्रचलत्विति। शम्॥

**वाराणसी**
कविराजजयन्ती,
भाद्रपदशुक्लनवमी, सं. २०३८
(८-९-८१ ई.)

*विदुषां वशंवदः*
**व्रजवल्लभद्विवेदः**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
तदानीन्तनसांख्ययोगतन्त्रागमविभागाचार्यः।

# विषयानुक्रमणिका



## सर्वविजयितन्त्रस्य

## गुप्तसाधनतन्त्रस्य

## मायातन्त्रस्य

## षडाम्नायतन्त्रस्य

## गायत्रीतन्त्रस्य

## चीनाचारतन्त्रस्य

## भूतशुद्धितन्त्रस्य





# सर्वविजयितन्त्रम्

श्रीदेव्युवाच —

देव भवत्प्रसादेन यथा कालस्य वञ्चनम्।
यन्त्रस्य सारसम्मतमिदानीमौषधं वद ॥१ ॥

येन सिद्ध्यन्ति देहानि सर्वकामप्रदानि च।
जरारोगहरं कल्पं तद् वद त्रिपुरान्तक ॥२ ॥

सन्त्यौषधान्यनेकानि मनुष्याणां हिताय च।
पूर्वं तु यत् त्वया प्रोक्तं प्रत्यक्षं कथयस्व मे ॥३ ॥

श्री-ईश्वर उवाच —

तिथिनक्षत्रवारेण ऋतुभेदैः परिग्रहः।
खननोत्पाटनं मन्त्रैः कारयेद् वै चिकित्सकः ॥४ ॥

औषधं कालयोगेन गृहणाति परमं बलम्।
शरद्धेमन्तयोर्देवि त्वचो मूलपरिग्रहः ॥५ ॥

शिशिरे च फलं सम्यक् मूलं सारसमन्वितम्।
वसन्ते पुष्पपत्रं च ग्रीष्मे च फलबीजके ॥६ ॥

स्वकाले बलवन्तोऽपि वर्षासु तरवः सदा।
मूलं वृक्षे फलं बीजं स्वबीजे च ऋतौ तथा ॥७ ॥

बलवान् परितः सर्वा ओषध्यः परिकीर्तिताः।
जलजाः स्थलजा वृक्षा लताश्चापि तथैव च ॥८ ॥

ग्राम्या वन्या गुल्मवल्ली ओषध्यः परिकीर्तिताः।
जातिर्द्रव्यं गुणद्रव्यं व्याधिसंक्षयकारकम् ॥९ ॥

फलपुष्पलता एव स्वकाले बलिनस्तथा।
निशायां जलजा वीर्याः स्थलजा बलिनो दिवा ॥१० ॥

## ॥अथ रोगजन्मनक्षत्रम् ॥

कृत्तिकायां कदाचिद् वै व्याधिरुत्पन्नको नरः।
नवरात्रं भवेत् पीडा रोहिणीषु त्रिरात्रकम् ॥११ ॥

मृगशीर्षे पञ्चरात्रमार्द्रायां मुच्यतेऽश्वभिः।
पुनर्वसौ च पुष्यायां सप्तरात्रं विधीयते ॥१२ ॥

नवरात्रं तथाश्लेषा श्मशानान्तं मघासु च।
द्वौ मासौ पूर्वफाल्गुन्यामुत्तरासु च पञ्चकम् ॥१३ ॥

हस्ते च सप्तमे मोक्षश्चित्रायामर्धमासकम्।
मासद्वयं तथा स्वात्यां विशाखे विंशतिर्दिनम् ॥१४ ॥

अनुराधा दशाहानि ज्येष्ठायामर्धमासकम्।
मूले न जायते शेषं पूर्वाषाढा त्रिपक्षकम् ॥१५ ॥

ऊनविंशत्युत्तराषाढा द्वौ मासौ श्रवणा तथा।
धनिष्ठा चार्धमासः स्याद् वरुणेन दशाहकम् ॥१६ ॥

पूर्वभाद्रपदे देवि ऊनविंशतिवासरम्।
त्रिपक्षं चाप्यहर्बुध्न्ये रेवत्यां दशरात्रकम् ॥१७ ॥

अहोरात्रावश्विनी च भरण्यां च गतायुषम्।
एवं क्रमेण जानीयान्नक्षत्रे च यथोदितम् ॥१८ ॥

उरगशतभिषार्द्रा स्वातिमूलात्रिपूर्वा
(७।२४।६।१६।१९।२१।२०।२५)

भरणी रविजवाराः क्रूरताराविरुद्धाः।
यदि भवति चतुर्थी चाष्टमी भूतषष्ठी
परिहर तिथिमेनां रोगिणां मृत्युकालः ॥१९ ॥

पञ्चमी चन्द्रवारे च द्वितीया च बृहस्पतौ ।
शुक्रे[१] चैव चतुर्थी च रोगिणां मृत्युमादिशेत् ।।२० ।।

सप्ताहं वारदोषेण त्रिगुणं (तिथि) संयुतं भवेत् ।
तिथिनक्षत्रयोर्मासं त्रिभिः कालो न जीवति ।।२१ ।।

## ।।अथ ऋतुभेदसमयनिर्णयः ।।

ऋतुसम्भेदभैषज्यं पूरयेत् कथितं तव ।
दिवारात्रौ तथा योज्यं वसन्तादि यथाक्रमात् ।।२२ ।।

वसन्तश्चैव पूर्वाह्णे ग्रीष्मो मध्याह्न उच्यते ।
वर्षा ज्ञेयाऽपराह्णे तु प्रदोषे शिशिरः स्मृतः ।।२३ ।।

अर्धरात्रौ शरत्कालः शेषे च शिशिरः स्मृतः ।
दशदण्डे क्रमाद् देवि जानीयादृतुभेदतः ।।२४ ।।

वशीकरणकर्माणि वसन्ते योजयेत् प्रिये ।
ग्रीष्मे विद्वेषणं कुर्यात् प्रावृड् विद्वेषणं तथा ।।२५ ।।

शरत्सु शान्तिकं चैव हेमन्ते पौष्टिकं भवेत् ।
शिशिरे मारणं कुर्याद् ऋतुकर्मविशारदः ।।२६ ।।

ऋतवः कथितास्त्वेते सर्व एते क्रमेण तु ।
वश्यादिकर्मसिद्धिश्च प्रयत्नेनापि सर्वतः ।।२७ ।।

शान्तिके पौष्टिके वश्ये त्वभिचारे च कर्मणि ।
तर्जन्या दिनमारूढं कुर्याद् यथाक्रमं सुधीः ।।२८ ।।

## ।।अथ ज्वरादिचिकित्सा ।।

मूलकं केशराजस्य छित्त्वा तत्सप्तखण्डकम् ।
आर्द्रकैः सह भक्षेत महाज्वरविनाशनम् ।।२९ ।।

---

१. शुभेनैव तथैवैषामिति पाठान्तरम् ।

नागरं गुडूची चैव धन्याकं रक्तचन्दनम् ।
उशीरं चैव प्रत्येकं क्वाथं पञ्चसमन्वितम् ॥३० ॥

चतुर्भागैकशेषान्ते सुव्यवस्थितशेषकम् ।
कल्पना वेदना तीव्रं ज्वरे नश्यति वार्तिकम् ॥३१ ॥

अपामार्गजटा कट्यां सप्तलोहिततन्तुभिः ।
बद्ध्वा तूर्णं रवेर्वारे ज्वरं हन्ति तृतीयकम् ॥३२ ॥

गुग्गुलूलूकपुच्छाभ्यां धूपितो मानुषो भवेत् ।
चातुर्थकज्वरं हन्ति कृष्णवस्त्रावगुण्ठितम् ॥३३ ॥

जम्बूफलं हरिद्रा च सर्पस्यैकं तु कञ्चुकम् ।
सर्वज्वराणां धूपोऽयं हन्ता रात्रिज्वरस्य च ॥३४ ॥

ॐ नमो भगवते छिन्दि छिन्दि अमुकस्य ज्वरस्य शिरः प्रज्वलितपरशुपाचने पुरुषाय फट् । अनेन भूमावङ्कच्छेदनं कुर्यात्, तदा महाज्वरविनाशनं भवति । अनेन मन्त्रेण छेदनम् ।

करे बद्धं तु निर्गुण्डीमूलं ज्वरहरं ततः ।
हस्ते बद्धं पलाशस्य अपामार्गस्य वा प्रिये ॥३५ ॥

मूलं सर्वज्वरहरं भूतप्रेतादिसम्भवम् ।
समभागं द्रवं चैव आर्द्रकं वासकं मधु ॥३६ ॥

ऐकाहिकं ज्वरं हन्ति भक्षणाच्च दिनत्रयम् ।
रविवारे समुत्पाट्य अपामार्गस्य मूलकम् ॥३७ ॥

सप्तसूत्रैः करे बद्ध्वा नित्यज्वरहरं तथा ।

## ॥अथ ऐकाहिकज्वरम् ॥

अथ निमन्त्रयेद् देवि शुष्कलाङ्गलमृत्तिकाम् ॥३८ ॥

तिलकं तत्प्रभातेन शय्यायां कारयेन्नरः ।
ऐकाहिकं ज्वरं तीव्रं नाशयेद् रविवासरे ॥३९ ॥
सहदेवाघृतं कर्णे लाङ्गलीमूलकं गले ।
बृहतीमूलकं वापि मूलं वाट्यालकं तथा ॥४० ॥
बद्ध्वा शिरसि सूत्रेण नानाज्वरविनाशनम् ।
यदा सरस्वतीतीरे अपुत्रा तापसी मृता ॥४१ ॥
तस्यै तिलोदकं दद्याद् मुञ्चत्यैकाहिको ज्वरः ।

## ॥अथ छेदनमन्त्रः ॥

बाणयुद्धे महाघोरे द्वादशार्कसमप्रभः ॥४२ ॥
जातोऽसौ सुमहावीर्यो मुञ्चत्यैकाहिको ज्वरः ।
लिखेदश्वत्थपत्रेण बाहौ मन्त्रं प्रधारयेत् ॥४३ ॥
ऐकाहिकं ज्वरं हन्ति पुरुषो दक्षिणे क्रमात् ।
समुद्रस्योत्तरे तीरे कुमुदो नाम वानरः ॥४४ ॥
ऐकाहिकं ज्वरं हन्ति लिखिते च ग्रहोदरे ।
लिखितं दृश्यते येन तस्य ज्वरं विनश्यति ॥४५ ॥
प्रभातसमये देवि मण्डं गोमूत्रकल्कं वै ।
पिबेत् तदर्धभागेन सन्निपातज्वरापहम् ॥४६ ॥
देवकाष्ठे च धन्याकं नागरं बृहतीद्वयम् ।
दद्यात् पाचनवत् पूर्वं सन्निपातज्वरापहम् ॥४७ ॥
शेफालिकात्वचं पूर्वमश्विन्या वटिकाकृतम् ।
अजालोमेन बध्नीयात् सन्निपातज्वरापहम् ॥४८ ॥

## ॥अथ बहुमूत्रचिकित्सा ॥

धात्रीफलस्य सरसं मधुना च पिबेत् सदा ।
बहुमूत्रक्षयं देवि क्षारं च वासकस्य वा ॥४९ ॥

## ॥अथ कासचिकित्सा॥

त्रिफला त्रिकटुश्चैव समभागेन चूर्णितम्।
मधुना सहपानञ्च दुष्टकासविनाशनम् ॥५०॥
घृतेन पाचयेन्मूलं पत्रं च वासकस्य च।
भक्षयेत् तद्दिनं यावत् कासश्वासक्षयो भवेत् ॥५१॥
पिप्पलीं देवदारुं च शुण्ठीचूर्णसमन्वितम्।
ऊर्द्ध्वं श्वासं सदा हन्ति पिबेदुष्णजलेन च ॥५२॥

## ॥अथातिसाररक्तातिसारचिकित्सा॥

तालमूलीं च मधुना समभागेन यः पिबेत्।
रक्तातिसारं क्षयं याति नारिकेलजलैस्तथा ॥५३॥
मूलानि सहदेवायाः कृत्वा च सप्तखण्डकम्।
रक्तसूत्रैः कटिं बद्ध्वा सर्वातीसारनाशनम् ॥५४॥

## ॥अथ यक्ष्मरोगचिकित्सा॥

नागकेसरमूले च मधुना सह संपिबेत्।
वासकस्य च मूलं वै व्यञ्जनैः क्षयरोगहा ॥५५॥
अशोकस्य च मूलानि अजाक्षीरेण भक्षयेत्।
क्षयं रोगं क्षयं कुर्यात् मूलं जीवेश्वरी मधु ॥५६॥
गवेधुकस्य मूलं च भक्षयेन्मधुना घृतैः।
पिप्पलीमूलकं वापि दुग्धेन क्षयरोगहा ॥५७॥

## ॥अथ नासारोगचिकित्सा॥

दूर्वादाडिमपुष्पेण आम्रातकहरीतकी।
सर्वं सम्पेषयेन्नस्ये नासारक्तस्रवापहा ॥५८॥

## ॥अथ दन्तरोगस्य चिकित्सा ॥

केशराजस्य मूलं च आर्द्रकैः सह धारयेत् ।
तदा न पतति दन्तो बकुलत्वचचर्वणात् ॥५९ ॥

बृहतीमूलकं देवि नीलकण्ठस्य मूलकम् ।
दन्तानां नाशयेद् रोगान् निर्विषं च दृढो भवेत् ॥६० ॥

काकजङ्घा शिग्रुमूलं मूलेन विधृते किल ।
चर्वणाद् दन्तरोगानां विनाशं च भवेत् प्रिये ॥६१ ॥

## ॥अथ प्रमेहचिकित्सा ॥

पीतं सारं गुडूच्यास्तु मधुना मेहनाशनम् ।
अजाजीं शृङ्गवेरं च दधिमण्डं च पाययेत् ॥६२ ॥

लवणेन समायुक्तं मूत्रकृच्छ्रविनाशनम् ।

## ॥शिरोरोगचिकित्सा ॥

दुग्धैः कृष्णतिलं पिष्ट्वा लेपं दद्याच्छिरोपरि ॥६३ ॥
शिरोव्यथा क्षयं याति गुडूचीमूलकेन वा ।

## ॥दद्रुरोगचिकित्सा ॥

स्वर्णशेफालिकामूलं पत्रं पिष्ट्वा तु काञ्जिकैः ॥६४ ॥
घर्षयित्वा च देहे च तल्लेपाद् दद्रुनाशनम् ।

## ॥अथ कुष्ठरोगचिकित्सा ॥

श्वेतापराजितामूलं पिष्टाल्लेपाच्च कुष्ठहा ॥६५ ॥

अथवा पारिभद्रस्य मूलं मामैर्वटीकृतम् ।
तैलेन पाचितं कृत्वा भक्षणात् कुष्ठनाशनम् ॥६६ ॥

घृतैरुष्णोदकैर्वाऽथ सर्वं कुष्ठविनाशनम् ।
निम्बत्वचदलानां च चूर्णमामलकस्य च ॥६७ ॥

प्रत्यहं भक्षयेद् यस्तु तस्य कुष्ठं विनश्यति ।
सोमराजस्य बीजानि नवनीतं च योजयेत् ॥६८ ॥

मधुना खादितानि स्युस्तस्य कुष्ठनिवारणम् ।

## ॥अथ विचर्चिकाचिकित्सा ॥

एरण्डं मूलकं पत्रं भृङ्गराजसमं तथा ॥६९ ॥

अनयोः काञ्जिकैः पिष्ट्वा लेपो विचर्चिकापहा ।

## ॥अथार्शरोगचिकित्सा ॥

पिप्पलीं च हरिद्रां च गोमूत्रेण समन्विताम् ॥७० ॥

प्रक्षिपेच्च गुदद्वारे अर्शांसि विनिवारयेत् ।
अभया नवनीतं च शर्करापिप्पलीयुतम् ॥७१ ॥

पानादर्शहरं स्याच्च नात्र कार्या विचारणा ।

## ॥अथ प्लीहाचिकित्सा ॥

प्रथमं मुखमध्ये तु भ्रष्टधान्यादिकं स्पृहा ॥७२ ॥

चित्रकं मूलकं पिष्ट्वा कृत्वा तु वटिकाद्वयम् ।
कदलीपक्वमध्ये तु भक्षणात् प्लीहानाशनम् ॥७३ ॥

## ॥अथ बिन्दुक्षयस्य ॥

घृतकुमारिकां पिष्ट्वा क्षीरेण यः पिबेन्नरः ।
बिन्दुस्रावं क्षयं कुर्याद् धात्री च निम्बपत्रकम् ॥७४ ॥

धात्रीं हरीतकीं चैव पुराणगुडसंयुताम् ।
भक्षयेच्छयनैर्बिन्दुस्रावस्य च क्षयो भवेत् ॥७५ ॥

यदि बद्धं भवन्तीह चरणं परिलेपनात् ।
केतकीपुष्पमादाय दाडिमीत्वचमूलकम् ।।७६ ।।
कृष्णगोभवभाज्यं च भक्षयेद् भृगुवासरे ।
बिन्दुस्रावं क्षयं कुर्याद् बिन्दुमूलार्कमूलकम् ।।७७ ।।
अश्विन्यां वटिकां कृत्वा भक्षणान्नात्र संशयः ।

## ।।अथाजीर्णचिकित्सा ।।

अपामार्गस्य मूलं च समुद्रलवणान्वितम् ।।७८ ।।
आस्वादितमजीर्णस्य शूलस्यापि विमर्दनम् ।
रक्तोत्पलमपामार्गं शोभाञ्जनवचा यथा ।।७९ ।।
लवणेन समं भक्षेद् दृढाजीर्णं च नश्यति ।
उष्णोदकैः समं पिष्ट्वा मांसांश्च कटुरोहिणीम् ।।८० ।।
कूष्माण्डनाडिकाक्षारं सगोमूत्रस्य भावितम् ।
जलैः पिष्ट्वा हरिद्रां च सिद्धं चैवाननेन हि ।।८१ ।।

## ।।निद्रामोक्षोपायः ।।

महिषश्रृङ्गकूष्माण्डं पिष्ट्वा तत्समभागकम् ।
लेपयेत् कुक्षिपृष्ठे च तस्य निद्राक्षयो भवेत् ।।८२ ।।
शोभाञ्जनस्य बीजानि नीलोत्पलस्य पुष्पकम् ।
समं नागेश्वरं पिष्ट्वा निद्रां मुञ्चति चाञ्जनात् ।।८३ ।।
बृहतीमूलकं पिष्ट्वा मधु चाज्यसमन्वितम् ।
यस्य नेत्राञ्जनं दद्याद् निद्रां च नाशयेद् ध्रुवम् ।।८४ ।।

## ।।निद्रालुः ।।

श्मशानमुत्क्षिपेद् गेहे कृष्णगोमूत्रमृत्तिकाम् ।
एवं निद्रावती माया संक्षेपात् कथयामि ते ।।८५ ।।

## ॥अथादृश्योपायकरणम् ॥

कथयाम्यधुना भद्रे अदृश्यभावमौषधम् ।
दण्डकाकस्य रुधिरं पित्तं च जम्बुकस्य च ॥८६ ॥
भल्लस्य पेचकस्यापि वामदक्षिणयोरपि ।
एषां पिष्ट्वा समं चैव वटिकां कारयेत् ततः ॥८७ ॥
छायायां कारयेच्छुष्कमञ्जनं तत्प्रदापयेत् ।
यावन्मात्रं हितं नेत्रेऽदृश्यो भवति सुन्दरि ॥८८ ॥
पादयोः स्तनयोरेवं युक्तियोज्यं प्रयोजयेत् ।
चिताग्निः खञ्जरीटस्य विष्ठा फेणं हयस्य च ॥८९ ॥
शोभाञ्जनमयं नेत्रे नर एतस्य धूपितः ।
अदृश्यस्त्रिदशैः सर्वैः किं पुनर्मनुजैः प्रिये ॥९० ॥

## ॥अथादृश्यनिधिदर्शनोपायः ॥

कनकधुस्तूरकं मूलं तथा सप्तदलस्य च ।
मुक्तकेशेन चोत्पाट्य मूलं चैव बलाहकम् ॥९१ ॥
तावन्मुखेन संधृत्य सर्वं संदृश्यते नरैः ।
पातालतलपर्यन्तं यत्र यत्र स्थितो निधिः ॥९२ ॥

## ॥नष्टधातुपुनर्भवोपायः ॥

धातुर्नष्टं प्रवक्ष्यामि स्त्रीणां योगचिकित्सकम् ।
यथा योज्यं च पुरुषे श्रृणु तामौषधिं प्रिये ॥९३ ॥
ज्योतिष्मती जवापुष्पं पिष्ट्वा दूर्वादलैः सह ।
काञ्जिकैर्भक्षयेद् वापि नष्टधातुः पुनर्भवेत् ॥९४ ॥
मूलं दण्डोत्पलं वापि काञ्जिकैः सहितं पिबेत् ।

## ।।भर्तुर्वशीकरणम्।।

केशरकैर्निम्बं च पङ्कजं च निरामयम्।।९५।।

सधातकीफलं पुष्पं जम्बुत्वग् लोध्रसंयुतम्।
पिष्ट्वा मधुयुतं लेपाद् वृद्धोऽपि लभते वयः।।९६।।

पिष्ट्वा लेपो वराङ्गे च इत्युक्तं सहदेवकैः।
वृद्धा नवप्रसूता या दुर्भगा सुभगा भवेत्।।९७।।

निम्बकाष्ठेन मधुना धूपयित्वा भगं स्त्रियः।
सुभगाऽसौ भवेन्नारी पतिर्दासो भविष्यति।।९८।।

खञ्जरीटस्य मांसं च ऋतुकाले दिनत्रयम्।
स्वयोनिलेपनाद् देवि पुरुषो दासतामियात्।।९९।।

माहिषं नवनीतं च कुष्ठं च मधुयष्टिका।
भगलेपेन सौभाग्यं पतिर्दासो भविष्यति।।१००।।

गोरोचना महादेवि ऋतुशोणितभाविता।
तत्कृतं तिलकं यस्य स नरोऽयं निरीक्षते।।१०१।।

तं च सर्वं वशं कुर्यान्नात्र कार्या विचारणा।
सैन्धवं लवणं देवि सौवीरं मत्स्यपित्तकम्।।१०२।।

मधुसर्पिःसितायुक्तं स्त्रीणां तद्भगलेपनम्।
यः पुमान् मैथुनं गच्छेन्नान्यां नारीं गमिष्यति।।१०३।।

## ।।अथ स्तनोत्थानम्।।

श्रीपर्णीक्वाथकल्काभ्यां तैलं सिद्धं तिलोद्भवम्।
तत्तैलतोलकेनैव स्तनस्योपरि दापयेत्।।१०४।।

काठिन्यं वर्धतां याति पतितं चोत्थितं भवेत्।
वृद्धा च कन्यका वापि तस्या जातौ पयोधरौ।।१०५।।

श्वेताम्रसैवकुसुमं कृष्णधेनुपयोऽन्वितम् ।
षिष्ट्वा स्तनयुगे दद्याद् भवेत् पीनपयोधरा ॥१०६ ॥

## ॥अथ गर्भोत्पादनचिकित्सा ॥

बदरीमूलकं घोलैर्जयन्तीमूलदुग्धकैः ।
मायूरकूलकलिकामृतुस्नानान्तरं पिबेत् ॥१०७ ॥

मातुलुङ्गस्य बीजानि क्षीरेण सह पेषयेत् ।
घृतेन सह संयोगात् पाययेत् पुत्रकाङ्क्षिणीम् ॥१०८ ॥

मूलं गोक्षुरकं चैव चर्चित्वा पर्वतात्मजे ।
नारी पुष्पदिने पीत्वा गोक्षुरोलेपवासितम् ॥१०९ ॥

श्वेतार्कमूलं संगृह्य विधिना पूर्वसंस्थितम् ।
ऋतुकाले कटौ बद्ध्वा नारी गर्भधरा भवेत् ॥११० ॥

नारी पुत्रं च लभते ह्यवश्यं नात्र संशयः ।

## ॥अथ पुष्पगर्भस्थापनम् ॥

पलाशस्य च बीजानि क्षौद्रेण सह पेषयेत् ॥१११ ॥

रजस्वलापि पीत्वा स्यात् पुष्पगर्भविवर्जिता ।

## ॥लेपनादि ॥

अतसीमासगोधूमचूर्णं कृत्वा तु पिप्पली ॥११२ ॥

घृतेन लेपयेद् गात्रमिति सार्धं विचक्षणः ।

कन्दर्पसदृशो मर्त्यो भवेन्नित्यं विलेपनात् ॥११३ ॥

## ॥दुर्गन्धहा ॥

तिलं सर्षपसंयुक्तं हरिद्रां मेथिकां तथा ।
पिष्ट्वा तल्लेपयेद् गात्रं गात्रगन्धो विनश्यति ॥११४ ॥

तापहरश्चानुदिनं त्वग्दोषं काकजङ्घया।
आर्द्रकस्य च पुष्पाणि तुम्बीफलयुतानि तु ॥११५ ॥
सलोध्रानि च तल्लेपाद् देहदुर्गन्धमाहरेत् ॥११६ ॥

## ॥अथ चलितगर्भस्थापनम् ॥

कुलालहस्तोद्धृतकर्दमस्य छागीपयःक्षौद्रयुतस्य पानात्।
गर्भसृतिं शूलमथो निवार्य करोति गर्भं प्रकृतं हठेन ॥११७ ॥

## ॥अथ वैवर्णहान्युपायः ॥

कृष्णतिलकृष्णजीरकैः सिद्धार्थकैः समभागेन
पिष्ट्वा मुखविवर्णं हरेत् ॥११८ ॥

## ॥रक्तस्त्रावहा ॥

आम्रस्य बीजशस्यं च सुगन्धि कदलीफलम्।
सन्दग्धं तु पिबेद् वापि योनिरक्तस्त्रवापहा ॥११९ ॥
सकाञ्जिकं यवक्षारं प्रस्थं ज्योतिष्मतीफलम्।
दूर्वां पिष्ट्वा च संप्राश्य वनिता वर्तुला भवेत् ॥१२० ॥
कदलीमूलकं चैव पिष्ट्वा तण्डुलवारिणा।
स्त्रीणां चैव महादेव रक्तस्त्रावं च धारयेत् ॥१२१ ॥
दात्यूहभक्षणं स्त्रीणां प्रकारेण यथा तथा।
सूतिका सकला रोगाः शाम्यन्ति नात्र संशयः ॥१२२ ॥

## ॥स्तनदुग्धकरम् ॥

भूमिकूष्माण्डमूलं वै शालिचूर्णमथापि वा।
सप्ताहं दुग्धपीतं स्यात् स्त्रीणां बहुपयो भवेत् ॥१२३ ॥

## ।।अथ दम्पतीप्रीतिकरणम् ।।

ब्रह्मयष्टि वचामुस्तं मधुना सह पेषयेत् ।
अङ्गलेपाच्च युवती नान्यं भर्तारमिच्छति ।।१२४ ।।

ऋतुकाले महादेवि शृणुष्व पर्वतात्मजे ।
निजशुक्रं गृहीत्वा तु वामहस्तेन यः पुमान् ।।१२५ ।।

कामिन्याश्चरणं लिम्पेत् तस्य स्त्रियः प्रियाः सदा ।
नीलोत्पलसमं पूगं प्रदद्याच्चापरान्वितम् ।।१२६ ।।

यस्य मनोऽभिलाषी सा वशं याति वराङ्गना ।
हयनाम्ना च मञ्जिष्ठा मालतीकुसुमानि च ।।१२७ ।।

श्वेतसर्षपकर्पूरलिप्तलिङ्गः स्त्रियः प्रियः ।
पञ्चरक्तानि पुष्पाणि गृहीत्वा यानि तानि च ।।१२८ ।।

तण्डुलानि प्रियामङ्गे लेपयेत् त्वेकयोगतः ।
अनेन लिप्तलिङ्गस्तु कामिनीरसकृद् भवेत् ।।१२९ ।।

कपित्थरसकल्काभ्यां पिप्पली मधुयष्टिका ।
मधुना च समं पिष्ट्वा लेपनाच्च वराङ्गना ।।१३० ।।

दम्पती प्रीतिमाप्नोति प्राणान्ते नापगच्छति ।
सैन्धवं च महादेवि पारावतमूलं मधु ।।१३१ ।।

एभिस्तु लिङ्गलेपैस्तु कामिनीवशकृद् भवेत् ।
दम्पत्योः प्रीतिजननं लिङ्गवराङ्गयोरपि ।।१३१ ।।

कुर्याद् वशीकृतं यस्य धूपैश्च तिलकं तथा ।

## ।।अथ जगद्वशीकरणम् ।।

मनःशिला पलाशं च सगोरोचनकुङ्कुमम् ।।१३३ ।।

एभिश्च तिलकं कुर्याज्जगद्वशं न संशयः ।
सहदेवा भृङ्गराजसितापराजिता वचा ।।१३४ ।।

तेनैव तिलकं कुर्यात् त्रैलोक्यं वशमानयेत् ।
गोदन्तं हरितालं च संयुक्तं काकजङ्घया ।।१३५ ।।

कृत्वा चूर्णं यः शिरसि दीयते तद्वशं नयेत् ।
श्वेतापराजितामूलं पिष्ट्वा रोचनया सह ।।१३६ ।।

यं पश्येत् तिलकैरेतैर्वशीकुर्यान्न संशयः ।

## ।।अथ वीर्यकरणम् ।।

चूर्णं विदार्याः सकृत् स्वरसेनैव भावितम् ।।१३७ ।।

शर्करामधुसर्पिभ्यां युक्तं लिप्त्वा पयः पिबेत् ।
शतमशीतिवर्षेण युवैव रमते जरा ।।१३८ ।।

सर्पिःक्षौद्रयुतं लिप्त्वा स गच्छेत्तद्दशाङ्गनाः ।
श्वेतवाट्यालमूलं च श्वेतचामरसंयुतम् ।।१३९ ।।

करवीरसमे कट्यां धारणाद् बिन्दुरक्षणम् ।
बीजं सप्तदलं चैव तथा श्वेतापराजिताम् ।।१४० ।।

भृङ्गराजसमैः पिष्ट्वा वटिकां कारयेत् ततः ।
मस्तके यदि वा स्कन्धे धारयेद् बाहुमूलतः ।।१४१ ।।

तदा न पतते बिन्दुर्यदि योनिशतं व्रजेत् ।
महासौगन्धिकं मूलं महास्तम्भं कट्योः स्थितम् ।।१४२ ।।

पुत्रदण्डीसिफारम्भे धृत्वा शुक्रस्य स्तम्भनम् ।
छत्राकारं वंशमूलं लोहितं दृश्यते यदि ।।१४३ ।।

तन्मूलं लेपनाल्लिङ्गे बलहानिर्न जायते ।
शकुनस्यान्तरे क्षिप्ता हस्तिवार्ताकमूलकम् ।।१४४ ।।

दग्ध्वा तं संकुलं तत्तु मूलं कृत्वा पृथग् लता।
शकुनं भक्षयोगेन ख्यातं मूलं ततः परम् ॥१४५॥

पृथुकेन्द्रासना चैव भक्षणीया ततः पुमान्।
शतं गत्वा तु नारीणां न संक्षयति कुत्रचित् ॥१४६॥

कृष्णमार्जारसव्याघ्रसम्भवां स्थिरतोऽसमे।
दक्षिणी जायते तस्य बीजस्य न च्युतिर्भवेत् ॥१४७॥

## ॥अथ वृश्चिकहरणम्॥

उष्णगव्यघृतं चापि सैन्धवेन समन्वितम्।
वृश्चिकस्य विषं हन्ति लेपोऽयं पर्वतात्मजे ॥१४८॥

## ॥अथ कुक्कुरविषहरणम्॥

शिरीषकस्य बीजं वै स्नुहीक्षीरेण पेषितम्।
तल्लेपेन महादेवि न स्यात् कुक्कुरजं विषम् ॥१४९॥

## ॥अथ प्रकीर्णम्॥

धातकीं सोमराजीं च क्षीरेण सह पेषयेत्।
दुर्बलं च भवेत् स्थूलो नात्र कार्या विचारणा ॥१५०॥

या गौर्द्वेष्टि स्वकं वत्सं तस्यै देयं प्रयत्नतः।
लवणेन समायुक्तं तस्या वत्सः प्रियो भवेत् ॥१५१॥

शूलोऽस्ति कण्ठबन्धं वै महिषाणां गवां तथा।
कृमिजालं पातयति सकलं नात्र संशयः ॥१५२॥

विष्णुक्रान्ता मूलसिता कर्णे बद्धा तु धारयेत्।
पट्टसूत्रे महादेवि कृमिकादीन् विनाशयेत् ॥१५३॥

कृष्णा चतुर्दशी कट्यां बद्धमूलं समाहितम् ।
हरेल्लाङ्गलिकामूलं सहे च मकरादिकम् ॥१५४ ॥

## ॥अथ स्त्रीवशीकरणम् ॥

पुष्ये पुष्पं समुद्धृत्य भरण्यां तु फलं तथा ।
शाखां चैव विशाखायां हस्ते पत्रं तथैव च ॥१५५ ॥

मूलं मूले समुद्धृत्य कृष्णोन्मत्तस्य तत्क्रमात् ।
पिष्ट्वा कर्पूरसंयुक्तं कुङ्कुमं रोचनासमम् ॥
तिलकेन वशं याति यदि साक्षादरुन्धती ॥१५६ ॥

## ॥अथ राजवशीकरणम् ॥

गोरोचनाकुङ्कुमकर्पूरैर्यस्य भूर्ज्जे संलिप्य घृतमधुमध्ये
स्थापयेद्रक्तपुष्पेण राजा वश्यो भवति ॥
त्रैलोक्यविजयापत्रं सबीजं घृतभर्जितम् ॥१५७ ॥

त्रिकटुत्रिफलाकुष्ठशृङ्गी सैन्धवधान्यकम् ।
शठी तालीसपत्रं च कट्फलं नागकेशरम् ॥१५८ ॥

अजमोदाजबालीं च यष्टिमधुकमेव च ।
मेथीजीरकयुग्मं च गृहीत्वा समभागतः ॥१५९ ॥

यावन्त्येतानि चूर्णानि तावन्मात्रं यदौषधम् ।
घृतेन मधुना मिश्रं मोदकं परिकल्पयेत् ॥१६० ॥

त्रिसुगन्धिसमायुक्तं कर्पूरेणाधिवासयेत् ।
स्थापयेद् घृतभाण्डेन श्रीमन्मदनमोदकम् ॥१६१ ॥

## ॥अथ षण्डत्वहरणम् ॥

हैमे तथा रौप्यमये च पात्रे प्रक्षाल्य मुक्ताफलमेकमेव ।
पीत्वा पुमानथवा च नारी षण्डत्वदोषं सहसा निहन्ति ॥१६२ ॥

## ।।अथ डाकिन्यादिरक्षा ।।

श्वेतापराजितामूलं पत्रं निम्बरसेन तु ।
तस्याः पानाद् डाकिनीनां तथैव ब्रह्मरक्षसाम् ।
मोक्षः स्यान्मधुसार्धेन कथितं ते समाहितम् ।।१६३ ।।

।। इति सर्वविजयितन्त्रम् ।।



# गुप्तसाधनतन्त्रम्

## ॥अथ प्रथमः पटलः ॥

॥ॐ नमो दुर्गायै ॥

कैलासशिखरे रम्ये नानारत्नोपशोभिते ।
तं कदाचित् सुखासीनं भगवन्तं त्रिलोचनम् ॥
पप्रच्छ परया[१] भक्त्या देवी लोकहिते रता[२] ॥१ ॥

श्रीदेवी उवाच—

देवदेव ! महादेव ! लोकानुग्रहकारक ।
कुलाचारस्य माहात्म्यं पुरैव[३] सूचितं त्वया[४] ॥२ ॥

तत् कथं गोपितं देव मम प्राणेश्वर ! प्रभो ।
कथयस्व महाभाग[५] यद्यहं तव वल्लभा ॥३ ॥

श्रीशिव उवाच—

श्रृणु देवि ! प्रवक्ष्यामि सारात्सारं[६] परात्परम् ।
तव स्नेहान्महादेवि ! दासोऽस्मि तव सुन्दरि ॥४ ॥

तत्कथां[७] कथयिष्यामि सावधानाऽवधारय ।
कुलाचारं महाज्ञानं गोप्तव्यं पशुसङ्कटे ॥५ ॥

प्रगोप्तव्यं महादेवि ! स्वयोनिरिव पार्वति ।
वेदागमपुराणानि वेदशास्त्राणि पार्वति ॥६ ॥

एतन्मध्ये सारभूतं कुलाचारं सुदुर्लभम् ।
वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ॥७ ॥

---

१.विनया - ग.। २.लोकहिताय वै-क.ग.। ३.पूर्वैव-ख.। ४.मया-ग.। ५.महादेव- क.।
६.सारात्सारतरं परम्-ग.,प्रिये-ख.। ७.तत्सर्वं-क.ख.ग.।

कुलाचारस्य माहात्म्यं वर्णितुं नैव शक्यते।
किञ्चिन्मया[१] तु चापल्यात् कथयामि श्रृणुष्व मे ॥८॥
शक्तिमूलं जगत्[२] सर्वं शक्तिमूलं परन्तपे[३]।
शक्तिमाश्रित्य निवसेद् यत्र कुत्राश्रमे वसन् ॥९॥
साधकस्याऽर्चितां शक्तिं साधकज्ञानकारिणीम्।
इह लोके सुखं भुक्त्वा देवीदेहे प्रलीयते ॥१०॥
साधकेन्द्रो महासिद्धिं लब्ध्वा याति हरेः पदम्।
पञ्चाचारेण देवेशि! कुलशक्तिं प्रपूजयेत् ॥११॥
नटी कापालिकी वेश्या रजकी नापिताङ्गना।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ॥१२॥
मालाकारस्य कन्या च नव कन्याः प्रकीर्तिताः।
विशेषवैदग्ध्ययुताः सर्वा एव कुलाङ्गनाः ॥१३॥
रूपयौवनसम्पन्ना शीलसौभाग्यशालिनी[४]।
पूजनीया प्रयत्नेन ततः [५]सिद्धिर्भवेद् ध्रुवम्॥
सत्यं सत्यं महादेवि! सत्यं सत्यं न संशयः ॥१४॥

॥ इति गुप्तसाधनतन्त्रे पार्वतीशिवसंवादे प्रथमः पटलः ॥

■

१. किञ्चिन्मया तु-घ.। २. जपं-क.ग.। ३. परन्तपः- क.ख.ग.।
४. दायिनी-ख.। ५. सिद्धो भवेद्-क.ख.ग.।

## ॥अथ द्वितीयः पटलः॥

श्रीपार्वती[१] उवाच—

बाधते[२] मां कृपानाथ मुहुः प्रष्टुं यदुत्सहे।
स्त्रियः स्वभावचपला न शङ्केऽहं पुनः पुनः॥१॥

यदुक्तं कृपया नाथ! रहस्यं परमाद्भुतम्[३]।
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो गुरुर्गतिः[४]॥२॥

[५]गुरुस्तीर्थं गुरुर्यज्ञो गुरुर्दानं[६] गुरुस्तपः।
गुरुरग्निर्गुरुः सूर्यः सर्वं गुरुमयं जगत्॥३॥

किमनेन[७] किं तपसा किमन्यतीर्थसेवया।
श्रीगुरोरर्चितो[८] येन [९]पादो तेनार्चितं जगत्॥४॥

ब्रह्माण्डभाण्डमध्ये तु यानि तीर्थानि सन्ति वै।
गुरोः पादोदके[१०] तानि निवसन्ति हि सन्ततम्॥५॥

गुरोः पादोदकं येन[११] शिरसा पुण्यभाग्[१२] भवेत्।
सर्वतीर्थजलं[१३] पुण्यं लभते नात्र संशयः॥६॥

[१४]इति तस्य गुरोर्ध्यानं तत्त्वतः श्रोतुमुत्सहे।
लब्धत्वदर्धदेहां मां कथं वञ्चयसि प्रभो॥७॥

मयि स्नेहानुबन्धोऽस्ति यदि तन्मे प्रकाशय॥८॥

---

१. श्रीदेवी-घ.। २. त्रिपुरानादं-ख.क.। ३. श्रीशिव उवाचेति - घ. अधि.।
४. महेश्वरः- क.ख.ग.घ., गुरुरेव परं ब्रह्म तस्मात् संपूजयेन्नरः- घ.।
५. गुरुः कर्ता हर्ता गुरवेऽस्तु नमो नमः- ख. अधि.। ६. गुरुर्ज्ञानम्- क.ख., ध्यानम्- न.घ.।
७. किं दानेन- क.ख.। ८. अर्चितौ- क.ख.। ९. पादौ- क.ख.घ.।
१०. पादौ दैवतानि- घ.। ११. यस्तु शिरसा धारयेद् यदि- ग.। १२. पुण्यवान् - घ.।
१३. श्रीदेव्युवाच-घ. अधि.। १४. सर्वतीर्थकृतं- क., सर्वतीर्थज-ख.।

[१]श्रीशङ्कर उवाच—

न वञ्चयामि देवि ! त्वां प्राणेभ्योऽपि गरीयसीम् ।
स्त्रीणां स्वभावचापल्याद् गोपितं न प्रकाशितम् ॥९ ॥
कथयामि तव [२]स्नेहाच्छ्रीगुरोर्ध्यानमुत्तमम् ।
[३]प्रकाश्यञ्च कुलीनेषु न प्रकाश्यं पशौ[४] क्वचित् ॥१० ॥
[५]कुलं शक्तिः समाख्याता अकुलः शिव उच्यते ।
तस्यां लीनो भवेद् यस्तु स कुलीनः प्रकीर्तितः ॥११ ॥
कुलवृक्षान्नमस्कृत्य गुरुं ध्यायेत् पराम्बुजे ।
शरच्चन्द्रसमाभासं शरत्पङ्कजलोचनम् ॥१२ ॥
[६]ईषद्धास्यं शारदीयपूर्णेन्दुसदृशाननम् ।
दिव्यस्त्रगम्बरधरं[७] दिव्यगन्धानुलेपनम् ॥१३ ॥
सुरक्तशक्ति संयुक्तवामभागमनोहरम् ।
वराभयकराम्भोजं सर्वलक्षणलक्षितम् ॥१४ ॥
सहस्रारे महापद्मे गुरुं शिरसि चिन्तयेत् ।
एतत्ते कथितं देवि ! श्रीगुरोर्ध्यानमुत्तमम् ॥१५ ॥
गोपनीयं प्रयत्नेन न प्रकाश्यं कदाचन ।
इति ते कथितं सर्वं तव स्नेहेन सुन्दरि ॥१६ ॥
किमन्यत् संप्रवक्ष्यामि कथयस्व शुचिस्मिते ॥१७ ॥

[८]श्रीपार्वती उवाच—

गुरोर्ध्यानं श्रुतं नाथ सर्वतन्त्रेषु गोपितम् ।
स्त्रिया दीक्षा शुभा प्रोक्ता सर्वकामफलप्रदा ॥१८ ॥

---

१. श्रीशिव-घ. । २. स्नेहात् सद्गुरो-ग. । ३. न प्रकाश्यं-घ. ।
४. पशोः- ग. । ५. अयं श्लोकः क. ख. ग. नास्ति । ६. शरच्चन्द्रमहद्धास्य-क. ।
७. रत्नाम्बरधरं-कं., दिगम्बरधरं नित्यं- ख. । ८. श्रीदेवी-घ. ।

बहुजन्मार्जितात् पुण्याद् बहुभाग्यवशाद् यदि ।
स्त्रीगुरुर्लभ्यते नाथ तस्य ध्यानं तु कीदृशम् ।।१९ ।।
[१]कुलीनस्त्रीगुरोर्ध्यानं श्रोतुमिच्छामि साम्प्रतम् ।
कथयस्व महाभाग यद्यहं तव वल्लभा ।।२० ।।

श्रीशङ्कर उवाच—

श्रृणु पार्वति[२] ! वक्ष्यामि तव स्नेहपरिप्लुतः ।
रहस्यं स्त्रीगुरोर्ध्यानं यत्र ध्येया[३] च सा गुरुः ।।२१ ।।
सहस्रारे महापद्मे [४]किञ्जल्कगणशोभिते ।
प्रफुल्लपद्मपत्राक्षीं घनपीनपयोधराम् ।।२२ ।।
सहस्रवदनां[५] नित्यां क्षीणमध्यां शिवां गुरुम् ।
पद्मरागसमाभासां रक्तवस्त्रसुशोभनाम् ।।२३ ।।
रत्नकङ्कणपाणिं च रत्ननूपुरशोभिताम् ।
[६]शरदिन्दुप्रतीकाशवक्त्रोद्भासितकुण्डलाम् ।।२४ ।।
स्वनाथवामभागस्थां वराभयकराम्बुजाम् ।
इति ते कथितं देवि ! स्त्रीगुरोर्ध्यानमुत्तमम् ।।२५ ।।
गोपनीयं प्रयत्नेन न प्रकाश्यं कदाचन ।।२६ ।।

।। इति गुप्तसाधनतन्त्रे पार्वतीशिवसंवादे द्वितीयः पटलः ।।२ ।।



---

१. कुत्र वा सा गुरुर्ध्येया- क.ख.ग.।  २. देवि प्रवक्ष्यामि- क.ख.ग.घ.।
३. ध्येया- घ.।  ४. गुण-ग.।  ५. प्रसन्नवदनां क्षीणमध्यां ध्यायेच्छिवां गुरुम्- क.ख.ग.।
६. स्थलपद्मप्रतीकाशपादद्वन्द्वसुशोभिताम्- क.ख.ग.अधि.।

## ॥अथ तृतीयः पटलः॥

श्रीपार्वती उवाच—

देवदेव महादेव [1]भक्तानां मुक्तिदायक।
तव प्रसादात् प्राणेश श्रुतं[2] साधनमुत्तमम्॥१॥
[3]पञ्चाङ्गोपासनं देव रहस्यादिपुरस्क्रियाम्।
तत्सर्वं ब्रूहि मे देव यदि स्नेहोऽस्ति मां प्रति॥२॥

श्रीईश्वर[4] उवाच—

[5]दिवारात्रिप्रभेदेन जपेन्मन्त्रमनन्यधीः।
न्यूनाधिकं [6]जपेन्नेव दूषणं नास्ति पार्वति॥३॥
पश्चाचारेण देवेशि! सर्वं कार्यं जपादिकम्।
स्वेच्छाचारोऽत्र गदितो महामन्त्रस्य साधने॥४॥
प्रत्यहं परमेशानि एकैकं विप्रभोजनम्।
प्रातःकालं समारभ्य जपेन्मध्यन्दिनावधि॥५॥
पूजां कृत्वा साधकेन्द्रः पुनर्जपनमाचरेत्।
सायं सन्ध्यां ततः कृत्वा भोजनं स्वेच्छया नयेत्॥६॥

---

१. संसारार्णवतारक- घ.। २. परं- क.।

३. वर्षपुरस्क्रियां नाथ न श्रुतं पूर्वसूचितम्।
इदानीं श्रोतुमिच्छामि यदि— क. ख. ग.।

४. श्रीशिव उवाच— क. ख. ग.।

५. शृणु पार्वति वक्ष्यामि लोकानां हितकारिणि।
पृष्टं त्वयोत्तमं प्राज्ञे सारात्सारतरं प्रिये॥
यत्कृत्वा देवदेवेशि सर्वसिद्धिमुपालभेत्।
विधानं शृणु वक्ष्यामि सावधानाऽवधारय॥
महाविषुवमारभ्य शतलक्षं जपेत्प्रिये॥— क. ख. ग. अधि.।

६. जपेनापि— क. ख. ग.।

भक्षन्[१] ताम्बूलमत्स्यांश्च भक्षद्रव्यान्[२] यथारुचि ।
भुञ्जानो वा हविष्यान्नं शाकं यावकमेव वा ॥७ ॥

एवं कृत्वा साधकेन्द्रो रात्रौ जपनमाचरेत् ।
गते तु प्रथमे यामे तृतीयप्रहरावधि ॥८ ॥

स्ववामे शक्तिं संस्थाप्य जपेन्मन्त्रमनन्यधीः ।
शक्तियुक्तो भवेन्मर्त्यः[३] सिद्धो[४] भवति नान्यथा ॥९ ॥

कुलशक्तिं विना देवि यो जपेत् स तु पामरः ।
सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ॥१० ॥

पुनश्च विषुवे चैव पूजयेद् विभवावधि ।
कुमारीं पूजयित्वा तु भोजयेद् विधिपूर्वकम् ॥११ ॥

शतमष्टोत्तरं चैव ब्राह्मणान् भोजयेत् ततः ।
शक्तिपूजां ततः कृत्वा भोजयेच्च यथाविधि ॥१२ ॥

गुरवे दक्षिणां दद्यात्[५] स्वर्णं[६] वस्त्रसमन्वितम् ।
यद् यदिष्टतमं लोके गुरवे तन्निवेदयेत् ॥१३ ॥

गुरुसन्तोषमात्रेण किं न सिध्यति भूतले ।
गुरुरेव परं ब्रह्म नास्ति तत्त्वं गुरोः परम् ॥१४ ॥

एवं कृते मन्त्रसिद्धिर्भवत्येव न संशयः ।
सर्वसिद्धीश्वरो भूत्वा विचरेद् भैरवो यथा ॥१५ ॥

स धन्यः स च विज्ञानी शिवतुल्यो न संशयः ॥१६ ॥

॥ इति गुप्तसाधनतन्त्रे पार्वतीसंवादे तृतीयः पटलः ॥

---

१. भक्षण- क.। २. भक्ष्यद्रव्यं-क., भक्षद्रव्यं यथारुचि-ख.ग.। ३. मन्त्रः- ग.।

४. सिद्धिर्भवति-क.। ५. स्वर्णं-क.। ६. वस्त्रसमन्विताम्- क.ग.।

## ॥अथ चतुर्थः पटलः ॥

श्रीपार्वती उवाच—

देवदेव महादेव ! संसारार्णवतारक ।
अतिशीघ्रं फलं देव केनोपायेन लभ्यते ॥१ ॥

श्रीशिव[1] उवाच—

श्रृणु पार्वति वक्ष्यामि अतिगुप्ततरं[2] महत् ।
प्रकाशात् सिद्धिहानिः स्यात् तस्माद् यत्नेन गोपयेत् ॥२ ॥

स्वशक्तिं परशक्तिं वा दीक्षितां यौवनान्विताम् ।
विदग्धां शोभनां शय्यां[3] घृणालज्जाविवर्जिताम् ॥३ ॥

तामानीय साधकेन्द्रो दद्यात् पाद्यादिकं शुभम् ।
पञ्चाचारेण[4] तां शक्तिं पूजयित्वा यथाविधि ॥४ ॥

शतं[5] शीर्षे शतं भाले शतं सिन्दूरमण्डले ।
शतं मुखे शतं कण्ठे शतं हृदयमण्डले ॥५ ॥

शतयुग्मं स्तनद्वन्द्वे शतं नाभौ जपेत् सुधीः ।
योनिपीठे शतं जप्त्वा साधकः स्थिरमानसः ॥६ ॥

एवं सहस्रं[6] संजप्य देवीं[7] तत्र विचिन्तयेत् ।
स्वयं शिवस्वरूपश्च[8] चिन्तयेत् साधकोत्तमः ॥७ ॥

शिवमन्त्रेण देवेशि ! स्वलिङ्गं पूजयेदथ ।
ताम्बूलं तन्मुखे दत्वा[9] साधको हृष्टमानसः ॥८ ॥

---

१.श्रीशङ्कर उवाच-च.। २.अतिगुह्यतरं-च.।
३.पीनाम्-क.,स्वच्छां-ख.घ.,स्वस्थां- ग.च.। ४.पञ्चामृतेन-क.।
५.शतं भाले च शीर्षे च- क.ग.। ६.सन्ध्यां संजप्त्वा- क.ख.।
७.देवीरूपा-ख., देवीरूपं- क.ग.। ८.शिवस्वरूपं च-क.ग.च., देहश्च रूपश्च-ख.।
९.दद्यात्- क.।

तदनुज्ञां[१] समादाय योनौ लिङ्गं विनिक्षिपेत् ।
धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा ॥९ ॥

सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ।
स्वाहेत्यनेन मन्त्रेण हुनेत् सर्वसमृद्धये ॥१० ॥

ततो जपेत् सहस्रं वै शक्तियुक्तो भवेन्नरः ।
शतं वापि प्रजप्तव्यं ततो न्यूनं न कारयेत् ॥११ ॥

पूर्णाहुतिं ततो दद्यान्मन्त्रेणानेन साधकः ।
प्रकाशाकाशमन्त्राभ्यामेव[२] लक्षोन्मनीस्रुचा ॥१२ ॥

[३]धर्माधर्मकलास्नेहपूर्णमग्नौ[४] जुहोम्यहम् ।
स्वाहेत्यनेन मन्त्रेण पूर्णाहुतिं समाचरेत् ॥१३ ॥

शुक्रोत्सारणकाले च [५]देव्यै शुक्रं समर्पयेत् ।
एवं कृते मन्त्रसिद्धिर्नात्र कार्या विचारणा ॥१४ ॥

यं यं प्रार्थयते कामं तं तं प्राप्नोति निश्चितम् ।
रोगी रोगात् प्रमुच्येत[६] धनेन च धनाधिपः ॥१५ ॥

वायुतुल्यबलो लोके दुर्जयः शत्रुमर्दनः ।
कामतुल्यश्च नारीणां रिपूणां शमनोपमः ॥१६ ॥

एतत्कल्पेन देवेशि ! किं न सिध्यति भूतले ।
अष्टैश्वर्यमवाप्नोति[७] स एव श्रीसदाशिवः[८] ॥१७ ॥

॥इति गुप्तसाधनतन्त्रे पार्वतीशिवसंवादे चतुर्थः पटलः ॥

---

१. तस्याज्ञां-ख.। २. हस्ताभ्यां- क. ख., प्रकाशान्न तु हस्ताभ्यामवलम्ब्योन्मनीस्रुचा-ग., हस्ताभ्यामवलम्ब्योन्मनीशुचा- च.। ३. स्नेहं- च.। ४. पूर्णहोमौ- क.।
५. मूलं देव्यै समर्पयेत्-क. ग., मूलदेव्यै समर्पयेत्-च.। ६. विमुच्येत्- क. ख. ग.।
७. अष्टैश्वर्यसमायुक्तः- क. ख.। ८. (त्वा ?) सदाशिवः- ख.।

## ॥अथ पञ्चमः पटलः ॥

श्रीपार्वती उवाच—

हे ईश्वर[१] जगत्तात मम प्राणेश्वर प्रभो ।
इदानीं श्रोतुमिच्छामि [२]मासादिकपुरस्क्रियाम् ॥१ ॥

श्रीशिव[३] उवाच—

एकमासे तु षड्लक्षं द्विमासे रविलक्षकम् ।
मासत्रये तु देवेशि रन्ध्रयुग्मकलक्षकम् ॥२ ॥
चतुर्मासे महेशानि चतुर्विंशतिलक्षकम् ।
पञ्चमासे महेशानि[४] त्रिंशल्लक्षं सदा जपेत् ॥३ ॥
षण्मासे प्रजपेन्मन्त्रं षट्त्रिंशल्लक्षकं सदा[५] ।
सप्तमासे महेशानि द्विचतुर्लक्षकं सुधीः ॥४ ॥
अष्टमासे सुरेशानि गजवेदश्च लक्षकम् ।
मासे[६] तु नवमे देवि वेदबाणश्च लक्षकम् ॥५ ॥
दशमासे तु सम्प्राप्ते षष्टिलक्षञ्च संजपेत् ।
मासे चैकादशे प्राप्ते लक्षं कालरसं[७] जपेत् ॥६ ॥
वर्षे पूर्णे महेशानि शतलक्षं जपेत् सुधीः ।
अनेनैव विधानेन यो जपेद् भुवि मानवः ॥ ७ ॥
केवलं जपमात्रेण मन्त्राः सिद्धा भवन्ति हि ।
पञ्चाचारेण देवेशि सर्वं कार्यं जपादिकम् ॥ ८ ॥

पूर्ववच्छक्तिपूजां च कुमारीं चैव पूजयेत् ।
यथाशक्ति ब्राह्मणं च भोजयेद् विधिपूर्वकम् ॥९ ॥

---

१.शङ्कर-क.ख.ग.। २.मासाधिकपुरस्क्रियाम्-छ.। ३.शङ्कर-ख.ग.।
४.महादेवि-क.ख.ग.। ५.तथा- क. । ६.नवमासे प्राणेशि- क.। ७.नवति संजपेत्- क.।

तथा[१] तेन प्रकारेण शक्तिभोजनमाचरेत् ।
शक्तिं विना महेशानि सदाऽहं शवरूपकः ॥१० ॥

शक्तियुक्तो यदा देवि शिवोऽहं सर्वकामदः ।
शक्तियुक्तं जपेन्मन्त्रं न मन्त्रं केवलं जपेत् ॥११ ॥

सावित्रीसहितो ब्रह्मा [२]सिद्धोऽभून्नगनन्दिनि ।
द्वारावत्यां कृष्णदेवः सिद्धोऽभूत् सत्यया सह ॥१२ ॥

यथा गोपवधूसङ्गान्मम[३] सिद्धिर्वरानने ।
स[४] शिवोऽहं महादेवि केवलं शक्तियोगतः ॥१३ ॥

शक्तियोगेन देवेशि यदि सिद्धिर्न जायते ।
तदैव परमेशानि मम वाक्यं वृथा भवेत् ॥१४ ॥

गङ्गाकाशीप्रयागादौ पुष्करं नैमिषं तथा ।
बदरी[५] च तथा रेवा[६] उत्कलं गण्डकी[७] तथा ॥१५ ॥

सिन्धुः[८] सरस्वती[९] चैव पीठानि विविधानि च ।
सर्वं त्यक्त्वा महेशानि स्त्रीसङ्गं यत्नतश्चरेत् ॥१६ ॥

स्त्रीसङ्गे सिद्धिमाप्नोति मम वाक्यं न चान्यथा ।
यद् दत्तं जलगण्डूषं शक्तिवक्त्रे सुरेश्वरि ॥१७ ॥

सिन्धुरूपं परेशानि तज्जलं नात्र संशयः ।
अन्नं तु[१०] शैलतनये स्थलाचलसमं[११] भवेत् ॥१८ ॥

एवं संख्या तु सर्वत्र ज्ञातव्या कुलसाधकैः ।
सदेष्टदेवीभावे तु[१२] भोजयेत् तां च यत्नतः ॥१९ ॥

---

१. यथा-क. । २. सिद्धिश्च नगनन्दिनि-घ. । ३. कोच- क. ख. ग. ।
४. ईश्वरोऽहं- क. ख. ग. । ५. बदरीं- क. ख. ग. । ६. रेवां- क. ख. ग. ।
७. गण्डकीं- क. ख. ग. । ८. सिन्धुं- क. ख. ग. । ९. सरस्वतीं- क. ख. ग.
१०. इदं तु- कं., अनन्त-ग. । ११. कुलाचारसमं- क. ख. ग. । १२. न- क. ।

क्रोधान्मोहाच्छलाद्वापि[१] यदि पूजां न कारयेत् ।
कल्पकोटिशतेनापि तस्य सिद्धिर्न जायते ॥२० ॥

एतत् सिद्धतमं[२] देवि ! तव स्नेहात् प्रकाशितम् ।
न वक्तव्यं पशोरग्रे शपथो मे त्वयि प्रिये ॥२१ ॥

॥ इति गुप्तसाधनतन्त्रे पार्वतीशिवसंवादे पञ्चमः पटलः ॥



१.क्रोधान्मोहाच्छन्नात्मा- क.।　　२.सिद्धमतं-क.ख.ग.।

## ॥अथ षष्ठः पटलः ॥

श्रीदेवी उवाच—

शिव शङ्कर ईशान ब्रूहि मे परमेश्वर ।
दक्षिणायाः प्रकारं तु सूचितं न प्रकाशितम् ॥१ ॥
इदानीं श्रोतुमिच्छामि यदि तेऽस्ति कृपा मयि ।
दक्षिणा सिद्धिदा सिद्धा त्रैलोक्येषु सुदुर्लभा ॥२ ॥
यामाराध्य महादेव सृष्टिकर्ता प्रजापतिः[1] ।
यामाराध्य महाविष्णुः पालयत्यखिलं जगत् ॥३ ॥
संहारकाले च हरो रुद्रमूर्त्तिधरः परः ।
तां विद्यां वद ईशान यद्यहं तव वल्लभा ॥ ४ ॥

श्रीशिव उवाच—

दक्षिणायाः प्रकारं तु कालीतन्त्रादियामले[2] ।
अतः परं महेशानि विरता भव सुन्दरि[3] ॥ ५ ॥

श्रीपार्वती उवाच—

एतत्प्रकारं देवेश यदि मे न प्रकाशितम् ।
प्राणत्यागं करिष्यामि पुरतस्ते न संशयः ॥ ६ ॥

श्रीशिव उवाच—

श्रृणु देवि प्रवक्ष्यामि दक्षिणाकल्पमुत्तमम्[4] ।
यस्याः[5] प्रसङ्गमात्रेण भवाब्धौ न निमज्जति ॥ ७ ॥
स्वरान्तं वह्निसंयुक्तं वामनेत्रविभूषितम् ।
बिन्दुनादकलायुक्तं मन्त्रं त्रैलोक्यमोहनम् ॥ ८ ॥

---

१. जगत्पतिः- क.। २. जामले- क. ग.। ३. सुव्रते- क. ख. ग.।
४. दक्षिणाकल्पकालिका-क.। ५. यस्या इत्यारभ्य कालिकेत्यन्तं क. नास्ति।

भैरवोऽस्य ऋषिः प्रोक्त उष्णिक् छन्द उदाहृतम् ।
दक्षिणा कालिका प्रोक्ता देवता सर्वसिद्धिदा ॥९ ॥

मायाबीजं बीजमस्याः कूर्चबीजं तु शक्तिकम् ।
निजबीजं महेशानि कीलकं सर्वमोहनम् ॥१० ॥

धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ।
कालीतन्त्रादितन्त्रेषु पूजायागादि पार्वति ॥११ ॥

कथितं च[१] मया पूर्वं किमन्यच्छ्रोतुमिच्छसि ॥१२ ॥

श्रीदेवी उवाच—

ध्यानानुरूपिणीं[२] मूर्तिं यदि पूजादिकं चरेत् ।
आचारं कीदृशं तत्र को वा तत्र प्रपूजयेत् ॥१३ ॥

भूतशुद्धौ महादेव ! यदि देहं तु नाशयेत् ।
कुत्र स्थले भवेद् वृष्टिरमृतं कुत्र सञ्चरेत् ॥१४ ॥

आलीढं कीदृशं नाथ ! प्रत्यालीढं तु कीदृशम् ।
कथं वा कालिका[३] देवी श्मशानालयवासिनी ॥१५ ॥

निशा[४] वा कीदृशी नाथ कीदृशी वा महानिशा ।
भावभेदे महादेव ! तद् वदस्व दयानिधे ! ॥१६ ॥

श्रीशिव उवाच—

शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
[५]तत्तत्सर्वं प्रवक्ष्यामि सावधानाऽवधारय ॥१७ ॥

पूजायाः पूर्वदिवसे आदौ क्षौरादिकं चरेत् ।
हविष्यान्नं भोजनं च[६] अथवापि निरामिषम् ॥१८ ॥

---

१. लिखितं च- ख. ग. छ. । २. ध्यानानुव्यापिनीं-ग. ।

३. कालिकां देवीं श्मशानालयवासिनीम्- ग. ।

४. निशां वा कीदृशीं नाथ कीदृशीं वा महानिशाम्- ग. । ५. एतत् - ख. ग. ।

६. महेशानि ! भोजनं वा- क. ख. ग. ।

ततः[१] परस्मिन् दिवसे प्रातः स्नात्वा तु साधकः ।
नित्यपूजां समाप्यादौ देववच्छुद्धमानसः ॥१९ ॥

गुरुर्वा गुरुपुत्रो वा गुरुपत्नी च सुव्रते ।
आगमोक्तविधानेन अधिकारी गुरुः स्वयम् ॥२० ॥

गुरोरभावे देवेशि ! स्वयं पूजादिकं चरेत् ।
एभिर्विना महेशानि तान्त्रिकैर्देशिकैर्यदि ॥२१ ॥

तस्य पूजाफलं सर्वं भुज्यते यक्षराक्षसैः ।
अत एव महेशानि गुरुः कर्ता विधीयते ॥२२ ॥

ब्रह्मरूपो गुरुः साक्षाद् यदि पूजादिकं चरेत् ।
तत्तत् सर्वं महेशानि शतकोटिगुणं[२] भवेत् ॥२३ ॥

अथवा परमेशानि स्वयं पूजादिकं चरेत् ।
स्वयं पूजादिकं कृत्वा पूजाद्रव्यादिकं च यत् ॥२४ ॥

तत्सर्वं परमेशानि गुरोरग्रे निवेदयेत् ।
गुरौ दत्ते महेशानि सर्वं कोटिगुणं भवेत् ॥२५ ॥

गुरुपत्नी महेशानि यदि पूजादिकं चरेत् ।
बलिदानादिकं सर्वं तत्र होमं विवर्जयेत् ॥२६ ॥

होमीयद्रव्यमानीय देव्यग्रे स्थापयेद् बुधः[३] ।
मूलमन्त्रं समुच्चार्य महादेव्यै निवेदयेत् ॥२७ ॥

तेन होमफलं जातं न चाग्नौ होमयेद्[४] बुधः ।
गुरुं विलङ्घ्य शास्त्रेऽस्मिन् नाधिकारः[५] सुरैरपि ॥२८ ॥

गुरुणा यत् कृतं देवि ! तत् सर्वमक्षयं भवेत् ।
ऋत्विक् पुत्रादयो देवि स्मृत्युक्ता बहवः प्रिये ॥२९ ॥

---

१. परस्मिन् दिवसे प्रातः स्नात्वा तु साधकोत्तमः- क.ख.। २. कोटि- क.।
३. किल- क.ख.ग.। ४. क्वचित्- क.ख.ग.। ५. अधिकारी- छ.।

तन्त्रोक्तं परमेशानि नान्यद्[१] वक्त्रं विलोकयेत् ।
इष्टपूजादिकं सर्वं यः कुर्याज्जनसन्निधौ ॥३० ॥

तस्य सर्वार्थहानिः[२] स्यात् क्रुद्धा भवति चण्डिका ।
वरं पूजा न कर्तव्या न कुर्याज्जनसन्निधौ[३] ॥३१ ॥

अन्यसन्निहिते देवि यदि पूजापरो भवेत् ।
विष्णुतन्त्रोक्तपूजादि[४] तत्तन्मुद्रां प्रदर्शयेत् ॥३२ ॥

तेन पूजादिकं जातं न च व्यक्तं कदाचन ।
वामकुक्षौ स्थितं पापं पुरुषं कज्जलप्रभम् ॥३३ ॥

तस्य संहारणार्थाय [५]महती प्रकटीकृता ।
लिङ्गदेहो महेशानि तस्य देहो न संशयः ॥३४ ॥

पापदेहं[६] भवेद् दग्धं स्वदेहं[७] नैव नाशयेत् ।
आलीढं वामपादं तु प्रत्यालीढं तु दक्षिणम् ॥३५ ॥

संहाररूपिणी काली जगन्मोहनकारिणी ।
वह्निरूपा महामाया सत्यं सत्यं न संशयः ॥३६ ॥

अत एव महेशानि श्मशानालयवासिनी ।
[८]आलीढपादा सा देवी प्रत्यालीढा क्षणे क्षणे ॥३७ ॥

---

१................ पूजायां नैव कारयेत् ।
पुरोहितं समानीय यदि पूजादि कारयेत् ।
तस्य सर्वार्थहानिः स्यात् क्रुद्धा भवति चण्डिका ॥
पूजाकाले महेशानि- क. ख. ग. अधिकम् ।

२. वीर्यार्थहानिः- ख. ।

३. यद्यद् ज्ञानवशाद्देवि शक्तिपूजापरो नरः ।
तदैव तां तु सङ्कल्प्य वैष्णवोक्तां समाचरेत् ॥
तत्तन्मुद्रां प्रदर्श्याथ न वक्तव्यं कदाचन ॥ क. अधि. ।

४. पूजादिकं चैव तत्त्वमुद्रां- ग. । ५. महतीं प्रकटीकृतीम्- क., महतां प्रकटीकृताम्- ख. ग. ।
६. पापदेहो भवेद् दग्धः-क. । ७. सदेहं- ख. ग. । ८. आलीढ- घ. ।

[१]अनन्तरूपिणीं श्यामां को वक्तुं शक्यते प्रिये।
अनन्तरूपिणी श्यामा[२] चतुर्वर्गफलप्रदा[३] ॥३८॥

गुरुणा यस्य यत् प्रोक्तं तत् तस्य ब्रह्मसंहितम्[४]।
निशा तु परमेशानि सूर्ये [५]चास्तमुपागते ॥३९॥

[६]प्रहरे च गते रात्रौ घटिके द्वे परे च ये।
महानिशा समाख्याता ततश्चातिमहानिशा ॥४०॥

अर्द्धरात्रे गते देवि पशुभावेन पूजयेत्।
[७]दशदण्डे तु या पूजा तत्सर्वमक्षयं भवेत् ॥४१॥

षष्ठक्रोशे महेशानि तत्सर्वममृतोपमम्।
सप्तमक्रोशके देवि सर्वं क्षीरोपमं भवेत् ॥४२॥

अष्टमक्रोशके देवि [८]द्रव्यतुल्यं न संशयः।
अतः परं महेशानि [९]विषतुल्यं न संशयः ॥४३॥

एतत् सर्वं महेशानि पशुभावे मयोदितम्।
दिव्यवीरमते देवि तत्त्वज्ञानेन[१०] पूजयेत् ॥४४॥

पञ्चतत्त्वं समानीय यदि पूजापरो भवेत्।
कालाकालं महेशानि विचारं तत्र वर्जयेत् ॥४५॥

अर्द्धरात्रे गते देवि कुलपूजा प्रकीर्तिता।
तत्तन्मन्त्रादिरूपेण सर्वं पूजादिकं चरेत् ॥४६॥

अतिस्नेहेन देवेशि तव स्थाने प्रकाशितम्।
पशोरग्रे प्रकाशं वै कदाचिन्नैव कारयेत् ॥४७॥

॥इति गुप्तसाधनतन्त्रे पार्वतीशिवसंवादे षष्ठः पटलः॥

---

१. अनन्तरूपिणी श्यामा किं- क.ख.। २. काली- क.ग.। ३. प्रदायिनी- क.ग.।
४. संस्थितम्- क.। ५. चास्तमिते सति- क., चास्तमिते गते- ग.।
६. गते तु प्रथमे यामे- क.ग.। ७. दण्डे दण्डे च- ख.। ८. तत्तुल्यो भवेत्पुनः- क.ग.।
९. विषतुल्यो भवेद् ध्रुवम्- क.ग.। १०. तत्त्वज्ञाने प्रपूजयेत्- छ.।

## ॥अथ सप्तमः पटलः ॥

श्रीदेवी उवाच—

भूतनाथ [1] जगद्वन्द्य जगन्निस्तारकारक ।
त्वां विना संशयच्छेत्ता न हि त्राता च कुत्रचित् ॥१ ॥

ब्रूहि मे जगतां नाथ तत्त्वं परमदुर्लभम् ।
येन ज्ञानप्रसादेन [2] निर्वाणपदमीयते ॥२ ॥

कथ्यतां परमेशान यदि स्नेहोऽस्ति मां प्रति ।
तव स्नेहान्महादेव पण्डिताहं न चान्यथा ॥३ ॥

श्रीशिव उवाच—

त्रैलोक्ये वातुलः ख्यातो वातुलोऽहं सुरेश्वरि ।
वातुलस्य वचः श्रुत्वा [3] प्रतीता त्वं कथं प्रिये ॥ ४ ॥

त्वमेव परमं तत्त्वं किमन्यच्छ्रोतुमिच्छसि ।
[4] अतः परं महेशानि विरता भव सुन्दरि [5] ॥ ५ ॥

श्रीदेवी उवाच—

यदि तत्त्वं महादेव न मे कथयसि प्रभो ।
प्राणत्यागं करिष्यामि पुरतस्ते न संशयः ॥ ६ ॥

श्रीशिव उवाच—

सर्वतन्त्रेषु देवेशि कथितं च मया पुरा ।
व्यक्तरूपेण देवेशि कथं पृच्छा पुनः पुनः ॥ ७ ॥

तव स्नेहान्महादेवि किं मया न प्रकाशितम् ।
इमां कथां महादेवि व्यक्तरूपे च मा वद ॥ ८ ॥

---

१. महादेव- ग. । २. परे तत्त्वे विलीयते- क. ग., परमत्वे विलीयते- ख. ।
३. प्रीतितत्त्वं- क. ग., प्रतितत्त्वं ख., प्रतीतत्त्वं - ङ. । ४. इतः- क. । ५. सुव्रते- क. ख. ग. ।

श्रीदेवी उवाच—

[१]तवैव पुरतः स्थित्वा यदुक्तं च मया पुरा।
तद्वाक्यं [२]परमेशान कथं मिथ्या भविष्यति ॥९ ॥

श्रीशिव उवाच—

श्रृणु देवि प्रवक्ष्यामि तत्त्वं परमदुर्लभम्।
[३]मन्त्रोद्धारक्रमेणैव तत्सर्वं कथयामि ते ॥१० ॥
[४]भान्तमाकारसंयुक्तं खान्तं वायुयुतं कुरु।
[५]बिन्दुयुक्तं पुनर्भान्तमाकारं बिन्दुसंयुतम् ॥११ ॥
चन्द्रबीजं समुच्चार्य [६]अङ्कारं तदनन्तरम्।
पुनर्भान्तं तकारं च चन्द्रवायुयुतं [७]कुरु ॥१२ ॥
पुनर्भान्तं महेशानि पञ्चमस्वरसंयुतम्।
खान्तं वह्निसमारूढमाकारसंयुतं कुरु ॥१३ ॥
पुनर्भान्तं महेशानि सूर्यस्वरविभूषितम्।
तान्तमुकारसंयुक्तं धान्तमाकारसंयुतम् ॥१४ ॥
पञ्चतत्त्वमिदं देवि ! सर्वतन्त्रेषु गोपितम्।
यदि विप्रो भवेद् देवि पञ्चतत्त्वपरायणः ॥१५ ॥
सत्यं सत्यं महेशानि परतत्त्वे[८] प्रलीयते।
यथा जलं[९] तोयमध्ये लीयते परमेश्वरि ॥१६ ॥
तथैव तत्त्वसेवायां लीयते परमात्मनि।
क्षत्रियः परमेशानि सहयोगे[१०] वसेद् ध्रुवम् ॥१७ ॥

---

१. तथैव- छ.। २. परमेशानि- छ.। ३. मन्त्रोद्धारं- क.।
४. मकार- क. ख. ग.। ५. पुनर्भान्तं महेशानि आकारं- ङ.। ६. आकारं- क. ख. ग.।
७. शिवः- घ., शिवम्- ग.। ८. परे तत्त्वे स लीयते- क., संलीयते- ख.।
९. तोयं -ङ., स नीयते- ग.। १०. स्वर्लोके- क., महायोगी भवेद् ध्रुवम्- ग.।

वैश्यस्तु लभते[१] देवीस्वरूपं नात्र संशयः ।
शूद्रस्तु परमेशानि[२] सहलोकं सदा वसेत् ॥१८ ॥

एतदन्यो महेशानि यदि तत्त्वपरायणः ।
सत्यं सत्यं महेशानि [३]मुक्तिफलमखण्डितम् ॥१९ ॥

सेनानी[४] परमेशानि देवीदेहे प्रलीयते ।
शोधनं[५] च मया प्रोक्तं नीलतन्त्रादियामले ॥२० ॥

न कस्मैचित् प्रवक्तव्यं प्रकाशाच्छिवहा[६] भवेत् ॥२१ ॥

॥ इति गुप्तसाधनतन्त्रे पार्वतीशिवसंवादे सप्तमः पटलः ॥



---

१. परमेशानि जनलोके वसेच्चिरम्-क.।

२. देवदेवेशि महर्लोके वसेत् सदा - क.ङ., देवेदेवेशि ! शम्भुलोके वसेत् सदा - ग.।

३. मुक्तिः फलमखण्डितम् - क.ग.।

४. सा च नारी महेशानि - क., सा नारी परमेशानि देवीदेहे न लीयते - ग.।

५. शोषणं च - क.ख.।

६. प्रकाशात् सिद्धिहा - क.।

## ॥अथाष्टमः पटलः ॥

श्रीशिव उवाच—

अतः[१] परं प्रवक्ष्यामि [२]सिद्धारिचक्रमुत्तमम् ।
अस्य[३] विज्ञानमात्रेण मन्त्रसिद्धिर्भवेद् ध्रुवम् ॥१ ॥
यद्विना[४] परमेशानि मन्त्रसिद्धिर्भवेन्न हि ।
चतुरस्रं लिखेत् कोष्ठं यावत् षोडशकोष्ठकम् ॥२ ॥
तावदङ्कान् प्रयत्नेन रचयेत् साधकोत्तमः[५] ।
तत्र वर्णान् लिखेन्मन्त्री प्रकारं श्रृणु सादरम् ॥३ ॥
इन्द्वग्निरुद्रनवनेत्रयुगार्कदिक्षु
ऋत्वष्टषोडशचतुर्दशभौतिकेषु ।
पातालपञ्चदशवह्निहिमांशुकोष्ठे
वर्णान् लिखेल्लिपिभवान् क्रमशस्तु धीमान्[६] ॥४ ॥
[७]सिद्धः सिद्ध्यति कालेन साध्यस्तु जपहोमतः ।
सुसिद्धो ग्रहणाद् देवि रिपुर्मूलं निकृन्तति ॥ ५ ॥
इत्यादिकं फलं देवि पूर्वाम्नाये मयोदितम् ।
नामानुरूपमेतेषां शुभाशुभफलं लभेत् ॥ ६ ॥

---

१. अथातः सम्प्र - क.ख.ग.।

२. सिद्धादिचक्रलक्षणम् - क., सिद्धादिचक्रमुत्तमम् - ग.।

३. यस्य विज्ञानमात्रेण मन्त्राः सिद्धा भवन्ति हि- क.ख.ग.ङ.।

४. यं विना परमेशानि मन्त्राः सिद्धा भवन्ति हि- क.ख.ग.।

५. साधकम्- क.ग.।

६. सिद्धः साध्यः सुसिद्धोऽरिः क्रमाज्ज्ञेयो विचक्षणैः ।
पुनः सिद्धातिसंयोगे गणयेत् साधकाग्रणीः ॥
सिद्धादि संयोज्य- क.ख.ग.ङ. अधि.।

७. अयमर्धश्लोकः — क.ख.ग.ङ. नास्ति ।

श्रृणु देवि प्रवक्ष्यामि गणनाक्रममुत्तमम् ।
नामाद्याक्षरतो देवि यावन्मन्त्रान्तिमाक्षरम् ॥७ ॥
कादिडान्तं[१] खादिढान्तं[२] गादिणान्तं घतान्तिके[३] ।
ङादिखान्तं चादिदान्तं छादिधान्तं जनान्तिके ॥८ ॥
झादिपान्तं ञादिफान्तं[४] टादिबान्तं[५] ठभान्तिके ।
डादिमान्तं ढादियान्तं णादिरान्तं तलान्तिके ॥९ ॥
वर्णत्रयं महेशानि कोष्ठे पञ्चदशे[६] प्रिये ।
आदिकोष्ठे चतुर्वर्णान् विलिखेत् साधकोत्तमः ॥१० ॥
वर्णाष्टकं[७] गृहीत्वा तु कथितं तव सुव्रते ।
कोष्ठस्थितान् समादाय गणनामाचरेत् सुधीः ॥११ ॥
नामाद्याक्षरसंयुक्तं सिद्धकोष्ठं प्रकीर्तितम् ॥१२ ॥
[८]अथातः संप्रवक्ष्यामि पूजाकारं तु सिद्धिदम् ।
यं विना परमेशानि न हि सिद्धिः प्रजायते ॥१३ ॥
शालग्रामे मणौ यन्त्रे प्रतिमायां सुरेश्वरि ।
पुस्तिकायां च गङ्गायां सामान्ये च[९] जले तथा ॥१४ ॥
अथवा पुष्पयन्त्रेण[१०] पूजयेच्छिवलिङ्गके ।
यन्त्रभेदेन देवेशि फलं सम्यक् प्रजायते ॥१५ ॥
शालग्रामे शतगुणं मणौ तद्वत् फलं लभेत् ।
यन्त्रे लक्षगुणं प्रोक्तं प्रतिमायां तथैव च ॥१६ ॥
पुस्तिकायां च गङ्गायां [११]समानफलमीरितम् ।
सामान्ये च जले देवि [१२]पूजादिदोषशान्तये ॥१७ ॥

---

१. भान्तं- ख., कादिकान्तम्- ग.। २. शान्तं-क., टान्तः-ख., दान्तं-ग.।
३. घतान्विते- क., घातान्तिके- ग.। ४. द्रातिपान्तं- ख.। ५. यादिकान्तं- क., त्रादिफान्तं ख.।
६. पञ्चदश- ङ.। ७. वर्णञ्चैकं- क. ख. ग.। ८. श्रीशिव उवाच- घ.।
९. न- क. छ.। १०. यन्त्रे च-ख, ग, घ, यन्त्रेषु- क.।
११. सामान्य- घ.। १२. पूजादोषादि- क.घ.।

पुष्ययन्त्रे महेशानि पूजनात् सर्वसिद्धिभाक्[१] ।
शिवलिङ्गे महेशानि अनन्तफलमीरितम् ।।१८ ।।

न कुर्यात् पार्थिवे लिङ्गे देवीपूजादिकाः क्रियाः ।
पार्थिवे पूजनाद् देवि सिद्धिहानिः प्रजायते ।।१९ ।।

यदि दैवान्महेशानि मृत्तिकास्खलनं भवेत् ।
तावद्वर्षसहस्राणि नरके पूर्णशोणिते[२] ।।२० ।।

कुम्भीपाके महाघोरे पच्यते पितृभिः सह[३] ।
अत एव महेशानि पार्थिवे न हि पूजयेत् ।।२१ ।।

स्फाटिकादीन् समानीय लिङ्गं निर्माय यत्नतः ।
तल्लिङ्गे[४] पूजनाद् देवि सर्वसिद्धियुतो भवेत्[५] ।।२२ ।।

।। इति गुप्तसाधनतन्त्रे पार्वतीशिवसंवादेऽष्टमः पटलः ।।

■

---

१. अपराजिता करवीरद्रोणं जवा महेश्वरी एषु यन्त्रेषु पूजनात् । सर्वसिद्धीश्वरो भवेत् ।

२. पूर्णशोभिते- छ.।

३. तस्माल्लिङ्गे तु नैवेद्यं पत्रं पुष्पं फलं जलम् ।
अत एव जगन्मातः अग्राह्यं कथितं जगत् ॥
मन्त्रज्ञः कुलधर्मज्ञो योनियन्त्रं करोति यः ।
स्वर्गे मर्त्ये च पाताले योनियन्त्रं गरीयसी ॥
एतत्ते कथितं सत्यं पार्थिवे न हि पूजयेत् ।
पुस्तके च अयस्कान्ते स्फाटिके स्वर्णरौप्यके ॥
मणिकं ताम्रकं लिङ्गं निर्मितं पञ्चवक्त्रम् ॥ घ. पु. पाठः ।

४. तत्र लिङ्गे- क. घ. ङ.।

५. तत्र लिङ्गं प्रपूज्याथ अनन्तफलमीरितम् ।
तत्र प्रतिष्ठितं कृत्वा यावज्जीवं प्रपूजयेत् ॥
तत्फलं नैव शक्नोमि सत्यं सत्यं न संशयः ॥ इति पाठान्तरम् ॥

## ॥अथ नवमः पटलः ॥

श्रीशिव उवाच—

अथातः संप्रवक्ष्यामि धनदां सर्वसिद्धिदाम् ।
[१]यामाराध्य [२]महादेवि कुबेरो धननायकः ॥१ ॥
यत्प्रसादान्महेशानि [३]वासवस्त्रिदशेश्वरः ।
तां विद्यां [४]परमेशानि शृणुष्व वरवर्णिनि ॥२ ॥
दान्तं [५]बिन्दुसमारूढं महामायां हरिप्रियाम् ।
रतिप्रिये ततः पश्चाद् वह्निजायां ततः प्रिये ॥३ ॥
नवाक्षरो महामन्त्रो द्रुतं[६] सिद्धिप्रदायकः ।
अनया सदृशी विद्या अनया सदृशो जपः ॥४ ॥
अनया सदृशी सिद्धिर्मम ज्ञाने न वर्तते[७] ।
[८]शतवक्त्रो यदि भवेत् तावद् वक्तुं न शक्यते ॥५ ॥
पञ्चवक्त्रेण देवेशि किं मया कथ्यतेऽधुना ।
कुबेरोऽस्य ऋषिः प्रोक्तः पङ्क्तिश्छन्द उदाहृतम् ॥६ ॥
देवता धनदा देवी सर्वसिद्धिप्रदायिनी ।
धर्मार्थकाममोक्षाश्च[९] चतुर्वर्गफलप्रदाः ॥७ ॥
षड्दीर्घमायया चैव षडङ्गन्यासमाचरेत् ।
ध्यानमस्याः प्रवक्ष्यामि येन सिद्धो भवेन्नरः ॥८ ॥
देवीं काञ्चनकान्तकान्तिविमलां[१०] रक्तांशुकाच्छादितां
हेमाम्भोजयुगाभयाङ्कुशकरीं[११] रत्नोल्लसत्कुण्डलीम्[१२] ।
सर्वाभीष्टफलप्रदां त्रिनयनां नागेन्द्रहारोज्ज्वलां
वन्दे सर्वभयापहां त्रिजगतां पापापहारीं पराम् ॥९ ॥

---

१. यमासाद्य-ख. । २. महेशानि-क. । ३. रमेच्च त्रि- छ. ।
४. शृणु देवेशि सावधानावधारय-क. ख. । ५. बिन्दुसमायुक्तं- क. ख. । ६. द्रुत-क. ख. ।
७. वर्ण्यते- क., विद्यते- ङ. । ८. शतवक्त्रं- क. ख. । ९. धर्मार्थकाममोक्ष-चतुर्वर्गफलप्रदा- क. ख. । १०. वरां- क. ङ., करां-ख. । १२. कुण्डलाम्- क. ख. ।

स्वकीयात्मस्वरूपां तां भावयेत् चित्स्वरूपिणीम् ।
एवं ध्यात्वा महेशानि मानसैः पूजनं चरेत् ॥१० ॥

अर्घ्यपात्रं स्थापयित्वा धेनुयोनिं [१] प्रदर्शयेत् ।
पीठपूजां ततः कृत्वा [२] ततः पीठमनुं जपेत् [३] ॥११ ॥

आधारशक्तिमारभ्य [४] यजेत् पद्मासनं [५] प्रिये ।
प्रणवादिनमोऽन्तेन पूजयेत् साधकाग्रणीः ॥१२ ॥

पुनर्ध्यात्वा महेशानि मूलेनावाहनं चरेत् ।
षडङ्गेन च सम्पूज्य जीवन्यासं समाचरेत् ॥१३ ॥

मूलमन्त्रं समुच्चार्य ततो द्रव्यं समुच्चरेत् [६] ।
[७] देवाय च ततः पश्चात् [८] योगात्मकमनुं स्मरेत् ॥१४ ॥

पाद्याद्यैः पूजयेद् देवीं यथाविभवविस्तरैः ।
यन्त्रमस्याः प्रवक्ष्यामि [९] यज्ज्ञात्वाऽमृतमश्नुते ॥१५ ॥

नवयोन्यात्मकं चक्रं विलिखेत् कर्णिकोपरि ।
द्विदलं पद्ममालिख्य चतुरस्रं ततो बहिः ॥१६ ॥

कोणेषु वज्रं संलिख्य मध्ये बीजं समुल्लिखेत् ।
इदं यन्त्रं [१०] महेशानि ! साक्षाद् देवीस्वरूपकम् [११] ॥१७ ॥

लक्ष्मीं पद्मां पद्मालयां श्रियं चैव [१२] हरिप्रियाम् ।
शवां [१३] च कमलां चैव अब्जां [१४] च चञ्चलां तथा ॥१८ ॥

लोलां च [१५] प्रणवाद्येन नमोऽन्तेन प्रपूजयेत् ।
पुनर्मध्ये ततो देवीं पूजयेत् साधकोत्तमः ॥१९ ॥

---

१. प्रदश्यं च-क. । २. पोठमन्त्रं जपेत् सुधीः- ङ. । ३. यजेत्- क. । ४. आरुह्य- ख. ।
५. पाद्यासनं- क. । ६. समाचरेत्- क. । ७. देवतायै- क. ख., सम्प्रदाने ततः- ङ. ।
८. त्यागात्मकं- क. ख. । ९. तज्ज्ञात्वा- छ. । १०. मन्त्रं- क. छ. । ११. देवीस्वरूपिणी- ङ. ।
१२. हरप्रियाम्- छ. । १३. हरां- क. । १४. अरजां- छ. । १५. प्रणवाद्यैषां- क. ख. ।

प्राणायामं ततः कृत्वा यथाशक्ति जपं चरेत् ।
[१]गुह्यादिकं जपफलं देव्या हस्ते समर्पयेत् ॥२० ॥

प्राणायामं ततः[२] कृत्वा प्रणामाष्टाङ्गमाचरेत् ।
अथोत्थाय महेशानि विशेषार्घ्यं निवेदयेत् ॥२१ ॥

आत्मसमर्पणं कृत्वा विहरेच्च[३] यथेच्छया ।
किञ्चिन्नैवेद्यं स्वीकृत्य निर्माल्यं धारयेत् ततः ॥२२ ॥

लक्षमेकं जपेन्मन्त्रं दशांशं होममाचरेत् ।
तद्दशांशं तर्पणं च अभिषेकं दशांशकम् ॥२३ ॥

[४]विप्रभोजनं दशांशं ततः कुर्यात् सुरेश्वरि ।
एवं कृत्वा महेशानि ! साक्षात् सुरगुरुः प्रभुः ॥२४ ॥

[५]तस्य हस्ते महेशानि सर्वसिद्धिर्न संशयः ।
नित्यं नित्यं महेशानि ईश्वरो यच्छते धनम् ॥२५ ॥

लक्ष्मीः सरस्वती चैव निवसेन्मन्दिरे सुखे ।
इह लोके महेशानि महेन्द्रो जायते क्षितौ ॥२६ ॥

मोक्षाकाङ्क्षी महेशानि महामोक्षमवाप्नुयात्[६] ।
भोगार्थी लभते भोगं यथेच्छं वर्तते चिरात् ॥२७ ॥

इह लोके सुखं[७] भुक्त्वा मृतो गच्छेद्धरेः पदम्[८] ।
मृतो राजकुले भूयो जन्ममाप्नोति साधकः ॥२८ ॥

अथातः सम्प्रवक्ष्यामि धनदास्तोत्रमुत्तमम् ।
यथोक्तं सर्वतन्त्रेषु इदानीं तत् प्रकाशितम् ॥२९ ॥

---

१. गुह्यादिना- क.ख. । २. पुनः- क.ङ. । ३. विचरेच्च- ङ. ।

४. विप्रं सम्भोज्य देवेशि तद्दशांशं- क.ङ. । विप्रभोजनं देवेशि ! तद्दशांशं- ख. ।

५. सुरगणो भवेत्- क. । ६. जयमाप्नोति विवादे विजयी भवेत् ।
ब्रह्माणोऽपि च दासत्वं भजन्ते किं परे जनाः ॥ ङ.

७. सुखान्-ङ. । ८. पश्चाद् राजकुले भूत्वा वशयेत् सकलं जगत् ॥ ङ. ।

नमः सर्वस्वरूपेण[१] नमः कल्याणदायिके ।
महासम्पत्प्रदे देवि धनदायै नमोऽस्तु ते ॥३० ॥

महाभोगप्रदे देवि[२] महाकामप्रपूरिते ।
सुखमोक्षप्रदे देवि धनदायै नमोऽस्तु ते ॥३१ ॥

ब्रह्मरूपे सदानन्दे सदानन्दस्वरूपिणि ।
द्रुतसिद्धिप्रदे देवि धनदायै नमोऽस्तु ते ॥३२ ॥

उद्यत्सूर्यप्रकाशाभे[३] उद्यदादित्यमण्डले ।
शिवतत्त्वप्रदे देवि धनदायै नमोऽस्तु ते ॥३३ ॥

विष्णुरूपे विश्वमते विश्वपालनकारिणि ।
महासत्त्वगुणाक्रान्ते धनदायै नमोऽस्तु ते ॥३४ ॥

शिवरूपे शिवानन्दे कारणानन्दविग्रहे ।
विश्वसंहाररूपे च धनदायै नमोऽस्तु ते ॥३५ ॥

पञ्चतत्त्वस्वरूपे च पञ्चाचारसदारते ।
साधकाभीष्टदे देवि ! धनदायै नमोऽस्तु ते ॥३६ ॥

इदं[४] स्तोत्रं मया प्रोक्तं साधकाभीष्टदायकम् ।
यः पठेत् पाठयेद् वाऽपि स लभेत् सकलं फलम् ॥३७ ॥

त्रिसन्ध्यं यः पठेन्नित्यं स्तोत्रमेतत् समाहितः ।
स सिद्धिं लभते शीघ्रं नात्र कार्या विचारणा ॥३८ ॥

इदं रहस्यं परमं स्तोत्रं परमदुर्लभम् ।
गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति ॥३९ ॥

---

१. सर्वस्वरूपे- च. ख., स्वरूपा- च. ङ. । २. प्रज्ञे- ख. ङ. ।

३. प्रकाशान्ते- ख. । ४. सर्वस्वरूपे देवेशि गुणत्रयसमन्विते ।
सदापानप्रदे देवि गुणत्रयसमन्विते ॥
सदापानयुते देवि धनदायै नमोऽस्तु ते ॥ ख. ङ. ।

अप्रकाश्यमिदं देवि ! गोपनीयं परात्परम् ।
प्रपठन्नात्र सन्देहो धनवान् जायतेऽचिरात् ॥४० ॥

॥इति धनदास्तोत्रम्[१] ॥

श्रीदेवी उवाच—

धनदा या महाविद्या कथिता न प्रकाशिता ।
इदानीं श्रोतुमिच्छामि कवचं पूर्वसूचितम् ॥४१ ॥

श्रीशिव[२] उवाच—

श्रृणु देवि प्रवक्ष्यामि कवचं मन्त्रविग्रहम् ।
सारात्सारतरं देवि कवचं मन्मुखोदितम् ॥४२ ॥
धनदाकवचस्यास्य कुबेर ऋषिरीरितः[३] ।
पङ्क्तिश्छन्दो देवता च धनदा सिद्धिदा सदा ॥४३ ॥
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ।
धं बीजं मे शिरः पातु ह्रीं बीजं मे ललाटकम् ॥४४ ॥
स्त्रीं बीजं मे मुखं पातु रकारं हृदि मेऽवतु ।
तिकारं पातु जठरं प्रिकारं पृष्ठतोऽवतु ॥४५ ॥
येकारं जङ्घयोर्युग्मे अकारं[४] पादयोर्युगे ।
[५]शीर्षादिपादपर्यन्तं हाकारं सर्वतोऽवतु ॥४६ ॥
इत्येतत् कथितं कान्ते कवचं सर्वसिद्धिदम् ।
गुरुमभ्यर्च्य विधिवत् कवचं प्रपठेद् यदि ॥४७ ॥

---

१. समाप्तम्- ङ. अ. । २. ईश्वर- ख. । ३. सर्वसिद्धिदा- ङ. । ४. खाकारं- ङ. ।

५. इन्द्रो मां पातु पूर्वे च वह्निकोणेऽनलोऽवतु ।
यमो मां दक्षिणे पातु नैऋत्यां निऋतिश्च माम् ॥
पश्चिमे वरुणः पातु वायव्यां पवनोऽवतु ।
कुबेरश्चोत्तरे पातु मामैशान्ये शिवोऽवतु ॥
ऊर्ध्वं ब्रह्मा सदा पातु अधश्चानन्त एव च ।
वज्राद्याश्चायुधाः पान्तु दश दिक्षु यथाक्रमात् ॥
नवाक्षरो महामन्त्रो सर्वाङ्गं परिरक्षतु ॥ (सर्वतः परिरक्षतु)— ख. ङ. अ. ।

शतवर्षसहस्राणां पूजायाः फलमाप्नुयात् ।
गुरुपूजां विना देवि न हि सिद्धिः प्रजायते ।।४८ ।।

गुरुपूजापरो[१] भूत्वा कवचं प्रपठेत् ततः ।
सर्वसिद्धियुतो भूत्वा विचरेद् भैरवो यथा ।।४९ ।।

प्रातःकाले पठेद् यस्तु मन्त्रजापपुरःसरम् ।
सोऽभीष्टफलमाप्नोति सत्यं सत्यं न संशयः ।।५० ।।

पूजाकाले पठेद् यस्तु देवीं ध्यात्वा हृदाम्बुजे ।
षण्मासाभ्यन्तरे सिद्धिर्नात्र कार्या विचारणा ।।५१ ।।

सायंकाले पठेद् यस्तु स शिवो नात्र संशयः ।
भूर्जे विलिख्य गुलिकां स्वर्णस्थां धारयेद् यदि ।।५२ ।।

पुरुषो दक्षिणे बाहौ योषिद् वामभुजे तथा ।
सर्वसिद्धियुतो भूत्वा धनवान् पुत्रवान् भवेत् ।।५३ ।।

इदं कवचमज्ञात्वा यो भजेद् धनदां शुभे ।
स शस्त्रघातमाप्नोति सोऽचिरान्मृत्युमाप्नुयात् ।।५४ ।।

कवचेनावृतो नित्यं यत्र यत्रैव गच्छति ।
अत एव[२] महादेवि स पूज्यो नात्र संशयः ।।
समाप्तं कवचं देवि किमन्यत् श्रोतुमिच्छसि ।।५५ ।।

श्रीदेवी उवाच—

अहो पूज्य महादेव ! संसारार्णवतारक ।
सर्वयोगमयस्त्वं हि शरणागतवत्सल ।।५६ ।।

केनोपायेन देवेश शीघ्रं सिद्धा भवन्ति हि ।
तत् सर्वं श्रोतुमिच्छामि कथ्यतां परमेश्वर ।।५७ ।।

---

१. युतो- ङ. ।

२. तत्र तत्र-ङ. ।

श्रीशिव उवाच—

[१]प्रेतभूमौ तु सप्ताहं प्रत्यहं परमेश्वरि ।
दिक्सहस्त्रं जपेद् विद्यां तदा सिद्धिर्न संशयः ॥५८ ॥

अथवा परमेशानि शवमानीय यत्नतः ।
वितस्तिमात्रखाते तु पातनं इह मन्दिरे ॥५९ ॥

अमावस्यां समारभ्य यावत् शुक्लाष्टमी भवेत् ।
प्रत्यहं प्रजपेद् विद्यां गजान्तकसहस्त्रकम् ॥६० ॥

तदा सिद्धो भवेद् देवि नान्यथा मम भाषितम् ।
यदेतत् कथितं सर्वं तत्त्वज्ञाने सुरेश्वरि ॥६१ ॥

तत्त्वज्ञानं [२]विना देवि ! न हि सिद्धिः प्रजायते ।
अथवा[३] परयत्नेन केवलं शक्तियोगतः ॥६२ ॥

पूर्वचतुष्टयं देवि ! समानीय प्रयत्नतः ।
तस्मै दत्त्वा स्वयं पीत्वा प्रजपेद् यदि साधकः ॥६३ ॥

तदा सिद्धिं लभेद् देवि सत्यं सत्यं न संशयः ।
यत्र यत्र विनिर्दिष्टं जपकार्ये सुरेश्वरि ॥
तत्र तत्र महेशानि गजान्तकसहस्त्रकम् ॥६४ ॥

॥इति[४] गुप्तसाधनतन्त्रे[५] नवमः पटलः ॥



१. पितृ- ङ. ।

२. पुरुषो दक्षिणे इत्यारभ्य तत्त्वज्ञाने सुरेश्वरि इत्यन्तं पाठः- क. ख. नास्ति ।

३. किं वा परं यत्नेन- ङ. । ४. नवमपटलपर्यन्तः पाठः ख. उपलभ्यते ।

५. देवीश्वरसंवादे- ङ. अ. ।

## ॥अथ दशमः पटलः ॥

श्रीदेवी उवाच—

मातङ्गी परमेशानी त्रैलोक्येषु च दुर्लभा ।
मन्त्ररूपेण देवेश कथयस्व मयि प्रभो ॥१ ॥

श्रीशिव उवाच—

श्रृणु चार्वङ्गि सुभगे मातङ्गीमन्त्रमुत्तमम् ।
प्रणवं च समुद्धृत्य महामायां समुद्धरेत् ॥२ ॥

कामबीजं समुद्धृत्य कूर्चबीजं समुद्धरेत्[1] ।
मातङ्गी ङेयुतां[2] पश्चाद् अस्त्रमन्त्रं समुद्धरेत् ॥३ ॥

वह्निजायान्वितो मन्त्रः सर्वतन्त्रेषु पूजितः ।
सार्द्धदशाक्षरी विद्या ब्रह्मादिपरिपूजिता ॥४ ॥

अस्या[3] विज्ञानमात्रेण पुनर्जन्म न विद्यते ।
कामतुल्यश्च नारीणां रिपूणां शमनोपमः ॥५ ॥

कुबेर इव वित्ताढ्यो धरणीसदृशः क्षमः[4] ।
विराट् छन्दो महेशानि मातङ्गी देवता स्मृता ॥६ ॥

धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ।
ध्यानपूजादिकं सर्वं यामले च पुरोदितम् ॥७ ॥

तस्याः स्तोत्रं महापुण्यं सावधानाऽवधारय ।
उद्यदादित्यसङ्काशां नयनत्रयशोभिताम् ॥८ ॥

---

१. ततः प्रिये-ङ. ।     २. ङेयुतं- ङ. ।     ३. अस्य- ङ. ।

४. वायुतुल्यबलो लोके नैर्ऋतिरिव दुर्धरः ।
गानेन तुम्बुरुः साक्षाद् बाणेन वासवोपमः ॥
ऋषिरत्र महेशानि दक्षिणामूर्तिरव्ययः ॥ -ङ. ।

भक्तानां वरदां देवीं मातङ्गीं तां नमाम्यहम् ।
श्यामवर्णां महादेवीं सर्वालङ्कारभूषिताम् ॥९ ॥

द्रुतसिद्धिप्रदां दिव्यां[1] मातङ्गीं तां नमाम्यहम् ।
मुक्ताहारलताढ्यां[2] तां नानामणिविराजिताम् ॥१० ॥

कोटिविद्युत्प्रतीकाशां मातङ्गीं तां नमाम्यहम् ।
वरदां[3] वरदानाढ्यां वरमालाञ्च धारिणीम् ॥११ ॥

दैत्यदानवसंहर्त्रीं मातङ्गीं तां नमाम्यहम् ।
किङ्किणीनरहस्ताढ्यां[4] कटिदेशसुशोभनाम् ॥१२ ॥

पट्टवस्त्र[5] परीधानां मातङ्गीं तां नमाम्यहम् ।
सौदामिनीसमाभासां नानालङ्कारसंयुताम् ॥१३ ॥

इन्द्रादिदेवतासेव्यां मातङ्गीं तां नमाम्यहम् ।
शुद्धकाञ्चनसंयुक्तां चरणाङ्गुलिराजिताम् ॥१४ ॥

माणिक्यरत्नसंयुक्तां मातङ्गीं तां नमाम्यहम् ।
दिङ्मुखे दशचन्द्राढ्यां सुधावर्षणकारिणीम् ॥१५ ॥

देववृन्दसमायुक्तां मातङ्गीं तां नमाम्यहम् ।
इदं स्तोत्रं मया प्रोक्तं साधकाभीष्टदायकम् ॥१६ ॥

त्रिसन्ध्यं यः पठेन्नित्यं तस्य सिद्धिरदूरतः ।
पूजाकाले सकृद् वापि यः पठेत् स्तोत्रमुत्तमम् ॥१७ ॥

तं सवित्तं[6] विलोक्यैव कुबेरोऽपि तिरस्कृतः ।
यस्मै कस्मै न दातव्यं न प्रकाश्यं कदाचन ॥१८ ॥

प्रकाशात् सिद्धिहानिः स्यात् तस्मात् यत्नेन गोपयेत् ।
[7]स्तोत्रं समाप्तं देवेशि कवचं शृणु वल्लभे ॥१९ ॥

---

१. नित्यां- ङ.। २. लतां रम्यां- ङ.। ३. वरदा- छ.। ४. कटिदेशे सुशोभिताम्- ङ.।
५. पट्टाम्बर- ङ.। ६. तस्य वित्तं- ङ.। ७. समाप्तं स्तोत्रं देवेशि किमन्यच्छ्रोतुमिच्छसि- ङ.।

श्रीदेवी उवाच—

देवदेव जगन्नाथ ! जगन्निस्तारकारक[१] ।
मातङ्गीकवचं नाथ श्रोतुमिच्छामि साम्प्रतम् ॥२० ॥

यां समाराध्य देवेश धनेशोऽभूद् धनाधिपः ।
यामाराध्य महादेव वासवस्त्रिदशेश्वरः ॥२१ ॥

ब्रह्मविष्णुमहारुद्राः समाराध्य सुरेश्वरीम् ।
[२]सृष्टिस्थितिलयादीनां कर्तारो जगदीश्वराः ॥२२ ॥

तस्यास्तु कवचं दिव्यं कथयस्वाऽनुकम्पया ॥२३ ॥

श्रीशिव उवाच—

श्रृणु देवि प्रवक्ष्यामि मातङ्गीकवचं शुभम् ।
तव स्नेहान्महादेवि कवचं ब्रह्मरूपकम्[३] ॥२४ ॥

त्रैलोक्यरक्षणस्यास्य दक्षिणामूर्तिसंज्ञकः ।
ऋषिश्छन्दो विराड् देवि मातङ्गी देवता स्मृता ॥२५ ॥

धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ।
ॐ बीजं मे शिरः पातु ह्रीं बीजं मे ललाटकम् ॥२६ ॥

क्लीं बीजं चक्षुषी[४] पातु [५]हुँ नासां परिरक्षतु ।
माकारं वदनं पातु तकारं कण्ठमेव[६] च ॥२७ ॥

ङ्यैकारं[७] स्कन्धदेशं च[८] फकारं बाहुयुग्मकम् ।
टकारं हृदयं पातु स्वाकारं स्तनयुग्मकम् ॥२८ ॥

पृष्ठदेशं तथा नाभिं जठरं लिङ्गदेशकम् ।
पादद्वन्द्वं च सर्वाङ्गं हाकारं परिरक्षतु ॥२९ ॥

---

१. कारकः- छ. । २. सृष्टिस्थितिलयां देवीं- ङ. । ३. ब्रह्मरूपिणम्- ङ. । ४. चक्षुक्षी- ङ. ।
५. नासायां- घ. । ६. कण्ठमेव तु- छ. । ७. स्यैकारं- ङ. । ८. स्कन्धदेशस्य च-ङ. ।

सार्द्धदशाक्षरी विद्या सर्वाङ्गं परिरक्षतु ।
इन्द्रो मां पातु पूर्वे च वह्निकोणेऽनलोऽवतु ॥३० ॥

यमो मां दक्षिणे पातु नैऋत्यां निऋतिश्च माम् ।
पश्चिमे वरुणः पातु वायव्यां पवनोऽवतु ॥३१ ॥

ऊर्ध्वं[1] ब्रह्मा सदा पातु अधश्चानन्त एव च ।
रक्षाहीनं तु यत् स्थानं वर्जितं कवचेन तु ॥३२ ॥

तत् सर्वं रक्ष मे देवि ! मातङ्गि[2] सर्वसिद्धिदे ।
इति ते कथितं देवि कवचं परमाद्भुतम् ॥३३ ॥

[3]त्रिसन्ध्यं यः पठेन्नित्यं स साक्षाच्छङ्करः स्वयम् ।
पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत् सकृत् ॥३४ ॥

शतवर्षसहस्राणां पूजायाः फलमाप्नुयात् ।
भूर्जे विलिख्य गुलिकां स्वर्णस्थां धारयेद् यदि ॥३५ ॥

शिखायां दक्षिणे बाहौ कण्ठे वा धारयेद् यदि ।
सर्वसिद्धियुतः सोऽपि सर्वसिद्धितपोयुतः[4] ॥
ब्रह्मास्त्रादीनि शस्त्राणि तद्गात्रं प्राप्य पार्वति ॥३६ ॥

माल्यानि कुसुमान्येव भवन्त्येव न संशयः ।
न देयं परशिष्येभ्यः अभक्तेभ्यो विशेषतः ॥३७ ॥

देयं शिष्याय शान्ताय चान्यथा पतनं भवेत् ।
प्रातःकाले पठेद् यस्तु गुरुपूजापुरःसरम् ॥३८ ॥

तस्य सर्वार्थसिद्धिः स्यात् स शिवो नात्र संशयः ।
मध्याह्ने प्रपठेद् यस्तु गुरुचिन्तापुरःसरम् ॥३९ ॥

---

१. कुबेरश्चोत्तरे पातु मामैशान्ये शिवोऽवतु- क.। २. मातङ्गी सर्वसिद्धिदा- ङ.।
३. त्रिसन्ध्यमित्यारभ्य फलमाप्नुयादित्यन्तं नास्ति- ङ.। ४. तपोमयः- ङ.।

कुबेर इव वित्ताढ्यो जायते मदनोपमः ।
सायंकाले पठेद् यस्तु ध्यात्वा देवीं हृदम्बुजे ॥४० ॥
सर्वसिद्धियुतो भूत्वा विचरेद् भैरवो यथा ।
गुरुपूजायुतो भूत्वा कवचं प्रपठेद् यदि ॥४१ ॥
लक्ष्मीः सरस्वती तस्य निवसेन्मन्दिरे मुखे[1] ।
इदं कवचमज्ञात्वा मातङ्गीं यदि वा जपेत् ॥४२ ॥
इह लोके दरिद्रः स्याद् मृतः शूकरतां व्रजेत् ।
समाप्तं कवचं देवि श्रृणु मत्प्राणवल्लभे ॥४३ ॥
षट्सहस्रं जपेन्मन्त्रं दशांशं होमयेत् सुधीः ।
ब्रह्मवृक्षोद्भवैः काष्ठैर्होमात्[2] सर्वसमृद्धिदः ॥४४ ॥
तर्पणं चाभिषेकं च दशांशमाचरेत् सुधीः ।
तद्दशांशं महेशानि कुर्याद् ब्राह्मणभोजनम् ॥४५ ॥
ततः सिद्धो भवेन्मन्त्री नान्यथा मम भाषितम् ।
सकृत् कृते परेशानि यदि सिद्धिर्न जायते ॥४६ ॥
पुनस्तेनैव कर्तव्यं ततः सिद्धो भवेद् ध्रुवम् ॥४७ ॥

॥ इति गुप्तसाधनतन्त्रे दशमः पटलः ॥



१. सुखे- छ. । २. ब्रह्मवृक्षैर्भवेत्- छ. ।

## ॥अथैकादशः पटलः ॥

श्रीदेवी उवाच—

विश्वकर्ता विश्वहर्ता विश्वसंसारपालक[१] ।
त्वां विना संशयच्छेत्ता न हि त्राता च[२] कुत्रचित् ॥१ ॥

वैष्णवेषु च शैवेषु शाक्ते सौरे[३] च गाणपे ।
सर्वत्र विहितां मालां वद मे परमेश्वर ॥२ ॥

ईश्वर उवाच—

अक्षमाला महेशानि पञ्चाशद्वर्णरूपिणी ।
[४]अकारादिर्महेशानि क्षकारान्ता यतः प्रिये ! ॥३ ॥

अक्षमाला समाख्याता सर्वतन्त्रप्रपूजिता ।
अस्या जपनमात्रेण महामोक्षमवाप्नुयात् ॥४ ॥

श्रीदेवी उवाच—

योगमालाजपादेव[५] सर्वयोगेश्वर प्रभो ।
देहमध्यस्थितां[६] मालां पञ्चाशद्वर्णरूपिणीम् ॥५ ॥

तां विहाय महादेव अस्थिमालां[७] जपेत् कथम् ।
दीक्षितस्य च यच्चास्थि[८] तद्वर्जं वा कथं विभो ॥६ ॥

[९]यस्य छायादिसंस्पर्शादशुचिर्जायते पुमान्[१०] ।
तस्यास्थि च समानीय सर्वाङ्गे भूषणं कथम् ॥७ ॥

---

१. पालक- छ.।
२. न- क.।
३. शौरगणेऽपि च- छ.।
४. आकारादि- छ.।
५. जपाद् देव-ङ.।
६. देहमध्ये- क.।
७. अस्थिमाला करे- क.ङ.।
८. पृष्ठादिवर्ज्यं वापि-क.।
९. यस्येत्यारभ्य मत्प्राणवल्लभ इत्यन्तं नास्ति-क.।
१०. प्रभो- ङ.।

श्रीशिव उवाच—

शक्तिं च मन्त्रपूतं[१] च ब्राह्मणादीन् सुरेश्वरि।
वर्जयित्वा प्रयत्नेन श्रृणु मत्प्राणवल्लभे ॥८॥

कुर्याच्छवं तथा मालां मुण्डं श्मशानमेव च।
प्रणवं निष्कलं[२] साक्षाद् ब्रह्मविष्णुशिवात्मकम् ॥९॥

प्रणवं प्रजपेद् यस्तु स साक्षाद् विष्णुरूपधृक्।
ॐकारात् सर्ववर्णानि जायन्ते नात्र संशयः ॥१०॥

ॐकारं त्रिगुणं देवि गुणातीतं तु निष्कलम्[३]।
[४]गुरुवक्त्रान्महामन्त्रं प्राप्नोति[५] चैव मानवः ॥११॥

सर्वे वर्णा[६] महेशानि लीयन्ते प्रणवे प्रिये।
अत एव महेशानि प्रणवो ब्रह्मरूपकः[७] ॥१२॥

स्त्रीशूद्रयोः परेशानि प्रणवे नाधिकारिता।
तज्जातश्चैव चाण्डालः सर्वमन्त्रविवर्जितः ॥१३॥

मन्त्रहीने तु अस्थ्यादि सर्ववर्णविभूषितम्।
अकारादिक्षकारान्ता अस्थिमध्ये स्थिता सदा ॥१४॥

तिलार्द्धे चास्थिमध्ये च पञ्चाशद्वर्णरूपिणी।
अत एव बहिः कण्ठे ग्रीवायां च तथा करे ॥१५॥

सर्वत्राहं परेशानि महाशङ्खविभूषितः।
महाशङ्खाख्यमालायां यो जपेत् साधकोत्तमः ॥१६॥

अणिमादिविभूतीनामीश्वरो नात्र संशयः।
सर्ववर्णमयी माला [८]सर्वदेवेषु योजिता ॥१७॥

---

१. मन्त्रपूताश्च- ङ.। २. निष्फलम्- ग.। ३. निष्फलम्- छ.।
४. गुरोरग्रा- क.। ५. यदि प्राप्नोति- ङ.। ६. सर्ववर्णाः परेशानि- ङ.।
७. रूपधृक्- क., रूपभाक्-ङ.। ८. महाशङ्खाख्यया पुनः- क. ङ.।

वर्णहीनं[१] नास्ति मन्त्रं कदाचिदपि पार्वति ।
महाशङ्खं महेशानि सर्ववर्णविभूषितम् ॥१८ ॥
अत एव महाशङ्खं सर्वतन्त्रेषु[२] योजितम् ।
यदि भाग्यवशाद् देवि ! महाशङ्खं[३] च लभ्यते ॥१९ ॥
स सिद्धः सगणः सोऽपि स च विष्णुर्न संशयः ।
तदैव सहसा सिद्धिर्नात्र कार्या विचारणा ॥२० ॥
गोपुच्छसदृशीं कुर्यादथवा सर्परूपिणीम् ।
स्थूलादि[४] सूक्ष्मपर्यन्तं क्रमेण ग्रथनं चरेत् ॥२१ ॥
मूलेन ग्रथनं कार्यं प्रणवेनाऽथवा प्रिये[५] ।
ब्रह्मग्रन्थिं प्रयत्नेन दद्यात् साधकसत्तमः ॥२२ ॥
सूत्रद्वयं परेशानि मिलितं[६] कारयेत् ततः ।
मेरुं च ग्रहणं[७] कार्यं तदूर्ध्वे ग्रन्थिसंयुतम् ॥२३ ॥
समीपे[८] गुरुदेवस्य संस्कारमाचरेत् सुधीः ।
स्थूलावधि जपेन्मन्त्रं सूक्ष्मभागे समापयेत् ॥२४ ॥
पुच्छावधि जपाद् देवि सिद्धिहानिः प्रजायते ।
शिरे ध्यात्वा[९] जपेन्मालां गुरोर्ध्यानपुरःसरम् ॥२५ ॥
सम्भाव्य[१०] मालां भुजगेन तुल्यां कथाप्रसङ्गेन इव प्रदा स्यात् ।
जपेन्मदाङ्गं लभते तवाङ्गं प्रदीप्य कात्यायनि कामनादम् ॥२६ ॥

॥ इति गुप्तसाधनतन्त्रे एकादशः पटलः ॥

---

१. सर्वहीनं- क. । २. सर्वकर्मसु सर्वमन्त्रेषु- ङ. । ३. शङ्खं लभेन्नरः- क. ङ. ।
४. स्थूला सूक्ष्मा च- छ. । ५. पुनः- ङ. । ६. मेलनम्- क. । ७. प्रथमं- क., ग्रथनं- ङ. ।
८. 'समीपे गुरुदे' इत्येव- क. । ९. धृत्वा- ङ. । १०. अयं श्लोको ङ. नास्ति ।

## ॥अथ द्वादशः पटलः ॥

[१]श्रीपार्वती उवाच—

देवदेव महादेव संसारार्णवतारक ।
वेदमातेति विख्याता गायत्री च कथं भवेत् ॥१ ॥

श्रीशिव उवाच—

शृणु देवि प्रवक्ष्यामि गायत्रीं परमाक्षरीम् ।
वेदमातेति विख्याता सर्वतन्त्रप्रपूजिता ॥२ ॥

हालाहलं समुद्धृत्य नत्यक्षरं समुद्धरेत् ।
वामकर्णयुतं[२] कृत्वा पुनर्नाभिं समुद्धरेत् ॥३ ॥

कर्णयुक्तं मूर्ध्नि रेफं ततश्च सुरवन्दिते ।
वारुण्यां रसनायुक्तं [३]चन्द्रराजं ततः परम् ॥४ ॥

नान्तयुक्तं सर्गयुक्तं चैवं व्याहृतिमुद्धरेत् ।
तत्पदं च समुद्धृत्य सवितुस्तदनन्तरम् ॥ ५ ॥

वरेण्यमिति चोच्चार्य भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् प्रणवं तदनन्तरम् ॥ ६ ॥

इति जप्त्वा महेशानि साक्षान्नारायणो भवेत् ।
धियो योर्मध्यभागे च यकारद्वयमेव च ॥ ७ ॥

अत एव [४]महादेवि अनन्तश्रुतिरेव च ।
इति जप्त्वा महेशानि मुक्तो भवति तत्क्षणात् ॥ ८ ॥

अन्त्ययकारयोः स्थाने ओकार इति यः पठेत् ।
स चाण्डाल इति ख्यातो ब्रह्महत्या दिने दिने ॥ ९ ॥

---

१.श्रीपार्वत्युवाचेत्यारभ्य भवेदित्यन्तं नास्ति- ङ.। २.समायुक्तं- ङ.।
३.चन्द्रबीजं- ङ। ४.महेशानि- ङ.।

अत एव[1] महेशानि तव स्नेहात् प्रकाशितम् ।
दशभिर्जन्मजनितं शतेन च पुरा कृतम् ॥१० ॥

त्रियुगं तु सहस्रेण गायत्री हन्ति पातकम् ।
लक्षं जप्त्वा तु[2] तां देवीं गायत्रीं परमाक्षरीम् ॥११ ॥

सर्वसिद्धीश्वरो भूत्वा देववद् विहरेत् क्षितौ ।
यद्गृहे विद्यते देवि एतत् तन्त्रं सुधामयम् ॥
तद्गृहं परमेशानि कैलाससदृशं सदा ॥१२ ॥

नित्यं च पूजयेत् तन्त्रं स सिद्धो नात्र संशयः ।
नित्यं नित्यं महेशानि यः स्पृशेत् तन्त्रमुत्तमम् ॥१३ ॥

स पूतः सर्वपापेभ्यः अन्ते[3] शिवमयो भवेत्[4] ।
यो लिखति त्विदं तन्त्रं शिववाक्यं सुधामृतम् ॥१४ ॥

गङ्गास्नानसमं पुण्यमन्ते शिवमवाप्नुयात् ।
यो यत्र पठते नित्यं तन्त्रराजमिदं शुभम् ॥१५ ॥

स सर्वदुष्कृतिं तीर्त्वा अन्ते देवीपदं व्रजेत् ॥१६ ॥

॥इति गुप्तसाधननाम्नि महातन्त्रराजे पार्वतीशिवसंवादे
द्वादशः पटलः समाप्तः ॥

॥समाप्तश्चायं ग्रन्थः ॥

---

१. सावित्री परमा विद्या त्रैलोक्येषु च दुर्लभा ।
अस्या ग्रहणमात्रेण भूपूज्यो नात्र संशयः ॥
ध्यानं चैव तथा पूजां निर्वाणं- ङ. ।

२. ततो- ङ. । ३. सदाशिवपरो- ङ. ।

४. अत्रैव पटलः समाप्तः- ङ. ।

# मायातन्त्रम्

## ।।अथ प्रथमः पटलः ।।

### ।।ॐ नमः परमदेवतायै ।।

श्रीईश्वर[१] उवाच—

श्रृणु प्रिये[२] प्रवक्ष्यामि तत्त्वमन्यद् यथा पुरा ।
तोयव्याप्ते तु सर्वत्र स्वर्गे मर्त्ये रसातले ।।१ ।।

विश्वे चैकार्णवीभूते न सुरासुरमानवाः ।
न च क्षितिर्न वा किञ्चित् तोयमात्रावशेषिताः[३] ।।२ ।।

तदा[४] विश्वोद्भवाद्[५] देवात् सिसृक्षा समजायत ।
ध्यात्वा स्वर्गादिसमये मायां सस्मार च प्रभुः ।।३ ।।

तदा वटदलं[६] भूत्वा तोयान्तः समवस्थितम्[७] ।
ततो नारायणं देवं सा दधार स्वलीलया ।।४ ।।

विचचार तदा तोये स्वेच्छाचारः स्वयं विभुः[८] ।
विचरन्तं वटदले तोयेषु परमेश्वरम् ।।५ ।।

वटवृक्षस्थितस्तत्र मार्कण्डेयो महामुनिः ।
ददर्श परमेशानं शिवमव्यक्तरूपिणम् ।।६ ।।

तुष्टाव स तदा हृष्टो मुनिः परमकारणम् ।
नमस्ते देवदेवेश सृष्टिस्थित्यन्तकारक[९] ।।७ ।।

---

१.ईश्वर उवाच-क.। २.देवि- क.ख.ङ.। ३.वशेषितम्- क.ग.।
४.ततो- ग.। ५.विश्वेश्वराद्देवात्-ग,विश्वन्तरे देवः सिसृक्षुः- छ.।
६.तलम्- ग.। ७.समवस्थितः- ग.ङ.,शवसंस्थिता- क.।
८.वितुः- छ.,प्रभुः- क.ग.। ९.कारण- क.ग.।

ज्योतीरूपाय विश्वाय विश्वकारणहेतवे ।
निर्गुणाय गुणवते गुणभूताय ते नमः ॥८ ॥
केवलाय विशुद्धाय विशुद्धज्ञानहेतवे ।
मायाधाराय[१] मायेशरूपाय परमात्मने ॥९ ॥
नमः प्रकृतिरूपाय [२]पुरुषायेश्वराय च ।
गुणत्रयविभागाय ब्रह्मविष्णुहराय च ॥१० ॥
नमो देव्यै महादेव्यै शिवायै सततं नमः ।
मायायै परमेशान्यै मोहिन्यै ते नमो नमः ॥११ ॥
जगदाधाररूपायै प्रकाशायै नमो नमः ।
ज्ञानिनां ज्ञानरूपायै प्रकाशायै नमो नमः ॥१२ ॥
[३]जगदाधाररूपायै प्रकाशायै नमो नमः ।
.......... जगतां भागहेतवे ॥१३ ॥
प्रपन्नोऽस्मि महामाये विश्वसृष्टिर्विधीयताम् ।
इति स्तुत्वा[४] मुनिस्तत्र विरराम सुसंयतः[५] ॥१४ ॥
कृताञ्जलिपुटो भूत्वा दण्डवत् प्रपपात च ।
तत उत्थाय देवस्य[६] नाभिपद्मसमुद्भवम् ॥१५ ॥
चतुर्वक्त्रं रक्तवर्णं ददर्श परमं शिशुम् ।
सृष्टौ नियोजयामास तं ब्रह्माणं सुरेश्वरम्[७] ॥१६ ॥
ध्यात्वा ब्रह्म तदा तत्र सप्तर्षीन् परमेश्वरि[८] ।
जनयामास मनसा मानसास्ते ह्यतः प्रिये ॥१७ ॥
विना शक्तिं न [९]शक्तास्ते सृष्टिं कर्तुं मुनीश्वराः ।
योनौ सृष्टिरतो ज्ञेया ततो योनिमकल्पयत् ॥१८ ॥

---

१. मायाधराय- क.ख.। २. पुरुषाषेश्वराय- ग.छ.।
३. जगदाधाररूपायै जगतां प्राणहेतवे- च.ङ.। ४. स्तुत्या- क.ङ.च.। ५. स्वयं यत्- क.।
६. देवेशं- ङ.च.। ७. सुरेश्वरः- छ.। ८. परमेश्वरी- क.। ९. शक्या- क.।

ततः कश्यपनामानं मुनिं पुनरजीजनत् ।
पुनः सृष्टौ च तं पुत्रं ब्रह्मा प्रोवाच यत्नतः ॥१९ ॥

जनयामास ततः कन्यां गुणरूपसमन्विताम् ।
नियोज्य मुनये तां तु ब्रह्मा प्रोवाच सृष्टये ॥२० ॥

नानायोन्या[१] कृतीस्तासु समस्त[२] जीवजातयः ।
उत्पादयामास तदा प्रजापतिरथ स्थितः ॥२१ ॥

ततो नारायणो देवस्तुष्टो मायामुवाच सः ।
वटपत्रस्वरूपा त्वं यतो मां विधृताम्भसि ॥२२ ॥

अतो धर्मस्वरूपासि जगत्यस्मिन् सनातनी ।
आराधयिष्यन्ति भुवि मनुजास्त्वां[३] सनातनीम् ॥२३ ॥

सर्वकामेश्वरो[४] लोके मायां धर्मस्वरूपिणीम् ।
मन्त्रमाराधने चास्याः प्रवक्ष्यामि श्रृणु प्रिये ॥२४ ॥

नादेन्दुसंयुतं दान्तं धर्माय हृत्[५] ततः परम् ।
षडक्षरो महामन्त्रो धर्मस्याराधने मतः ॥२५ ॥

यं यं[६] कामं समुद्दिश्य पूजयिष्यन्ति मानवाः ।
अचिरादेव पश्यन्ति सर्वं कामं न संशयः ॥२६ ॥

एवं ते कथितं देवि[७] मायासम्भवविस्तरम् ।
न कस्मैचित् प्रवक्तव्यं किमन्यत् श्रोतुमिच्छसि ॥२७ ॥

॥ इति श्रीमायातन्त्रे प्रथमः पटलः ॥

---

१. कृती जन्तुः समन्तात्- च.। २. मनुष्यः- ङ.। ३. संमुक्तास्त्वां-क.।
४. सर्वकामेप्सरो- छ.। ५. कृत्ततः- क.। ६. यं कामं समनुद्दिश्य- ग.।
७. यथासम्भव- ग. ङ.।

## ॥अथ द्वितीयः पटलः ॥

श्रीदेवी उवाच—

कथयेशान सर्वज्ञ यतोऽहं तव वल्लभा।
ब्रूयुः स्निग्धाय शिष्याय गुरवो गुह्यमप्युत ॥१ ॥

आराधनं तु मायायाः कथयस्वानुकम्पया।
येन लोकास्तरिष्यन्ति महामोहात् सुरेश्वर ॥२ ॥

श्रीईश्वर उवाच—

श्रृणु देवि प्रवक्ष्यामि तस्याश्चाराधनं महत्।
या चिच्छक्तिः सैव माया सा दुर्गा परिचक्ष्यते ॥३ ॥

या दुर्गा सा महाकाली तारिणी [१] बगलामुखी।
अन्नपूर्णा च सा माया गृहिणां [२] कल्पशाखिनी ॥४ ॥

भोगदा [३] मोक्षदा देवी तस्मात् पूर्णेति चक्ष्यते।
माया गुणवतां [४] देवी निर्गुणानां चिदात्मिका ॥ ५ ॥

यदि सा बहुभिः पुण्यैः प्रसीदति जनान् प्रति।
तदैव कृतकृत्यास्ते संसारात् ते बहिष्कृताः ॥ ६ ॥

दुरन्ता चावशा [५] माया मुनीनामपि मोहिनी।
श्रीकृष्णं मोहयामास राधा [६] च गोकुले स्थिता ॥ ७ ॥

स [७] चैव देवकीपुत्रस्तामाराध्य निरन्तरम्।
प्रकृताचारनिरतो जनानादेशयत् प्रभुः ॥ ८ ॥

---

१. महेश्वरी- ङ., गणेश्वरी- च.।
२. गृहणी कल्पनाशिनी- च.।
३. भोगमोक्षप्रदा- क. ग.।
४. गुणवती- ग. छ.।
५. सावशा- क.।
६. सा राधा-क., राधा गोकुलसंस्थिता- ग. ङ. च.।
७. सा- च.।

अस्या मन्त्रं प्रवक्ष्यामि श्रृणुष्व कमलानने ।
शिवो वह्निसमारूढो [१] वामनेत्रेन्दुभूषणः ॥९ ॥
एषा तु परमा विद्या देवैरपि सुदुर्लभा ।
ऋषिर्ब्रह्मास्य मन्त्रस्य त्रिष्टुप् छन्द उदाहृतम् ॥१० ॥
देवता मुनिभिः प्रोक्ता माया श्रीभुवनेश्वरी ।
चतुर्वर्गेषु मेधावी विनियोगः प्रकीर्तितः ॥११ ॥
अङ्गानि माययान्यस्य [२] ध्यायेद् देवीं चतुर्भुजाम् ।
रक्तवर्णां पद्मसंस्थां नानालङ्कारभूषिताम् ॥१२ ॥
पट्टवस्त्रपरीधानां कलमञ्जीररञ्जिनीम् ।
हारकेयूरवलयप्रवालपरिशोभिताम् ॥१३ ॥
[३] अर्केन्दुशेखरां बालां नयनत्रितयान्विताम् ।
एवं ध्यात्वा महामायामुपचारैः समर्चयेत् [४] ॥१४ ॥
गुरुं प्रणम्य विधिवद् गृह्णीयात् परमं मनुम् ।
ततो देवीं प्रसाद्यैवं कृतकृत्यो भवेत् सुधीः ॥१५ ॥
अथ दुर्गामनुं वक्ष्ये [५] श्रृणुष्व कमलानने ।
यस्याः प्रसादमासाद्य भवेद् गङ्गाधरः स्वयम् ॥१६ ॥
[६] खान्तं बीजं समुद्धृत्य वामकर्णविभूषितम् ।
इन्दुबिन्दुसमायुक्तं बीजं परमदुर्लभम् ॥१७ ॥
चतुर्वर्गप्रदं साक्षान्महापातकनाशनम् ॥
एकाक्षरी समा नास्ति विद्या त्रिभुवने प्रिया [७] ॥१८ ॥
विना गन्धैर्विना पुष्पैर्विना होमपुरःसरैः ।
विनाऽऽयासैर्महाविद्या [८] जपमात्रेण सिद्धिदा ॥१९ ॥

---

१. वसोर्नेत्रेन्दुभूषणम्- क., वामनेत्रविभूषितम्- च. । २. ध्यात्वा- क. । ३. अर्धेन्दु- ख.ङ.च. ।
४. समर्पयेत्- घ. । ५. देवीं- क. । ६. फान्तं वर्णं- ख. ।
७. त्रिभुवने क्वचित्- क.ख., त्रिभुनेश्वरी- ग.ङ. । ८. यागैः- क.ग., योगैः- च. ।

नारदोऽस्य ऋषिर्देवि गायत्रीच्छन्द ईरितम् ।
देवता च जगद्धात्री दुर्गा दुर्गतिनाशिनी ॥२० ॥
चतुर्वर्गप्रदा दुर्गा सर्वतन्त्रेषु[१] संस्थिता ।
विविधा सा महाविद्या तच्छृणुष्व गणेश्वरि ॥२१ ॥
कूर्चाद्यां वा जपेद् विद्यां चतुर्वर्गफलाप्तये ।
वाग्भवाद्यां जपेद् विद्यां तदन्ते वह्निसुन्दरी ॥२२ ॥
लज्जाद्यां वा जपेद् विद्यां फडन्तां[२] वा जपेत् पुनः ।
वधूबीजयुतां वापि स्वाहान्तां प्रजपेत् कृती ॥२३ ॥
लक्ष्म्याद्यां वा जपेद् विद्यां चतुर्वर्गफलाप्तये ।
[३]वाग्भवाद्यां जपेद् वापि प्रणवाद्यां जपेत् तथा ॥२४ ॥
[४]एवं सा त्र्यक्षरी विद्या कथिता ब्रह्मयोनिना ।
दीर्घषट्कसमायुक्तनिजबीजानि पार्वति ॥२५ ॥
विन्यसेदात्मनो देहे हृदयादिषु शाम्भवि ।
ध्यानमस्याः प्रवक्ष्यामि श्रृणु पर्वतनन्दिनि ॥२६ ॥
सिंहस्कन्धसमारूढां नानालङ्कारभूषिताम् ।
चतुर्भुजां महादेवीं नागयज्ञोपवीतिनीम् ॥२७ ॥
रक्तवस्त्रपरीधानां बालार्कसदृशीतनुम् ।
नारदाद्यैर्मुनिगणैः सेवितां भवगेहिनीम्[५] ॥२८ ॥
[६]त्रिबलीवलयोपेतनाभिनालमृणालिनीम् ।
रत्नद्वीपमयद्वीपे [७]सिंहासनसमन्विते ॥२९ ॥

१. सत्त्वेषु- ख.च., तत्त्वेषु ङ.। २. फस्तां- छ.।
३. कामबीजादिकं वापि फडन्तां वा जपेत् पुनः- ख.ङ.च.। ४. एवमेकाक्षरी- च.।
५. सुन्दरीम्- ख.।
६. त्रिवलीवलयेत्यारभ्य ध्यायेत्तां भवसुन्दरीम् इति सार्धैकश्लोको- ग. नास्ति.।
७. महा- ङ.च.छ.।

प्रफुल्लकमलारूढां ध्यायेत् तां भवसुन्दरीम् ।
एवं ध्यात्वा यजेद् देवीमुपचारैः पृथक् पृथक् ॥३० ॥

भूतशुद्धिं पुरा कृत्वा न्यसेद् देहेषु पार्वति ।
स्वाङ्के उत्तानकौ हस्तौ प्रणिधाय ततः परम् ॥३१ ॥

हृदये हंसमन्त्रेण जीवं दीपनिभं सुधीः ।
स्थापयेत् परमे व्योम्नि पृथिव्यादीनि च क्रमात् ॥३२ ॥

[१]शिवापेष्ट्यादिभेदेन भिद्यते मरुतो गतिः ।
मरुत्सखेन तेनेह पच्यते भक्तमेव तु ॥३३ ॥

तस्मान्मन्त्री गुरोर्ज्ञात्वा नयेत् सर्वं परोपरि[२] ।
दीपयेदव्यवच्छिन्नं पावकं सर्वतोमुखम् ॥३४ ॥

पश्येदवान्तरं[३] देहं [४]कर्मरूपं ततः परम् ।
वामकुक्षिस्थितं पापं पुरुषं कज्जलप्रभम् ॥३५ ॥

तं संशोष्य तथा दह्य [५]जीवाधारं तु प्लावयेत् ।
मूलाधारात् ततो जीवं सोऽहंमन्त्रेण देशिकः ॥३६ ॥

नयेत् [६]परशिवां हंसमन्त्रेणाधारमानयेत् ।
एषा भूतशुद्धितन्त्रे[७] प्रक्रिया कथिता मया ॥३७ ॥

तव स्नेहेन देवेशि चेदानीं प्रकटीकृता ॥३८ ॥

॥ इति श्रीमायातन्त्रे द्वितीयः पटलः ॥



---

१. शिवो वेश्मादिभेदेन- क., शिवापद्मत्वादि- ग., शिवपक्षादि- ङ., शिवादिकप्रभेदेन-च. ।
२. शिवोपरि- च. । ३. अन्तान्तरं- च., पश्येदेवान्तकं- क. ।
४. कामरूपं- ख. । ५. जीवमाधारमानयेत्- ङ. च. ।
६. परशिवे- क. ख. ग. । ७. भूतशुद्धिस्तु कृपया कथिता- च. ।

## ॥अथ तृतीयः पटलः ॥

श्रीदेवी[१] उवाच—

कथयस्व महादेव देव्या यन्त्रं स्तवं तथा ।
कवचं परमाश्चर्यं यदुक्तं परमेष्ठिना ॥१ ॥

श्रीईश्वर[२] उवाच—

श्रृणु प्रिये प्रवक्ष्यामि यन्त्रं परमदुर्लभम् ।
त्रिकोणं विन्यसेत् पूर्वं बहिः [३]षट्कोणमेव च ॥२ ॥
[४]त्रिबिम्बसंस्थितं [५]सर्वमष्टपत्रसमन्वितम् ।
त्रिरेखासहितं कार्यं तत्र भूपुरसंयुतम् ॥३ ॥
समीकृत्य यथोक्तेन विलिखेद् विधिनाऽमुना ।
नानास्त्रसंयुतं कार्यं यन्त्रं[६] मन्त्रसमन्वितम् ॥४ ॥
तत्र तां पूजयेद् देवीं मूलप्रकृतिरूपिणीम् ।
पद्मस्थां पूजयेद् दुर्गां सिंहपृष्ठनिषेदुषीम् ॥५ ॥
प्रभाद्याः पूजयेत् तास्तु . . . . . . ।
प्रभाद्याः शक्तयः पूज्या गन्धाद्यैर्नवकोणके ॥६ ॥
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः ।
सुप्रभा विजया सर्वसिद्धिदा नव शक्तयः ॥ ७ ॥
[७]ह्रीमाद्याः पूजयेत् तास्तु गन्धचन्दनवारिणा ।
ॐकारं पूर्वमुच्चार्य ह्रींकारं तदनन्तरम् ॥ ८ ॥
यथा पदं चतुर्थ्यन्तं पूजयेत् क्रमतः प्रिये[८] ।
शङ्खपद्मनिधी देव्या वामदक्षिणयोगतः ॥ ९ ॥

---

१. देवी- क.ग.। २. ईश्वर- क.ग., शिव-च.। ३. नवकोण-च.।
४. कत्रिवृत्तसहितं-च., त्रिरवृत्तिसहितं-ख., त्रिरेखासहितं-ङ.। ५. सर्वं षष्ठ-क.।
६. मन्त्रं तन्त्र-क., इष्टमन्त्रं- च., यन्त्रं तत्र- ख.। ७. ह्रीं माया- क.। ८. परम्- ग.ङ.।

पूजयेत् परया भक्त्या रक्तचन्दनपूर्वकैः ।
अर्घ्यदानं[१] सदा कुर्यात् पूजान्ते नगनन्दिनी[२] ॥१० ॥

[३]अङ्गावृतीः पुनः पूज्याः पत्रकोणेषु मातरः ।
[४]वज्राद्यायुधसंयुक्ता भूपुरे लोकनायकाः ॥११ ॥

एवं संपूज्य देवेशि स्तोत्रं च कवचं पठेत् ।
श्रृणु स्तोत्रं महेशानि यदुक्तं परमेष्ठिना ।
दुर्गे मातर्नमो नित्यं [५]शत्रुदर्पविनाशिनी ॥१२ ॥

भक्तानां कल्पलतिके नारायणि नमोऽस्तु ते ।
[६]सर्वमङ्गलमाङ्गल्ये शिवे [७]सर्वार्थसाधिके ॥१३ ॥

शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ।
नमो [८]नगात्मजे शैलवासे[९] समन्विते ॥१४ ॥

भक्तेभ्यो वरदे मातर्नारायणि नमोऽस्तु ते ।
निशुम्भशुम्भमथिनि[१०] महिषासुरमर्दिनि ॥१५ ॥

आर्तार्तिनाशिनि शिवे नारायणि नमोऽस्तु ते ।
इन्द्रादिदिविषद्वृन्दवन्दिताङ्घ्रिसरोरुहे ॥१६ ॥

नानालङ्कारसंयुक्ते नारायणि नमोऽस्तु ते ।
नारदाद्यैर्मुनिगणैः सिद्धविद्याधरोरगैः ॥१७ ॥

पुरः कृताञ्जलिपुटे नारायणि नमोऽस्तु ते ।
देवराजकृतस्तोत्रे [११]व्याधराजप्रपूजिते ॥१८ ॥

---

१. अर्घ्यदानमित्यारभ्य भूपुरे लोकनायका- ग. नास्ति ।　२. नगनन्दिनीम्-क. ।
३. अङ्गावृतिः - क. ख., अङ्गावृत्तीः-ख., गङ्गाशक्तिः-ङ. च. ।　४. वक्त्राद्यां मधुसंयुक्तां- क. ।
५. दैत्यदर्पनिषूदिनि- ख. ग. ङ., दुर्गा दुर्गतिनाम्नी वै दैत्यदर्पविनाशिनी- च. ।
६. अयं- क. उ. ।　७. सर्वार्तिनाशिनि- ग. ।
८. गणात्मजे- च., नागात्मजे- ख. ङ. ।　९. शैलवामे सिले ...क., वासे शीलसमन्विते- ख. ।
१०. मथने- क. ख. ङ. च., मथनि- ग. ।　११. कविराज- च. ।

त्रैलोक्यत्राणसहिते नारायणि नमोऽस्तु ते ।
अभक्तभक्तिदे चण्डि मुग्धबोधस्वरूपिणि[१] ॥१९ ॥
अज्ञानज्ञानतरणि[२] नारायणि नमोऽस्तु ते ।
इदं स्तोत्रं पठेद् यस्तु प्रदक्षिणपुरःसरम् ।
तस्य शान्तिप्रदा देवी दुर्गा दुर्गतिनाशिनी ॥२० ॥

श्रीदेवी उवाच—

कथिताः परमेशान दुर्गामन्त्रास्त्वनेकधा ।
कवचं कीदृशं नाथ पूर्वं मे न प्रकाशितम् ।
तद्वदस्व महादेव यतोऽहं शरणं गता ॥२१ ॥

श्रीमहादेव उवाच—

शृणु प्रिये प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
पुरा देवासुरे युद्धे यदुक्तं शम्भुना त्वयि ॥२२ ॥
[३]त्वं न स्मरसि कार्येण मुग्धाः प्रायो हि योषितः ।

अथ श्रीजगद्धात्री दुर्गाकवचस्य नारदऋषिरनुष्टुपछन्दः[४] श्रीजगद्धात्रीदुर्गा देवता चतुर्वर्गसिध्यर्थे विनियोगः ।

ओंकारो मे शिवः पातु ह्रीङ्कारः पातु भालकम् ।
दुं पातु वदनं दुर्गा ङेयुक्ता पातु चक्षुषी ॥२३ ॥
नासिकां मे नमः[५] पातु कर्णावष्टाक्षरी सदा ।
प्रणवो मे गलं पातु केशान् श्रीबीजमन्ततः ॥२४ ॥
लज्जा दन्तान् समारक्षेज्जिह्वां दुर्गा सदाऽवतु ।
यै[६] नमः पातु वक्त्रान्तं तालुं[७] दुङ्काररूपिणी[८] ॥२५ ॥

---

१. स्वरूपिणी- क.ङ. । २. अज्ञानज्ञानभवने- ङ.च. । ३. तन्न- क.ग., नानु- ङ.च. ।
४. गायत्री- च. । ५. शिवः- छ. । ६. मै- क.ग. ।
७. ओष्ठौ पातु नवाक्षरी- ग., ओष्ठौ गन्धौ नवाक्षरी- ङ.च. ।
८. इति मायातन्त्रे दुर्गास्तोत्रं समाप्तम्-इति ङ. ।

एकाक्षरी महाविद्या वक्षो[१] रक्षतु सर्वदा ।
कूर्चाद्या विविधा विद्या[२] बाहू मे परिरक्षतु ॥२६ ॥

ॐ दुर्गे पातु जङ्घे द्वे[३] दुर्गा रक्षतु जानुनी ।
द्वावुरू पातु युगलं रक्षिणि स्वाहयान्विता ॥२७ ॥

[४]जयदुर्गा सदा पातु गुल्फे द्वे चण्डिकाऽवतु ।
कटिं जया पातु सदा नाभिं मे विजयाऽवतु ॥२८ ॥

उदरं पातु मे कीर्तिः पृष्ठं प्रीतिः सदाऽवतु ।
प्रभा पादाङ्गुली:[५] पायात् श्रद्धा स्कन्धौ सदाऽवतु[६] ॥२९ ॥

मेधा कराङ्गुली:[७] सर्वा नखरान्[८] श्रुतिमेव[९] च ।
शङ्खो गुल्फं तु[१०] पायान्मे चक्रं लिङ्गं सदाऽवतु ॥३० ॥

सर्वाङ्गं मे सदा पातु शङ्खो रक्षतु सर्वतः ।
[११]दुर्गा मां पातु सर्वत्र जयदुर्गा च दारकान् ॥३१ ॥

यद् यदङ्गं महेशानि वर्जितं कवचेषु[१२] च ।
तत् सर्वं रक्ष मे देवि पतिपुत्रान्विता सती[१३] ॥३२ ॥

इति ते कथितं देवि कवचं वज्रपञ्जरम् ।
[१४]धृत्वा रक्षोभयाच्छक्रो दिवि दैत्यगणान् बहून् ॥३३ ॥

[१५]विधृत्य कवचं वाणी[१६] दुन्दुभिं च सहानुजम् ।
[१७]हत्वा सर्वत्र कपिराड् विजयी वानरोत्तमः ॥३४ ॥

---

१.कण्ठं- क.। २.देवी-च.,कटि जङ्घा पातु मज्जा- च.। ३.मे- क.। ४.जया-ग.। ५.पादाङ्गुलान्-ग.। ६.एषोऽर्धश्लोको-ग.नास्ति। ७.कराङ्गुलान्- ग.। ८.स्वरान् श्रुतिवचस्ततः- क.। ९.श्रुतिरेव- ङ.ध.। १०.गुह्यं तु मे पायात्- क.ग.।

११.पाशो मे विदिशः पातु दिशः पाशाङ्कुशौ मम ।
चापो दारान् शरः पुत्रान् बन्धूंश्चापि सदावतु ।
इन्द्राद्याः पान्तु मे चित्तं वज्राद्यास्तु कुटुम्बकान् ॥ १२.कवचेन तु- च.।

१३.सदा- च.। १४.धृत्वा (ध्यात्वा) तु क्षोभयेच्छत्रून् देवी दैत्यभुजे तथा- ङ.च.।

१५.विधृत्येत्यारभ्य वामभुजे तथेति- ग.। १६.वालि- च.। १७.धृत्वा- ङ.च.।

सयन्त्रं कवचं चैव[१] लिखित्वा भूर्जपत्रके ।
कण्ठे वा दक्षिणे बाहौ नारी वामभुजे तथा ॥३५ ॥

अभीष्टं लभते मर्त्यो वत्सरान्नात्र संशयः ।
काकवन्ध्या च या नारी मृतवत्सा[२] च या भवेत् ॥३६ ॥

बह्वपत्या जीववत्सा बन्ध्या धृत्वा प्रसूयते ।
शतमष्टोत्तरावृत्तिः पुरश्चर्या विधीयते ॥३७ ॥

षण्मासतो भवेत् सिद्धिर्यथावत् परिचारतः ।
अज्ञात्वा कवचं चैतद् दुर्गामन्त्रांस्तु यो जपेत् ॥
अल्पायुर्निर्धनो मूर्खो भवत्येव न संशयः ॥३८ ॥

॥ इति श्रीमायातन्त्रे तृतीयः पटलः ॥



१. कवचं चैतत्- च.। २. मृतापत्या-ङ. च.।

## ॥अथ चतुर्थः पटलः ॥

[१] श्रीईश्वर उवाच—

श्रृणु पार्वति मन्त्राणां पुरश्चर्याविधिं प्रिये ।
जपेदष्टाधिकं लक्षं पुरश्चरणसिद्धये ॥१ ॥

दशांशं होमयेदाज्यैस्तिलमिश्रैः सुसाधकः ।
तर्पणं चाभिषेकं च तद्दशांशत आचरेत्[२] ॥२ ॥

[३] ब्राह्मणान् भोजयेदन्ते दक्षिणां गुरवे ददेत् ।
एवं सिद्धमनुर्मन्त्री प्रयोगांस्तु समाचरेत् ॥३ ॥

मत्स्यमांसैः[४] सूपपूपैर्मृगैः शशकशल्लकैः ।
पूजयेत् परया भक्त्या दुर्गां दुर्गतिनाशिनीम्[५] ॥४ ॥

स्वयम्भुकुसुमैः शुक्रैः सुगन्धिकुसुमान्वितैः[६] ।
जपायावकसिन्दूररक्तचन्दनसंयुतैः ॥५ ॥

नानामांसैः शुभैर्द्रव्यैर्गन्धद्रव्यादि[७] संस्कृतैः ।
काकैः शुकैः पेचकैश्च मेषैश्छागैर्नरैरपि[८] ॥६ ॥

गजैरुष्ट्रैः खरैर्गृध्रैः पूजयेद् विधिनाऽमुना ।
तदा भवेन्महासिद्धिर्नात्र कार्या विचारणा ॥७ ॥

मालाविधानं[९] परमं श्रृणुष्व कमलानने ।
अकारादिक्षकारान्ताः पञ्चाशद्बिन्दुसंयुताः ॥८ ॥

---

१.ईश्वर उवाच- ग.ङ.,शिव उवाच-च.। २.आचमेत्- च.।
३.अयं श्लोकः- ग.नास्ति । ४.मद्यजावा- ग.,मत्स्यमांसप्रसूनैश्च- च.,सुरामांसै बहुविधैः- ङ.।
५.हारिणीम्- क.ग.ङ.च.। ६.द्रव्यसंयुतैः सुगन्धैः- च.।
७. दग्धसिक्यादि- क. ख., दग्धासिक्तादि- छ.। ८. मेषैश्च छागलैस्तथा-च.।
९.मपरं- छ.।

क्षमेरुका[१] महीप्रान्ता वर्णमाला सुसिद्धिदा ।
ग्रथिता[२] शक्तिसूत्रेण [३]चारोहप्रतिरोहतः ॥९ ॥

जपेदेकाग्रमनसा [४]साष्टवर्गाक्षरान्[५] क्रमात् ।
[६]पुच्छादिषु महादेवि यावन्मुखमतन्त्रतः[७] ॥१० ॥

क्षकारं तु मुखं देवि मेरुं तद् विद्धि पार्वति ।
पद्मबीजादिभिर्माला बहिर्यागे श्रृणुष्व ताः ॥११ ॥

पद्माक्षशङ्खरुद्राक्ष[८] पुत्रजीवक[९] मौक्तिकैः ।
स्फाटिकैर्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा ॥१२ ॥

राजतैः कुशमूलैश्च गृहस्याक्षरमालिका ।
अङ्गुलीगणनादेकं पर्वण्यष्टगुणं भवेत् ॥१३ ॥

पुत्रजीवैर्दशगुणं शतं शङ्खैः सहस्रकम् ।
प्रवालैर्मणिरत्नैश्च दशसहस्रकं[१०] मतम् ॥१४ ॥

तदेव [११]स्फाटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते ।
पद्माक्षैर्दशलक्षं स्यात् सौवर्णैः कोटिरुच्यते ॥
कुशग्रन्थ्या [१२]कोटिशतं रुद्राक्षैः [१३]स्यादनन्तकम् ॥१५ ॥

प्रवालैर्विहिता माला प्रयच्छेत् [१४]पुष्कलं धनम् ।
वैष्णवे तुलसीकाष्ठैर्गजदन्तैर्गणेश्वरे ॥१६ ॥

त्रिपुराया जपे शस्ता रुद्राक्षै रक्तचन्दनैः ।
भुवनेश्याः प्रवालैश्च तद्भेदेषु च पार्वति ॥१७ ॥

---

१. सुमेरुका- क., क्षकारादि प्रान्तवर्णा-च. । २. कथिता शक्तिपूजायाम्- ग. ।
३. वर्णादिप्रतिरोहत-च. । ४. चाष्ट-ग., तथा- ङ. । ५. क्रमान्- छ. ।
६. प्रच्छादितो क. ङ., पुच्छादितो- ग. । ७. अतन्त्रितः- क. ग. । ८. रुद्राक्षः- घ. ।
९. बीजक- ग. । १०. साहस्त्रिकं- ग., साहस्त्रकं- च. । ११. स्फाटिकं- ग. ।
१२. कुशग्रन्थ्येत्यारभ्य पार्वत्यन्तं- च. नास्ति । १३. स्यात् तदनन्तरम्-ङ. छ. । १४. विपुलं-ग. ।

शिवे रुद्राक्षभद्राक्षैः काष्ठैर्वापि सुनिर्मितैः ।
[१]राजपटैर्मञ्जुघोषैः कथितो[२] मालनिर्णयः[३] ॥१८ ॥

मालाविधिरिति प्रोक्तः श्रृणु सूत्रविधिं प्रिये ।
पृथिवीदेवेन्द्रपुण्यस्त्रीकीर्तिग्रन्थिवर्जितम् ॥१९ ॥

त्रिगुणं त्रिगुणीकृत्य पट्टसूत्रमथापि वा ।
मुखे मुखं तु संयोज्य पुच्छे पुच्छं नियोज्य[४] च ॥२० ॥

ग्रथयेन्निर्जने [५]मन्त्री ततः शोधनमाचरेत्[६] ।
क्षालयेत् पञ्चगव्येन सद्योजातेन तज्जलैः ॥२१ ॥

चन्दनागुरुगन्धाढ्यैर्वामदेवेन[७] घर्षयेत् ।
धूपयेत् तामघोरेण लेपयेत् [८]तत्पुरुषेण तु ॥२२ ॥

मन्त्रयेत् पञ्चमेनैव प्रत्येकं तु सकृत् सकृत् ।
मेरुं च मन्त्रयेत् तेन मूलेनापि पृथक् पृथक् ॥२३ ॥

[९]संस्कृत्यैवं ततो मालां तत्प्राणांस्तत्र [१०]योजयेत् ।
मूलमन्त्रेण तां मालां पूजयेत् साधकोत्तमः ॥२४ ॥

देवप्राणांस्तु तत्रैव प्रतिष्ठाप्य [११]यजेच्च ताम् ।
ॐमाले माले महामाले सर्वतत्त्वस्वरूपिणि ॥२५ ॥

चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।
मायाबीजादिकां[१२] कृत्वा रक्तैः पुष्पैः समर्चयेत् ॥२६ ॥

गोमुखादौ ततो मालां गोपयेन्मातृजारवत् ।
अक्षमालां स्वमन्त्रं तु गुरुं [१३]नैव प्रकाशयेत् ॥२७ ॥

॥ इति श्रीमायातन्त्रे चतुर्थः पटलः ॥

---

१.मुञ्जावासे- ग.। २.कथिता- च.।३.मणि- घ.,मालानिर्णयः- ङ.च.। ४.नियोजयेत्- ङ.च.।
५.मौनी- क.ग.। ६.'अश्वत्थपत्रनवकैः पद्माकारं तु कल्पयेत् ।
तन्मध्ये स्थापयेन्मालां मातृकां मूलमुच्चरन् ॥' अधिकः पाठः- ङ.।
७.वामदैवेति- ङ.च.।८.पुरुषेण वै- च.। ९.संस्कृत्यैव- क.म.। १०.कल्पयेत्- ग.च.।
११.प्रपूजयेत्- च.। १२.बीजादिकं- ग.ङ.। १३.चैव- ग.।

## ॥अथ पञ्चमः पटलः ॥

श्रीदेवी उवाच—

कथयेशान सर्वज्ञ दुर्गानामफलं प्रभो ।
श्रुतं किञ्चिन्मया पूर्वं यदुक्तं सुरसंसदि ॥१ ॥

श्रीईश्वर उवाच—

श्रृणु प्रिये प्रवक्ष्यामि गुह्याद् गुह्यतरं [१]महत् ।
यदुक्तं ब्रह्मणा पूर्वं सदेवासुरसङ्गरे[२] ॥२ ॥
धन्यं यशस्यमायुष्यं प्रजापुष्टिविवर्द्धनम् ।
[३]सहस्रनामभिस्तुल्यं दुर्गानाम वरानने ॥३ ॥
महापदि महादुर्गे आयुषो नाशमागते ।
जातिध्वंसे[४] कुलोच्छेदे महानिगडबन्धने ॥४ ॥
व्याधिशरीर [५]सम्पाते दुश्चिकित्सामयेऽपि वा[६] ।
शत्रुभिः[७] समनुप्राप्ते बन्धुभिस्त्यक्तसौहृदे ॥५ ॥
जपेद् दुर्गायुतं नाम ततस्तस्मात् प्रमुच्यते ।
दुर्गेति मङ्गलं नाम यस्य चेतसि वर्तते ॥६ ॥
स मुक्तो देवि संसारात् स नम्यः[८] सुरकैरपि ।
दुर्गेति द्व्यक्षरं मन्त्रं जपतो नास्ति पातकम् ॥ ७ ॥
कार्यारम्भे स्मरेद् यस्तु तस्य सिद्धिरदूरतः ।
दुर्गेति नाम जप्तव्यं कोटिमात्रं सुरेश्वरि ॥ ८ ॥
[९]तत्तद्दशांशतो हुत्वा तर्पयित्वा तदंशतः ।
अभिषिच्य च विप्रेन्द्रान् भोजयित्वा दशांशतः ॥ ९ ॥

---

१. परम्- क., शुभम्- ग.ड.च.। २. संगमे- ग.ङ.च। ३. सहस्रनामतुल्यं हि- क.ग.।
४. भ्रंशे- ग.ङ.। ५. संकट- क., शङ्कर-ग.। ६. समागमे- ग.।
७. श्रुतिभिः- ङ.। ८. स मनुष्यः सुरैरपि- क.ग.ङ.च.। ९. तद्दशांशं ततो हुत्वा- क.।

असाध्यं साधयेद् देवि साधको नात्र संशयः ।
होमाद्यशक्तो देवेशि द्विगुणं जपमाचरेत् ॥१० ॥

अथवा ब्राह्मणान्तं च साधकानां च भोजनात् ।
व्यङ्गं साङ्गं भवेत् सर्वं नात्र कार्या विचारणा ॥११ ॥

एतत्कल्पसमा देवि नाश्वमेधादयः परे ।
दुर्गानामजपात् तुल्यं नान्यदस्ति कलौ भुवि ॥१२ ॥

शरत्काले तु दुर्गायाः पुरतो जपमाचरेत् ।
[१]अगणया च चन्द्रादिग्रहणे जपमाचरेत् ॥१३ ॥

[२]गणनं स्नानदानादौ न जपे परमेश्वरि ।
रवीन्द्वोर्ग्रहणे पृथ्व्यां जपतुल्या न च क्रिया ॥१४ ॥

तस्मात् सर्वं परित्यज्य जपमात्रं समाचरेत् ।
तेनैव सर्वसिद्धिः स्यान्नात्र कार्या विचारणा ॥१५ ॥

उपरागो[३] यदाकाशे तदा देवी[४] प्रकाशते ।
सुषुम्नान्तस्तथैवासौ दृश्यते नगनन्दिनि ॥१६ ॥

[५]मनस्तत्रैव संन्यस्य ध्यात्वा तत् परमाद्भुतम् ।
जपेदेकाग्रमनसा नाकाशमवलोकयेत् ॥१७ ॥

---

१. किमन्यैः कर्मविस्तारैः कथितं तेऽद्रिसम्भवे ॥
सर्वान् कामानवाप्नोति यद्यदिष्टतमं भुवि ।
रवीन्द्वोर्ग्रहणे देवि पुरश्चरणमाचरेत् ॥
सूर्येन्दुपर्वसदृशः कालो नास्ति महीतले ।
यदि वा लभ्यते देवि बहुभिः पुण्यसंचयैः ॥

— क. ग. ङ. च. अधिकः पाठः ।

२. गणनमित्यारभ्य जपमात्रं समाचरेदित्यन्तं- ङ. नास्ति ।
गणं च-ग., अगणया तु-क. ग. छ. ।

३. उपरागे-घ. । ४. देवि- ङ. च. । ५. सम- क. ।

विदधीत जपं[१] तावन्मुक्तिर्यावद् भवेत् तयोः ।
ततः स्नात्वा च होमादि ग्रहणान्ते समाचरेत् ॥१८ ॥

साधकान् भोजयेद् विप्रान्[२] मिष्टान्नैर्बहुविस्तरैः ।
युवतीः कुलकन्याश्च शिवाः [३]सम्भोजयेच्छिवे ॥१९ ॥

ततस्तु दक्षिणां दद्याद् विभवस्यानुसारतः[४] ।
गुरुभ्यस्तदभावे तु साधकेभ्यः प्रदापयेत् ॥२० ॥

एवं सिद्धमनुर्मन्त्री साधयेत् [५]सकलेप्सितान् ।
एतत्ते कथितं देवि रहस्यं परमाद्भुतम् ॥२१ ॥

नैतत् त्वया दाम्भिकाय नास्तिकाय शठाय च ।
शिवाभक्ताय दुष्टाय द्वेष्ट्रे चैव विशेषतः ॥२२ ॥

अशुश्रूषवेऽभक्ताय[६] दुर्विनीताय दीयताम् ।
इति ते कथितं गुह्यं किमन्यत् श्रोतुमिच्छसि ॥२३ ॥

॥ इति श्रीमायातन्त्रे पञ्चमः पटलः ॥



---

१. जपे- ग.। २. विद्वान्- छ.। ३. संतोषयेत्- ग., सम्भोजयेत्- छ.।
४. रूपतः- क. ग. ङ. च.। ५. सकलार्पितान्- क.। ६. विविक्ताय दुर्नीताय न- च.।

## ॥अथ षष्ठः पटलः ॥

श्रीदेवी उवाच—

देवदेव महादेव कथयस्वानुकम्पया।
यदि न कथ्यते देव विमुञ्चामि तदा तनुम् ॥१ ॥
सर्वतत्त्वमयस्त्वं हि सर्वयोगमयः सदा।
सुषुम्नान्तर्गतं देव यद् दृष्टं परमेश्वर ॥
एतद्रहस्यं परमं सर्वयोगोत्तमोत्तमम् ॥२ ॥

श्रीईश्वर उवाच—

अधुना संप्रवक्ष्यामि सुषुम्नामध्यसंस्थितम्।
सूर्यपर्व महेशानि चन्द्रपर्व तथैव च ॥३ ॥
सुषुम्नावर्त्ममध्यस्थं सूर्यपर्व परात्परम्।
यत्र ब्रह्मादयो देवा जपयज्ञेषु तत्पराः ॥४ ॥
किं पुनर्मानवाश्चैव[१] वराकाः क्षुद्रबुद्धयः।
पुष्करद्वीपवासाश्च ये चान्ये मानवाः प्रिये ॥५ ॥
तेषां च परमेशानि किञ्चित् सिद्धिः प्रजायते।
सूर्यपर्व वरारोहे बहुभाग्येन लभ्यते ॥ ६ ॥
तथैव चन्द्रपर्वाख्यं जपयोग्यं[२] सुदुर्लभम्।
नातः परतरः कालः कश्चिदस्ति वरानने ॥ ७ ॥
सहस्रारे महापद्मे चन्द्रस्तिष्ठति सर्वदा।
[३]मूलाधारे महेशानि स्वयं सूर्यः प्रकाशते ॥ ८ ॥
स्वाधिष्ठाने तु देवेशि [४]राहुस्तिष्ठति सर्वदा।
चन्द्रसूर्यग्रहं देवि यदा भवति राहुतः[५] ॥ ९ ॥

---

१. मानवा नैव- ङ. छ.। २. यज्ञं- च.। ३. वह्नि- क. ग.।
४. मूलाधार इत्यारभ्य राहुस्तिष्ठति सर्वदेत्यन्तं-च. नास्ति। ५. बाह्यतः- क. च. छ.।

तदैव सहसा देवि सहस्रारे मनो [१] न्यसेत् ।
[२] सूर्यपर्वणि माहेशि [३] मूलाधारे मनो दधे ॥१० ॥

बाह्यपर्व महेशानि दृष्ट्वा पूर्णं च देशिकः ।
[४] मनो निवेश्य चार्वङ्गि चन्द्रे च ब्रह्मपङ्कजे ॥११ ॥

सूर्ये वा चञ्चलापाङ्गि सर्वं भवति निष्फलम् ।
सुषुम्नाख्या नदी यत्र साक्षाद् ब्रह्मस्वरूपिणी ॥१२ ॥

गङ्गादिसर्वतीर्थानि प्रयागं बदरी तथा ।
हरिद्वारश्च चार्वङ्गि गया काशी सरस्वती ॥१३ ॥

सिन्धुभैरवशोणाद्या [५] ब्रह्मपुत्रश्च सुन्दरि ।
अयोध्या मथुरा काञ्ची [६] काशी माया अवन्तिका ॥१४ ॥

द्वारावती च तीर्थेशी [७] भूत्वा प्रकृतिमूर्तितः ।
गयादिसर्वतीर्थानि तत्र तिष्ठन्ति सन्ततम् ॥१५ ॥

चन्द्रसूर्यग्रहे देवि मनो ह्यन्तर्दधे शिवे ।
यः पश्येच्चञ्चलापाङ्गि सहस्रारे निशाकरम् ॥१६ ॥

मूलाधारे महेशानि यः पश्येत् सूर्यपर्वणि ।
राहुग्रहसमायुक्तमन्तरात्मनि पार्वति ॥१७ ॥

दृष्ट्वाश्चर्यमिदं भद्रे स्थापयेद् हृदयाम्बुजे [८] ।
यत्र नित्या [९] महामाया सुषुम्ना रुद्ररूपिणी ॥१८ ॥

---

१. दरे- क.। २. सूर्यादिपर्व देवेशि चन्द्रे- क.। ३. मूलाधारे मनो न्यसेत्- क.ग.।
४. अन्तःपर्वणि देवेशि निवेश्य चित्तसारथिम् ।
जपेत् परमयत्नेन न तु बाह्यं निरीक्षयेत् ॥
मनो निवेश्य चार्वङ्गि पुनः पुनरुदीक्षते ।
तज्जपश्चञ्चलापाङ्गि सर्वो भवति निष्फलः ॥ क.ग.।
५. शोणाश्च- क.ग.। ६. तथा- ग.। ७. तीर्थेषु- च.।
८. हृदये प्रिये- क.; कुण्डलीं प्रिये- च.। ९. नीत्वा-क.।

[१]यस्या वामे इडा नाडी दक्षिणे पिङ्गला मता।
[२]स्नात्वा तत्र ह्रदे वीरः शिवशक्तिमयो भवेत् ॥१९॥

शिवशक्तिमयी साक्षात् सा सन्ध्या[३] वरवर्णिनि।
[४]सन्ध्यास्नानं मयैतत् ते कथितं योगिदुर्लभम् ॥२०॥

सुषुम्नावर्त्ममध्यस्थं यद् दृष्टं वरवर्णिनि।
दृष्ट्वा चन्द्रग्रहं भद्रे सूर्यं वा जपमाचरेत् ॥२१॥

तावत्कालं जपेन्मन्त्रं यावन्मोक्षं वरानने।
एतत् तत्त्वं महेशानि ब्रह्मा जानाति माधवः[५] ॥२२॥

इन्द्राद्या देवताः [६]सर्वा बहुभाग्येन[७] लभ्यते।
ज्ञात्वा तत्त्वमिदं देवि देव्या नागादयोऽपरे[८] ॥२३॥

प्रजप्यते इष्टविद्या शीघ्रं सिद्धिमवाप्नुयात्।
पुष्करादिनिवासाश्च ये लोकाः सुरवन्दिते ॥२४॥

ते [९]सर्वे च महेशानि किञ्चित् फलमवाप्नुयुः।
भारते बहुकालेन सिद्ध्यन्ति नगनन्दिनि ॥२५॥

नानादोषवृतः[१०] कालः कलिरेव तु मूर्तिमान्।
ग्रहणे चन्द्रसूर्यस्य देवा नागादयोऽपरे[११] ॥२६॥

ब्रह्मा विष्णुश्च रुद्रश्च ये चान्ये सुरसत्तमाः।
चन्द्रसूर्यपदं गत्वा प्रजपन्तीष्टसिद्धये ॥२७॥

चन्द्रसूर्यग्रहे देवि यत्[१२] तेजः सूपजायते।
तत्[१३] सर्वं चञ्चलापाङ्गि ब्रह्माद्यास्त्रिदिवौकसः ॥२८॥

---

१. परा- क.। २. गयान्तिसर्वतीर्थान्तं-ग.। ३. नाडी- च.।
४. सन्ध्यास्नानमित्यारभ्य वरवर्णिनीत्यन्तं- ख. नास्ति। ५. साधकः- क.।
६. सर्वे-च.। ७. बहुभाग्यैन- छ.। ८. नागादयः परे- क.। ९. सर्वे ते- च.।
१०. युतः- क. च.। ११. नागादयः परे- क., देवानामपि सर्वशः- च.। १२. तत्- क.।
१३. तदित्यारभ्य चन्द्रसूर्यग्रहे देवीत्यन्तं- च. नास्ति।

वहन्ति चञ्चलापाङ्गि मानुषास्त्वधमाः कुतः ।
कलिकालस्य लोके तु भारते वरवर्णिनि ॥२९ ॥

नानादोषाः प्रजायन्ते अतो नैव च सिद्ध्यति ।
चन्द्रसूर्यग्रहे देवि लोका भारतवासिनः ॥३० ॥

[१]तत्पूजयेदेकभक्त्या नान्यथा तु कदाचन ।
स्नानं दानं तथा श्राद्धमिन्दोः कोटिगुणं भवेत् ॥३१ ॥

सूर्ये दशगुणं देवि नान्यथा मम भाषितम् ।
जपेत् तर्हि फलं यद्वन्नान्यथा तद् भवेत् क्वचित् ॥३२ ॥

एतत् तत्त्वं हि कथितं सुषुम्नामार्गसंस्थितम् ।
अतिगोप्यं महत्पुण्यं सारात्सारं परात्परम् ॥
न कस्मैचित् प्रवक्तव्यं यदि कल्याणमिच्छसि ॥३३ ॥

॥ इति श्रीमायातन्त्रे षष्ठः पटलः ॥

■

१. तत्काले पूजयेद् भक्त्या- क. ।

## ॥अथ सप्तमः पटलः ॥

श्रीईश्वर[१] उवाच—

अतः परं प्रवक्ष्यामि अतिगुह्यं परात्परम् ।
सुषुम्नावर्त्ममध्यस्थं यन्मन्त्रं तत् श्रृणु प्रिये ॥१ ॥

एतन्मन्त्रमविज्ञाय यो जपेत् सूर्यपर्वणि ।
तस्य सर्वार्थहानिः स्यादन्ते नरकमाप्नुयात् ॥२ ॥

श्रृणु मन्त्रं वरारोहे प्रशस्तं पर्वदर्शने ।
मोक्षकाले च चार्वङ्गि प्रशस्तं यत् श्रृणुष्व तत् ॥३ ॥

॥ॐ[२] ॐ ॐ ह्रीं ॐ ह्रीं ॐ ॥

प्रणवत्रयमुद्धृत्य मायाबीजं समुद्धरेत् ।
ततः प्रणवमुद्धृत्य मायाबीजं समुद्धरेत् ॥४ ॥

ततः प्रणवमुद्धृत्य त्रयमेतत् सुदुर्लभम् ।
एतत् सप्ताक्षरं मन्त्रं प्रजप्य दशधा प्रिये ॥५ ॥

यः पश्येद् ग्रहणं देवि प्रायश्चित्तं न विद्यते ।
मोक्षकाले च चार्वङ्गि देवानामपि दुर्लभम् ॥६ ॥

मायाबीजत्रयं लिख्यं[३] प्रणवं तदनन्तरम् ।
पुनर्मायात्रयं देवि मन्त्रोद्धारमिदं शुभम्[४] ॥७ ॥

एतन्मन्त्रद्वयं देवि सर्वत्रैव प्रशस्यते ।
वैष्णवेषु च सौरेषु शाक्ते शैवे वरानने ॥८ ॥

प्रशस्तं चञ्चलापाङ्गि नान्यथा तु कदाचन ।
एतन्मन्त्रमविज्ञाय यः पश्येद् ग्रहणं शुभे ॥९ ॥

---

१. शिव उवाच- च.। २. ॐ ॐ ॐ ह्रीं ॐ ॐ ॐ- क.।

३. देवि- च.। ४. ह्रीं ह्रीं ह्रीं ॐ ह्रीं ह्रीं ह्रीं- च.।

सर्वं तस्य वृथा देवि चान्ते शूकरतां व्रजेत् ।
दर्शने मोक्षणे चैव [१] मन्त्रद्वयमितीरितम् ॥१० ॥

यन्नोक्तं सर्वतन्त्रेषु चेदानीं प्रकटीकृतम् ।
न तिथिर्न व्रतं होमो ग्रहणे चन्द्रसूर्ययोः ॥११ ॥

ग्रासादिमोक्षपर्यन्तं जपेन्मन्त्रमनन्यधीः ।
यथा बाह्ये महेशानि तथा चैवान्तरात्मनि ॥१२ ॥

उभयोरेकतां कृत्वा प्रजपेन्मनसा शुचिः ।
राहुर्यदा महेशानि चन्द्रं सूर्यं च धावति ॥१३ ॥

वैरभावमनुस्मृत्य विकलाङ्गस्तु पार्वति ।
तदोपरागो भवति सर्वयोगमयं [२] विदुः ॥१४ ॥

ब्रह्माद्या देवताः सर्वे गङ्गाद्यास्तीर्थकोटयः ।
सूर्यमण्डलमासाद्य प्रजपेदिष्टमन्त्रकम् ॥१५ ॥

तं [३] दृष्ट्वा सहसा राहुः पलायति [४] महापदि ।
अन्यथा तत्क्षणात् सर्वं ब्रह्माण्डं नाशमाप्नुयात् ॥१६ ॥

तत्क्षणे सर्वतीर्थानि सामान्यमुदकं प्रिये ।
यान्ति स्वपदमुत्सृज्य सर्वतीर्थोदकं ततः ॥१७ ॥

सामान्यमुदकं तत्तु [५] गङ्गातोयसमं भवेत् ।
तत्क्षणे चञ्चलापाङ्गि [६] तज्जले स्नानमात्रतः ॥१८ ॥

---

१. यन्त्र- छ. ।

२. अत एव महेशानि इन्द्राद्यास्त्रिदिवौकसः ।
चन्द्रपर्व सूर्यपर्व यदा भवति सुन्दरि ॥
स्थानं त्यक्त्वा जनं त्यक्त्वा ते देवा सूर्यमण्डलम् ।
गत्वा शीघ्रं जपेद् विद्यां कालिकां जगदम्बिकाम् ॥
अत एव महेशानि सामान्यं जनमेव च ।
तीर्थोदकं महेशानि सामान्यमुदकं प्रिये ॥ च. अधिकः पाठः ।

३. ताम्- च. ।

४. भयात्ततः ।

५. यत्तु ।

६. 'लापाङ्गि' इत्यारभ्यः ... 'प्रशस्यते' इत्यन्तः पाठः- क. नास्ति ।

चतुर्भुजसमाः सर्वे लोका भारतवासिनः ।
तत्क्षणाद् गिरिजे सत्यं मोक्षं ब्रह्मपुरं व्रजेत् ।।१९ ।।

भारते त्रिविधा पूजा भारते विविधो जपः ।
तथापि बहुकालेन सिद्ध्यन्ते सङ्गदोषतः ।।२० ।।

[१] मान्धातृप्रमुखाः सर्वे रामो दाशरथिस्तथा ।
प्रजप्य तारिणीं दुर्गां मन्त्रसिद्धिमवाप्नुयुः ।।२१ ।।

अन्यद्वीपेषु वर्षेषु नानातीर्थानि सन्ति च[२] ।
नानाभोगयुता लोका देववत् सर्वथा[३] प्रिये ।।२२ ।।

ते सर्वे देवताप्राया नानाभोगविलासिनः ।
[४] नित्यसुखमयाः सर्वे दिव्यस्त्रीशतसेविताः ।।२३ ।।

तेषां गेहे महेशानि नानातीर्थानि सन्ति वै ।
ग्रहणं चन्द्रदेवस्य सूर्यदेवस्य सुन्दरि ।।२४ ।।

बहुभाग्येन चार्वङ्गि लोका भारतवासिनः ।
प्राप्तिमात्रेण यज्जप्तं तत्सर्वमक्षयं भवेत् ।।२५ ।।

चतुर्दशी पौर्णमासी सोममङ्गलसंयुता ।
[५] यदा भवति लोकेऽस्मिन् तदा सूर्यग्रहेण किम् ।।२६ ।।

एषा तु चञ्चलापाङ्गि कोटिसूर्यग्रहैः समा ।
शुक्लाष्टम्यां नवम्यां वा चतुर्दश्यां तथैव च ।।२७ ।।

संक्रान्त्यां पर्वदिवसे पूजालोपं न कारयेत् ।
नावश्यं पूजयेद् यस्तु तत्त्वहीनो भवेत् प्रिये ।।२८ ।।

तत्त्वहीनस्य देवेशि जपयज्ञादि निष्फलम् ।
शाम्भवी कुप्यते तेभ्यो ब्रह्महत्या पदे पदे ।।२९ ।।

---

१. सन्धायाः प्रमुखाः- च. । २. अन्यद्वीपस्य वर्षस्य सर्वे लोका वरानने- च. अधिकः पाठः ।
३. सर्वदा-च. । ४. नानामुखसमाः- च. । ५. यथा- छ. ।

यद् यत् पूर्वकृतं कर्म जपहोमादिकं च यत् ।
तत् सर्वं नाशमायाति मम तुल्यो भवेद् यदि ॥३० ॥
चन्द्रसूर्यग्रहे देवि न चन्द्रं गणयेत् प्रिये ।
ब्राह्मणः क्षत्रियो वैश्यस्तथा शूद्रश्च पार्वति ॥३१ ॥
[१]सूर्यग्रहणकालाद्धि नान्यः[२] [३]कालः प्रशस्यते ।
स कालः परमेशानि परंब्रह्मस्वरूपवान् ॥३२ ॥
ग्रहणे चन्द्रसूर्यस्य न जपेद् यदि दीक्षितः ।
सर्वं पुण्यं परित्यज्य विष्ठायां जायते कृमिः ॥३३ ॥
तस्माद् यत्नेन कर्तव्यं ग्रहणे जपपूजनम् ।
न तिथिर्नाम गोत्रं वा न च संकल्पमाचरेत् ॥३४ ॥
कलिकाले तु देवेशि यवना [४]बलवत्तमाः ।
मत्स्यमांसरताः सर्वे सर्वदा [५]मद्यसेविनः ॥३५ ॥
अनाचाररतास्ते न सिद्ध्यन्ति यवनाः कलौ ।
यवनानां महेशानि त्र्यक्षरीं ब्रह्मरूपिणीम् ॥३६ ॥
निगदामि वरारोहे सावधानाऽवधारय ।
कलावतीं समुद्धृत्य वज्रिणीं[६] तदनन्तरम् ॥३७ ॥
रतिबीजं ततो देवि ततस्तु रुद्रयोगिनीम् ।
एषा तु त्र्यक्षरी विद्या भवनेषु प्रतिष्ठिता ॥३८ ॥
संयुक्तैषा यदा विद्या तदैवैकाक्षरी भवेत् ।
साचारा ब्राह्मणाद्यास्तु सिद्ध्यन्ति बहुकालतः ॥३९ ॥
अनाचाराः प्रणश्यन्ति[७] सत्यमेतन्न संशयः ।
उपाया ब्राह्मणादीनां तेनोक्ताः शतशो मया ॥४० ॥

---

१. सूर्यग्रहणे- छ. । २. न राशिं गणयेद् भद्रे गणयेत् पवनस्तदा- च. अधिकः पाठः ।
३. काले-च. । ४. च नरान्तराः- क., बलवत्तराः- च. । ५. तत्त्व- च. ।
६. रङ्गिनीं- छ । ७. प्रशंसन्ते- च. ।

सिद्ध्यन्ति ते यथोक्तेन नियमैश्च[१] यथाविधि ।
इति ते कथितं देवि रहस्यं परमाद्भुतम् ॥
न कस्मैचित् प्रवक्तव्यं यदि तेऽस्ति दया मयि ॥४१ ॥

॥ इति श्रीमायातन्त्रे सप्तमः पटलः ॥



---

१. नियमेन- क.च.।

## ॥अथाष्टमः पटलः॥

श्रीदेवी उवाच—

कथितः परमेशान मन्त्रयन्त्रस्त्वनेकधा।
इदानीं श्रोतुमिच्छामि साधनं परमेश्वर॥
पुरश्चर्याविधिं देव कथयस्वानुकम्पया॥१॥

श्रीमहादेव उवाच—

गोपितं सर्वतन्त्रेषु विश्वसारे प्रकाशितम्।
तत्रैव गुह्यं यद् यत् ते कथयामि शृणुष्व तत्॥२॥
पृथिवीमृतुमतीं वीक्ष्य सहस्रं यदि नित्यशः।
जपेदेकाग्रमनसा कुलपूजारतः सुधीः॥३॥
आषोडशदिनं यावद् वाक्पतिर्भवति ध्रुवम्।
मधुपानरतो रात्रौ चन्द्रबिम्बं प्रचक्ष्य च॥४॥
पुनः पुनः साधकाग्र्यो भवेत् कविवरः क्षणात्।
मर्दयन् गिरियुगं देव तत आलिङ्ग्य यत्नतः॥५॥
एवमष्टोत्तरशतं कृत्वा धनपतिर्भवेत्।
कुण्डगोलोद्भवं पुष्पं समादाय प्रयत्नतः॥६॥
निवेदयेन्महादेव्यै प्रसीदेति क्रमाचरेत्।
शताभिमन्त्रितं कृत्वा होमयेदखिलं जगत्॥७॥
क्रोधे कालमयो नित्यं दाने वासववत् प्रिये।
बृहस्पतिसमो वक्ता कामवत् कामिनीषु च॥८॥
किमन्यैर्बहुधालापैः स शिवो नात्र संशयः।
कुलपूजाविधियुतो ध्यात्वा च परमेश्वरीम्॥९॥
अयुतं यदि जप्त्वैवं कुमारीं भोजयेत् ततः।
गुरवे दक्षिणां दद्याद् भवेत् सर्वजनप्रियः॥१०॥

प्रतिपद्दिनमारभ्य जपेत् प्रतिपदन्तरम् ।
सहस्रं प्रत्यहं हुत्वा जप्त्वा च परमं मनुम् ॥११ ॥
शक्त्याऽनुज्ञां गृहीत्वा च रिपून् हन्यान्न संशयः ।
प्रातः प्रातः पिबेत् तोयमष्टोत्तरशतं जपेत् ॥१२ ॥
अनेन मूको दुष्टात्मा जडः पाषाणवत् तथा ।
अनेन जलपानेन साक्षाद् वाक्पतिसन्निभः ॥१३ ॥
जायते नात्र सन्देहः सत्यं सत्यं न संशयः ।
लक्षं जप्त्वा ततो ध्यात्वा त्रैलोक्यवशकारिणीम् ॥१४ ॥
शत्रुतो न भयं तस्य राजतो दस्युतोऽपि वा ।
न तस्य विद्यते भीतिः कदाचिदपि सुव्रते ॥१५ ॥
वश्या भवन्ति सर्वेऽपि देवतापि च शङ्करि ।
ध्यात्वा हृत्पद्ममध्ये तु दुर्गां त्रैलोक्यमोहिनीम् ॥१६ ॥
जपेदयुतसाहस्रं वृष्टिमाप्नोत्यसंशयः ।
मालती-मल्लिका-जाती-कुसुमैर्मधुमिश्रितैः ॥१७ ॥
घृतैस्तु हवनाद् देवि वागीशत्वं प्रजायते ।
मूकस्यापीह मूढस्य शिलारूपस्य नान्यथा ॥१८ ॥
जपापुष्पैराज्ययुक्तैः करवीरैस्तथाविधैः ।
हवनान्मोहयेन्मन्त्री लोकत्रयनिवासिनः ॥१९ ॥
कर्पूरं कुङ्कुमं देवि मिश्रं मृगमदेन हि ।
हवनान्मदनो देवि मन्त्रिणा विजितो भवेत् ॥२० ॥
सौभाग्येन विलासेन सामर्थ्येनापि सुव्रते ।
चम्पकैः पाटलैर्हुत्वा श्रियं प्राप्नोत्यनुत्तमाम् ॥२१ ॥
प्राप्नोति मन्त्री महतीं स्तम्भयेज्जगतीमिमाम् ।
श्रीखण्डं गुग्गुलं चन्द्रमगुरुं होमयेत् ततः ॥२२ ॥

नागेन्द्रासुरदेवानां पुरन्ध्रीर्वशमानयेत्।
सर्वलोकवशास्तस्य भवत्येव न संशयः ॥२३॥

लक्षहोमाल्लभेद्राज्यं दरिद्रभयपीडितः।
दुर्गोपशमनं देवि पलत्रिमधुहोमतः ॥२४॥

रुधिराक्तेन छागस्य मांसेन निशि होमतः।
मधुरत्रययुक्तेन गुरुणोक्तविधानतः ॥२५॥

परराष्ट्रं महादुर्गं समस्तं स्मरणं भवेत्।
गोक्षीरं मधुदध्याज्यं पृथग् हुत्वा वरानने ॥२६॥

आयुर्धनं महारोग्यं समृद्धिर्जायते नृणाम्।
क्रमेणाब्जेन गोक्षीरमधुभ्यां मूलनाशनम् ॥२७॥

दधिमाक्षिकहोमेन सौभाग्यधनमाप्नुयात्।
शीतया केवलं होमो वैरिस्तम्भनकारकः ॥२८॥

होमो दधिमधुक्षीरलाजैश्च वीरवन्दिते।
रोगहन्ता कालहन्ता मृत्युहन्ता न संशयः ॥२९॥

कमलैर्वरुणैर्होमः सम्यक् सम्पत्तिकारकः।
रक्तोत्पलं जगद्वश्यं राजानश्च वशाः क्षणात् ॥३०॥

नीलोत्पलैर्महादुष्टा वशमायान्ति नान्यथा।
श्वेतोत्पलैः प्रियं राज्यं लभते हवनात् प्रिये ॥३१॥

अक्षमालां प्रपूज्याथ चन्दनेन प्रपूजिताम्।
समाश्रित्य जपेद् विद्यां लक्षमात्रं सदा प्रिये ॥३२॥

योधितो भ्रामयत्येव मनस्तस्य सुनिश्चितम्।
तदा द्वितीयलक्षं तु जपेत् साधकसत्तमः ॥३३॥

पातालतलनागेन्द्रकन्यकाः क्षोभयन्ति तम्।
तासां कटाक्षजालैस्तु सम्मोहयन्ति साधकम् ॥३४॥

तदा लक्षत्रयं जप्यात् साधकः स्थिरमानसः।
तृतीयलक्षे संजप्ते भ्रामयन्ति पुराङ्गनाः ॥३५ ॥
अतिमानेन सौन्दर्यसौभाग्यमदकारिणा।
साधको भ्रामयत्येव तत्रासौ स्थिरमानसः ॥३६ ॥
तदा लक्षत्रयं साधु सर्वपापनिकृन्तनम्।
एवं लक्षत्रये जप्ते साधकः स्थिरमानसः ॥३७ ॥
सम्मोहयन्ति स्वर्लोकं भूर्लोकतलवासिनः।
पुरुषा योषितो वश्याश्चराचरजनाः प्रिये ॥३८ ॥
गोरोचनादिद्रव्यैश्च चक्रराजं समालिखेत्।
वन्द्यां वसुन्धरां रम्यां तन्मध्ये प्रतिमां पराम् ॥३९ ॥
ज्वलन्तीं नामसहितां महाबीजविदर्भिताम्।
चिन्तयेत् तु ततो देवीं योजनानां सहस्रतः ॥४० ॥
या दृष्टपूर्वा देवेशि क्रमशोऽत्र सुदुर्लभा।
राजकन्याऽथवा भार्या भयलज्जाविवर्जिता ॥४१ ॥
आयाति साधकं सम्यग् मन्त्रमूढा सती प्रिये।
चक्रमध्यगतो भूयः साधकश्चिन्तयेत् सदा ॥४२ ॥
उद्यत्सूर्यसहस्राभमात्मानमरुणं तथा।
साध्यमप्यरुणीभूतं चिन्तयेत् परमेश्वरि ॥४३ ॥
अनेन क्रमयोगेन स्वयं कन्दर्परूपभाक्।
सर्वसौभाग्यसुभगः सर्वलोकवशङ्करः ॥४४ ॥
सर्वरक्तोपचारैश्च मुद्रासहितविग्रहः।
चक्रं संपूजयेद् यो हि यस्य नाम विदर्भितम् ॥४५ ॥
स भवेद् वासवो देवि धनाढ्यो वापि भूपतिः।
इदं गुह्यं महेशानि यदुक्तं तव सन्निधौ ॥
न कस्मैचित् प्रवक्तव्यं प्राणे संशयमागते ॥४६ ॥

॥ इति श्रीमायातन्त्रे अष्टमः पटलः ॥

## ॥अथ नवमः पटलः ॥

श्रीदेवी उवाच—

हवनं कुत्र कर्तव्यं विशेषेण वदस्व मे ।
समावेदय मे नाथ यतोऽहं तव वल्लभा ॥१ ॥

श्रीमहादेव उवाच—

धन्ये प्रियतमे देवि श्रृणुष्वावहिता भव ।
होमं कुर्यात् कुण्डमध्ये प्रकारं कथयामि ते ॥२ ॥
शान्तौ पुष्टौ तथाऽऽरोग्ये कुण्डं च चतुरस्रकम् ।
आकर्षणे त्रिकोणं स्यादुच्चाटे वर्तुलं तथा ॥३ ॥
मारणे चं तथा योज्यं वर्तुलं मन्त्रिभिः सदा ।
औदीच्यं पौष्टिके कुण्डं वारुणं शान्तिकादिषु ॥४ ॥
उच्चाटे चानिलं कुण्डं याम्यं च मारणे भवेत् ॥
विप्राणां चतुरस्रं स्याद् राज्ञां वर्तुलमिष्यते ।
वैश्यानामर्धचन्द्रं हि शूद्राणां त्र्यस्रमीरितम् ॥५ ॥
चतुरस्रं च सर्वेषां केचिदिच्छन्ति तान्त्रिकाः ।
चतुरस्रे महेशानि सर्वकर्माणि साधयेत् ॥ ६ ॥
सर्वाधिकारिकं कुण्डं सर्वदं चतुरस्रकम् ।
गृहादिकरणे हस्तनियमं कथयामि ते ॥ ७ ॥
रथादिदोलिका चैव पोतं नाराचमेव च ।
मानाङ्गुलेन कर्तव्यं नान्येनापि कदाचन ॥ ८ ॥
मुष्ट्यरत्नप्रमाणानि यत् किञ्चित् कथितानि च ।
यजमानस्य कर्तव्यो नान्यस्यापि कदाचन ॥९ ॥
मानक्रियायामुक्तायामनुक्ते मानकर्तरि ।
मानं तद् यजमानस्य विदुषामेष निर्णयः ॥१० ॥

चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः ।
कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः ॥११ ॥
मध्यस्य दैर्घ्यमानेन मानाङ्गुलमुदाहृतम् ।
यवानां तण्डुलैश्चैवमङ्गुलं चाष्टभिर्भवेत् ॥१२ ॥
अदीर्घायाजितैर्हस्तैश्चतुर्विंशतिकाङ्गुलैः ।
अष्टभिस्तैर्भवेज्ज्येष्ठं मध्यमं सप्तभिर्यवैः ॥१३ ॥
कन्यसं षड्भिरुद्दिष्टमङ्गुलं प्राणवल्लभे ।
सहस्रे खलु होतव्ये कुर्यादिककरात्मकम् ॥१४ ॥
द्विहस्तमयुते तच्च लक्षहोमे चतुष्करम् ।
षट्करो वेदलक्षन्त्वष्टहस्ते दशलक्षकम् ॥१५ ॥
दशहस्ते तु कोटिर्वै हस्तसंख्या व्यवस्थिता ।
दशहस्तात् परं कुण्डं नास्ति होमो महीतले ॥१६ ॥
एकहस्तमिते देवि लक्षमेकं विधीयते ।
लक्षाणां दशकं यावत् तावद्धस्तेन वर्द्धयेत् ॥१७ ॥
नालमेखलयोर्मध्ये पवित्रस्थापनाय च ।
यन्त्रं कुर्यात् तथा विद्वान् द्वितीये मेखलोपरि ॥१८ ॥
नेत्रवेदाङ्गुलोपेताः कुण्डेष्वन्येषु वर्द्धयेत् ।
यवद्वयप्रमाणेन नाभिं पृथगुदाहृतम् ॥१९ ॥
योनिकुण्डे योनिमब्जकुण्डे नाभिं च वर्जयेत् ।
नाभिक्षेत्रं त्रिधा कृत्वा मध्ये कुर्वीत कर्णिकाम् ॥२० ॥
बहिरंशद्वयेनाष्टौ पत्राणि परिकल्पयेत् ।
इन्द्राग्नियमदिक् कुण्डे योनिः सौम्यमुखी स्मृता ॥२१ ॥
योनिः पूर्वमुखान्येषु पूर्वैशान्योत्तरा स्मृता ।
हस्तमात्रं स्थण्डिलं वा संक्षिप्ते होमकर्मणि ॥२२ ॥

अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समन्ततः ।
आदाय दक्षिणे पाणौ स्रुवं त्रिमधुरं हविः ॥२३ ॥

प्राङ्मुखो वह्निजायान्ते जुहुयान्न्युब्जपाणिना ।
नमोऽन्तेन नमो दद्यात् स्वाहान्ते द्विठमेव च ॥२४ ॥

पूजायामाहुतौ चापि सर्वत्रायं विधिः शिवे ।
एवंप्रकारो देवेशि कथितो होमनिर्णयः ॥
गुह्याद् गुह्यतमो देवि सुखमोक्षप्रदो नृणाम् ॥२५ ॥

॥ इति श्रीमायातन्त्रे नवमः पटलः ॥

■

## ।।अथ दशमः पटलः ।।

श्रीदेवी उवाच—

नमस्यामि नमस्यामि देवदेव महेश्वर ।
इदानीं कथयेशान मन्त्रसिद्धेस्तु लक्षणम् ।।१ ।।

श्रीमहादेव उवाच—

पुरश्चर्याविधिं देवि इदानीं कथयामि ते ।
स्नातः शुक्लाम्बरधरः शुचिः पूर्वमुपोषितः ।।२ ।।

जपेदेकाग्रमनसा गायत्रीसंयुतं तथा ।
वेद्यां कीलकमारोप्य पूजयेत् कीलकोपरि ।।३ ।।

द्वादशाङ्गुलमितं काष्ठमुदुम्बरभवं प्रिये ।
तस्योपरि यजेद् देवि विग्रहान् भूतभैरवान् ।।४ ।।

जयदुर्गां गणेशं च विष्ण्वीशान् लोकपालकान् ।
ततो भुक्त्वा हरिष्यान्नं ततः परदिने जपेत् ।। ५ ।।

कृतसङ्कल्प एवासौ पूजयेत् परमेश्वरीम् ।
प्रातःकालं समारभ्य जपेन्मध्यन्दिनावधि ।। ६ ।।

न्यूनाधिकं न जप्तव्यं देवताभावसिद्धये ।
युगभेदविधानं हि कथयामि श्रृणुष्व तत् ।। ७ ।।

सत्ये द्वादशलक्षं तु त्रेतायां च त्रिलक्षकम् ।
चतुर्लक्षं द्वापरे च एकलक्षं कलौ जपेत् ।। ८ ।।

एवंविधं जपं कृत्वा होमयेज्ज्वलदिन्धने ।
दशांशं परमेशानि तद्दशांशं तु तर्पयेत् ।। ९ ।।

तद्दशांशाभिषेकं च ब्राह्मणान् भोजयेत् तथा ।
गुरवे दक्षिणां दद्याद् विभवस्यानुरुपतः ।।१० ।।

एतज्जपं महेशानि मन्त्रः सिध्यति निश्चितम्।
सिद्धमन्त्रस्तु यः साक्षात् स शिवो नात्र संशयः ॥११ ॥

सम्यगनुष्ठिते मन्त्रे यदि सिद्धिर्न जायते।
पुनस्तेनैव कर्तव्यं साधकैर्मन्त्रसिद्धये ॥१२ ॥

ततो यदि न सिध्येत तदुपायं श्रृणु प्रिये।
श्रीबीजपुटितं कृत्वा जपेदयुतमानतः ॥१३ ॥

अथवा परमेशानि प्रणवेन पुटीकृतम्।
जपेद् दशसहस्रं तु ततः सिद्धो भवेन्नरः ॥१४ ॥

सिद्धे मनौ ततः कुर्यात् प्रयोगं परमेश्वरि।
इति ते कथितं देवि गुह्याद् गुह्यतमं प्रिये ॥
यस्मै कस्मै न दातव्यं प्राणसंशयसम्भवे ॥१५ ॥

॥ इति श्रीमायातन्त्रे दशमः पटलः ॥

■

## ॥अथैकादशः पटलः ॥

श्रीमहादेव उवाच—

श्रृणु प्रिये प्रवक्ष्यामि योगसाधनमुत्तमम् ।
विना भावेन देवेशि न सिध्येत कदाचन ॥१ ॥

त्रिधा भावो महेशानि साधकानां सुखप्रदः ।
परं मुक्तिमवाप्नोति भावस्थः साधकाग्रणीः ॥२ ॥

पशुभावस्थितो मन्त्रो [१]बहुक्लेशेन सिध्यति ।
दिव्यभावयुतो देवि साक्षाद् गङ्गाधरः स्वयम् ॥३ ॥

वीरभावस्थितो मन्त्रः कलावाशु सुसिध्यति ।
दिवा हविष्यं भोक्तव्यं पूरणे श्रवणादिकम् ॥४ ॥

रात्रौ शक्तियुतो मन्त्री पञ्चमेन प्रपूजयेत् ।
लताप्रधानं देवेशि साधकस्य सुनिश्चितम् ॥५ ॥

मातृभावेन सम्पूज्य जपेदेकाग्रमानसः ।
कालीवदपरां[२] विद्यां कालीवत् पूजयेत् सदा ॥६ ॥

कालीवत् साधयेद् देवीं कालीवच्चिन्तयेत् सदा ।
या काली सा महादुर्गा या दुर्गा सैव तारिणी ॥७ ॥

दुर्गायाः कालिकायाश्च कालं[३] सङ्गमिहोदितम् ।
अभेदेन यजेद् देवीं सिद्धयोऽष्टौ भवन्ति हि ॥८ ॥

अन्तर्योगबहिर्योगरतो मन्त्री प्रपूजयेत् ।
पूर्वोक्तदूषितो मन्त्रः सर्वं सिध्यति निश्चितम् ॥९ ॥

कुलीनः सर्वमन्त्राणां [४]जापकः परिकीर्तितः ।
कुलीनः सर्वमन्त्राणामधिकारीति गीयते ॥१० ॥

---

१. बहूद्देशेन- छ.। २. आचरेद्विद्यां-छ.।
३. ध्यानं सममिहोच्यते-छ.। ४. जपैकः - छ.।

कुलीनः परदेवीनां सदा प्रियतमः प्रिये ।
कुलाचारात् परं नास्ति कलौ देवि सुसिद्धये ॥११ ॥

लतायाः[१] साधनं वक्ष्ये श्रृणुष्व हरवल्लभे ।
शतं कोशे शतं भाले शतं सिन्दूरमण्डले ॥१२ ॥

स्तनद्वन्द्वे शतद्वन्द्वं शतं नाभौ महेश्वरि ।
शतं योनौ महेशानि उत्थाय च शतत्रयम् ॥१३ ॥

एवं दशशतं जप्त्वा सर्वसिद्धीश्वरो भवेत् ।
अथान्यत् संप्रवक्ष्यामि साधनं[२] भुवि दुर्लभम् ॥१४ ॥

रजोऽवस्थां समानीय तत्तनौ स्वेष्टदेवताम् ।
पूजयित्वा महारात्रौ त्रिदिनं[३] प्रजपेन्मनुम् ॥१५ ॥

शतत्रयं च षट्त्रिंशदधिकं प्रत्यहं जपेत् ।
शवसाधनसाहस्रं फलं प्राप्नोत्यसंशयम् ॥१६ ॥

अथान्यत् साधनं वक्ष्ये सावधानाऽवधारय ।
परकीयलताचक्रे सम्पूज्य स्वेष्टदेवताम् ॥१७ ॥

अष्टोत्तरशतं पूर्वं चतुर्वक्त्रे जपेद् बुधः ।
ततस्तां नवभिः पुष्पैर्यजेदष्टोत्तरं[४] शतम् ॥१८ ॥

ततः पूर्णाहुतिं दत्त्वा जपेदष्टोत्तरं शतम् ।
धनवान् बलवान् वाग्मी सर्वयोषित्प्रियः कविः ।
षोडशाहेन च भवेत् सत्यं सत्यं न संशयः ॥१९ ॥

समयाचारनिरतः सदा तद्गतमानसः ।
किं तस्य पापपुण्यानि येन देवी समर्चिता ॥२० ॥

केवलं निशि जापेन[५] मन्त्रः सिध्यति निश्चितम् ।
वृथा[६] न गमयेत् कालं दुरालापादिना सुधीः ॥२१ ॥

---

१. लतायां- छ. । २. साधनं तु सुदुर्लभम्-छ । ३. त्रिदिवं-छ. ।
४. यजन्नष्टोत्तरं-छ. । ५. जालेन- छ. । ६. नागमयेत्- छ. ।

गमयेत् साधकः श्रेष्ठः कवचादिप्रपाठतः ।
परोपकारनिरतः सदाह्लादमनाः सुधीः ॥२२ ॥

गोपयेत् सततं देवि कुलमार्गं विशेषतः ।
[१]स्नानयन्त्रे [२]शिलायन्त्रे बिल्वमूले घटोपरि ॥२३ ॥

लिङ्गे योनौ महापीठे शून्यागारे चतुष्पथे ।
[३]कुट्टिनीगृहमध्ये च कदलीमण्डपे तथा ॥२४ ॥

[४]पुष्पयुक्तभगे देवि गणिकागेहमध्यतः ।
महारण्ये प्रान्तरे[५] च शवे च शक्तिसङ्गमे ॥२५ ॥

पञ्चानन्दपरो भूत्वा साधयेत् सकलेप्सितान्[६] ।
यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ॥२६ ॥

नूनं तद्गृहमागत्य कुबेरो दीयते वसु ।
वातस्तम्भं जलस्तम्भं गतिस्तम्भं विवस्वतः ॥२७ ॥

वह्नेः[७] शैत्यं करोत्येव महामायाप्रसादतः ।
नासाध्यं विद्यते तस्य त्रैलोक्ये हि च शङ्करि ॥२८ ॥

योनिकुण्डे कृते होमे साक्षाद् [८]गङ्गाधरो भवेत् ।
पूजास्थाने कामबीजं लिखित्वा शिवयोजनात् ॥२९ ॥

कवचं प्रपठेद् यस्तु शतावृत्तं सुरेश्वरि ।
वाग्मी भवति मासेन सत्यं सत्यं न संशयः ॥३० ॥

अचिराल्लभते देवि कवितां [९]सुखसाधिनीम् ।
मोदते सर्वलोकेषु शिववत् परमेश्वरि ॥३१ ॥

---

१. इदानीं श्रृणु देवेशि पूजाधारं विशेषतः- घ. अधिकः पाठः । २. जले- घ. ।
३. कुट्टली- घ. । ४. पुष्पयुक्तभगेनापि- छ. । ५. प्रास्तरे- छ. ।
६. सकलेप्सिताम्- छ. । ७. वह्नेः सत्यम्- घ. ।
८ गन्धर्वराड्-घ. । ९. मुखशालिनीम्- घ. ।

इति ते कथितं देवि सर्वतन्त्रेषु गोपितम् ।
प्रकाशितं तव स्नेहान्न प्रकाश्यं कदाचन ॥३२ ॥

दुर्गामन्त्ररता[१] पुंसो योषिद् भूतिविवर्द्धिनी ।
सा चेद् भवति संक्रुद्धा धनमायुश्च नाशयेत् ॥३३ ॥

वृथा न्यासो वृथा पूजा वृथा जपो वृथा स्तुतिः ।
वृथा सदक्षिणो होमो यद्यप्रियकरः स्त्रियाः ॥३४ ॥

बुद्धिर्बलं यशो रूपमायुर्वित्तं सुतादयः ।
तस्य नश्यन्ति सर्वाणि योषिन्निन्दापरस्य च ॥३५ ॥

मातापित्रोर्वरं त्यागस्त्याज्यौ शम्भुस्तथा हरिः ।
वरं देवी परित्याज्या नैव त्याज्या स्वकामिनी ॥
वरं जनमुखान्निन्दा वरं वा गर्हितं यशः ॥३६ ॥

वरं प्राणाः परित्याज्या न कुर्यादप्रियं स्त्रियाः ।
न धाता नाच्युतः शम्भुर्न च वामा सनातनी ॥३७ ॥

योषिदप्रियकर्तारं रक्षितुं च[२] क्षमो भवेत् ।
दुर्गार्चनरतो देवि महापातकसङ्घकैः ॥
दोषैर्न लिप्यते देवि पद्मपत्रमिवाम्भसा ॥३८ ॥

॥ इति श्रीमायातन्त्रे एकादशः[३] पटलः ॥

---

१. दुर्गामन्त्ररतां पुंसां योषिद् भुवि विवर्द्धिनी- छ. ।

२. न- छ. । ३. द्वादशः- घ. ।

## ॥अथ द्वादशः पटलः ॥

श्रीदेवी उवाच—

शृणु प्रिये प्रवक्ष्यामि कवचं भुवि दुर्लभम् ।
यस्यापि पठनाद् देवि सर्वसिद्धीश्वरो भवेत् ॥१ ॥

इन्द्रोऽपि धारणाद् यस्य प्राप्नुयाद् राज्यमुत्तमम् ।
कृष्णेन पठितं देवि भूतापमारणाय च ॥२ ॥

शुकदेवोऽपि यद् धृत्वा सर्वयोगविशारदः ।
तस्य श्रीभुवनेश्वरी कवचस्य महेश्वरि ॥३ ॥

सर्वार्थे विनियोगः स्यात् प्राणायामं ततश्चरेत् ।
मायाबीजं शिरः पातु कामबीजं तु बालकम् ॥४ ॥

दुर्गाबीजं नेत्रयुग्मं नासिकामन्त्रदा मनुः ।
वदने दक्षिणाबीजं ताराबीजं तु गण्डयोः ॥५ ॥

षोडशी मे गलं पातु कण्ठं मे भैरवीमनुः ।
हृदयं छिन्नमस्ता च उदरं बगला तथा ॥ ६ ॥

धूमावती कटिं पातु मातङ्गी पातु सर्वतः ।
सर्वाङ्गं मे सदा पातु सर्वविद्यास्वरूपिणी ॥ ७ ॥

इत्येतत् कवचं देवि पठनाद् धारणादिकम् ।
कृत्वा तु साधकः श्रेष्ठो विद्यावान् धनवान् भवेत् ॥ ८ ॥

पुत्रपौत्रादिसम्पन्नो ह्यन्ते याति परां गतिम् ।
इदं तु कवचं गुह्यं साधकाय प्रकाशयेत् ॥९ ॥

न दद्याद् भ्रष्टमर्त्याय परदेवरताय च ।
इदं यन्त्रं महेशानि त्रिषु लोकेषु गोपितम् ॥१० ॥

सर्वसिद्धिकरं साक्षान्महापातकनाशनम् ।
कल्पद्रुमसमं ज्ञेयं पूजयेत् श्रियमाप्नुयात् ॥११ ॥

पठनाद् धारणात् सर्वं पापं क्षयति निश्चितम् ।
विवादे जयमाप्नोति धनैर्धनपतिर्भवेत् ॥
यं यं वाञ्छति तत् सर्वं भवत्येव न संशयः ॥१२ ॥

॥इति मायातन्त्रे द्वादशः पटलः ॥

## ॥समाप्तश्चायं ग्रन्थः ॥



# षडाम्नायतन्त्रम्

## ।।अथ प्रथमः पटलः ।।

अथ वक्ष्ये षडाम्नायं निगमसन्दर्भतन्त्रम् ।
पञ्चाम्नायं समाख्यातं षडाम्नायं नमस्कृतम् ।।१ ।।

पञ्चाननः पप्रच्छतु षडाम्नातन्त्रतत्त्वकम् ।
स्थूलसूक्ष्मपराशक्तिः सर्वकारणकारणम् ।।२ ।।

परंब्रह्म परमात्मा शब्दब्रह्म निगमजम् ।
निगमाद् आगमो जात आगमाद् यामलादिकः ।।३ ।।

क्रमे वेदे पुराणानि स्मृतिदर्शनविस्तराः ।
वेदे कर्ता अभावश्च केचिद् वदन्ति चापरे ।।४ ।।

ब्रह्म विश्वशास्त्रयोनिः त्वमेव परमेश्वरि ।
सर्वशास्त्रषडाम्नायनिगमं पूर्वसूचितम् ।।५ ।।

लोकोपकरणार्थाय कथयस्व जगन्मयि ।

श्रीभगवत्युवाच—

शक्तिदर्शनसूत्रं च कालीसहितमुत्तमम् ।।६ ।।

ब्रह्मसूत्रं स एव स्यात् चापरश्चापरः कृतः ।
निरञ्जन आत्मसूत्रं नाथोक्तिर्वृत्तमुत्तमम् ।। ७ ।।

प्रेमसूत्रं महाभावः त्रिपुरातन्त्रराजकम् ।
भाष्यपञ्चनिगमश्च सारतत्त्वं गतं तथा ।। ८ ।।

भोगयोगकल्पद्रुमा महाविद्याः प्रकाशिताः ।
सर्वसारं महातन्त्रं षडाम्नायं त्वयोदितम् ।। ९ ।।

महाकाल: पञ्चवक्त्रमक्षोभ्यो भैरव: स्वयम् ।
तदर्थो वर्त्म मोक्षाणामागमार्थे प्रकाशितम् ॥१० ॥

शिवादि: सिद्धो भैरव: सुसिद्धा योगिनीगणा: ।
दिव्यौघ: सिद्धो मानवो ह्यम्बात्मा मातर: क्रमात् ॥११ ॥

कुलनाथो गुरु: सर्व: प्रायशस्तन्त्रभाषित: ।
महाम्नाय: षडाम्नाय: पञ्चाम्नानन्दतन्त्रक: ॥१२ ॥

ऊर्ध्वाम्नायो बहुविधश्च कालिका नामेति महान् ।
चन्द्राम्ना: पूर्वखण्डश्च सूर्याम्ना: खण्डपश्चिम: ॥१३ ॥

तामसाम्ना द्विधा प्रोक्तो वामदक्षिणभेदत: ।
पञ्चाम्ना कालवक्ता च षडाम्ना कालिका स्मृता ॥१४ ॥

उड्डीश-डामर-जाल-शाबरादिरसायना: ।
कल्पसूत्रं विविधञ्च सिद्धकापालिककृतम् ॥१५ ॥

त्रिगुणो मिश्रित: प्रायो निर्गुण: सद्गुणान्वित: ।
ब्रह्मसूत्रं विष्णुसूत्रं शिवसूत्रञ्च उत्तमम् ॥१६ ॥

ब्रह्मसूत्रं वेदमूलं ब्रह्मा वेदप्रकाशक: ।
शास्त्रवर्त्म त्रिविधञ्च वेदागमविवेकजम् ॥१७ ॥

निगमो विवेके दिव्य: पशूनां वेदवर्त्मकम् ।
आगमञ्च मिश्राचारं दिवारात्रिविभेदकम् ॥१८ ॥

अवधूतं विविधञ्च सचेलञ्च दिगम्बरम् ।
दिगम्बरं दिव्यरूपं सचेलं मिश्रमिश्रितम् ॥१९ ॥

आश्रमं बहुविधञ्च अवधूताश्रमं महान् ।
आदौ अष्टाङ्गयोगेन चित्तशुद्धिर्यदा भवेत् ॥२० ॥

पञ्चाङ्गं मध्यमवीरसाधने सिद्धतां व्रजेत् ।
षडङ्ग: पञ्चमे योगो विज्ञानं दिव्यसिद्धिदम् ॥२१ ॥

प्रथमे वर्णसुशिक्षा द्वितये वृत्तिचिन्तनम्।
शास्त्रार्थाज्जायते ज्ञानं क्रमशः क्रमशो यतः ॥२२॥

निगमो ब्रह्मसूत्रञ्च सच्चिदानन्दवाचकम्।
आगमः पुरुषः प्राज्ञः परमात्मनिरूपणम् ॥२३॥

निष्कलं सकलं सूत्रं यामलेषु प्रकाशितम्।
निष्कला प्रकृतिः सूक्ष्मा शुद्धं ब्रह्म सनातनम् ॥२४॥

कूटस्थो गुणसूक्ष्मोऽपि निर्गुणः परमात्मना।
सकलं परमं ब्रह्म पतिः भगवती सती ॥२५॥

एकमेवाद्वितीयञ्च एकात्मा चणकाकृतिः।
परा भक्तिर्ज्ञानगम्या विज्ञानात्मा प्रेमास्पदः ॥२६॥

स्थूलः सूक्ष्मः स्वप्रकाशः तथा शास्त्रे प्रकाशितः।
यामलं सकलं सिद्धं द्विविधं काण्डमण्डितम् ॥२७॥

उत्तरं निगमसूत्रं वृत्तिभाष्यसमन्वितम्।
आगमं पूर्वकाण्डञ्च कर्म ब्रह्माण्डव्यापितम् ॥२८॥

सत्त्वगुणे भवेत् पूजा यामलं निर्मलार्थदम्।
ब्रह्मयामलसम्भूतः ऋग्वेदो त्रिगुणात्मकः ॥२९॥

प्रज्ञानं ब्रह्मविज्ञानं कर्म धर्मप्रचोदितम्।
विष्णुयामलसम्भूतः सामवेदः सुविस्तरः ॥३०॥

तत्त्वमसि महावाक्यं ज्ञानविज्ञानसंयुतः।
शक्तिज्ञानं सामगानं पितृदेवक्रियादिकम् ॥३१॥

शक्तियामलसम्भूतम् अयमात्मार्थवाचनम्।
वेदश्रेष्ठे ब्रह्मपुत्रे ज्येष्ठनाभे प्रकाशितः ॥३२॥

सत्याधिक्यं त्रिसर्वञ्च रुद्रयामलं निगमः।
आगमजो यजुर्वेदोऽहं ब्रह्मास्मि वाचकः ॥३३॥

भक्ते ज्ञानी कर्मी योगी भावभेदे तदर्थकः ।
अहं तत्त्वं सर्वव्यापी चिदात्मा अन्तरात्मनः ॥३४ ॥

आत्मवत् पश्यते सर्वं हिंसावादविवर्जितम् ।
अहं ब्रह्म खण्डज्ञानी ह्यात्मारामश्च योगिनम् ॥३५ ॥

त्रिकाण्डिको भवेद् वेदो ज्ञानभक्तिक्रियात्मकः ।
आत्मज्ञानं ब्रह्मज्ञानं भक्तिः सकल ईश्वरे ॥३६ ॥

कर्म धर्म द्विविधञ्च कामं सङ्कल्पवर्जितम् ।
वेदान्तः शिवभागश्च हृदयेश्वरसाधना ॥३७ ॥

विष्णुसूक्तो भक्तियोगो ज्ञानप्रेमक्रियात्मकः ॥३८ ॥

वेदस्वामी ह्यन्तर्यामीरूपो विष्णुः सनातनः ।
तद्भाष्यं संहिताः सर्वे पञ्चरात्रं पुराणकम् ॥३९ ॥

शिवसूत्रं महाकल्पे महाभावेन पूरितम् ।
पूर्वाम्नायः शब्दरूपं दक्षिणः श्रवणात्मकम् ॥४० ॥

ब्रह्म पश्चिम आम्नायः उत्तर उत्तराननम् ।
ऊर्ध्वाम्नायस्तत्त्वरूपं षडाम्ना कुलसाधनम् ॥४१ ॥

वेदवक्ता भवेद् ब्रह्मा कण्ठे शब्दे यथा हरिः ।
ज्ञानरूपं भवेच्छम्भुः शक्तिः सर्वगुणाश्रया ॥४२ ॥

ज्ञानमूलं यथा भक्तिर्भक्तिमूलं तथा क्रिया ।
पराभक्तिः प्रेममूलं विज्ञानं परमं पदम् ॥४३ ॥

यथा त्रिकाण्डिको वेदस्तथा तन्त्रं त्रिकाण्डिकम् ।
पुराणं भक्तिमूलञ्च विश्वासश्रद्धासंयुतम् ॥४४ ॥

पञ्चरात्रम् इतिहासः सर्वे पवित्रकारिणः ।
उपवेद उपतन्त्रमुपपुराणं बहुधा ॥४५ ॥

वेदार्थः स्मृतिरूपञ्च वर्णधर्मनिरूपितम् ।
षडङ्गाङ्गप्रत्यङ्गेषु नास्ति भेदो मतान्तरम् ।।४६ ।।

कल्पभेदे भट्टो व्यासः पुराणज्ञो मीमांसकः ।
आगतो गतो रूपेण स्थितो बहुर्वनान्तरे ।।४७ ।।

स्वरूपञ्च विरूपञ्च षडाम्ना पञ्चमाननम् ।
तत्पुरुषो वामदेवः सद्योजातस्तृतीयकः ।।४८ ।।

अघोर ईशान ऊर्ध्वस्तामसौ पूर्वपश्चिमौ ।
त्रिलोचनं भवेत् पूर्वं त्रिअक्षि पश्चिमाननम् ।।४९ ।।

कामो मन्मथः कन्दर्पो मकरध्वजसञ्ज्ञकः ।
मीनकेतुं स्मरेन्नित्यं षडाननं स्वराननम् ।।५० ।।

षडाम्ना ब्रह्म सायुज्य आधारः सर्वव्यापितः ।
पञ्चाननः परमात्मा च योगी भोगी सदाशिवः ।।५१ ।।

पञ्चाननः पञ्चरतिः चिद्घनशक्तिः कामिनी ।
कामसाम एकाम्नायं द्विदलं पुरगामिनी ।।५२ ।।

द्विदले त्रिपुरानन्देऽभेदः शक्तिसंयुतः ।
सदाशिवः खगाचारो दिवि खगः प्रचोदितः ।।५३ ।।

कुमारीस्थः सूक्ष्मकामो निष्कले प्रकृतिस्तथा ।
सकलः परमानन्दो यौवनं प्रौढभावकम् ।।५४ ।।

कर्मभावोऽप्यभावश्च शुष्कज्ञानं नपुंसकम् ।
ध्यानं ज्ञानं प्राणशक्तिर्हृदये प्राण ईश्वरः ।।५५ ।।

मूलपुरं ब्रह्मपुरं कालीपुरं सुनिर्मलम् ।
वैकुण्ठः कमलापुरं क्षीरोदे शयनं हरेः ।।५६ ।।

नागिनीडाकिनीपुरं ब्रह्मपुरं द्विरूपकम् ।
नागिनी व्याघ्रिणी सुप्ते चैतन्ये शिवमोहिनी ।।५७ ।।

कामकला कलावर्त्म वह्निकलास्थो मुक्तिदा ।
नादरूपा ककारञ्च कलावर्त्मप्रकाशिनी ॥५८ ॥

गुरुपदे महानादे चित्कला सकलालया ।
तत्सवितुर्वरणीयं भवसेतुविमुक्तिकम् ॥५९ ॥

इन्दुबिन्दुचिदाकारं सहस्रारे पुरे स्थितम् ।
द्विधाकारं सहस्रारं द्विधा त्रिरूपसंस्थितम् ॥६० ॥

सकुलं नकुलं ब्रह्मा स्थूलसूक्ष्मचिदात्मकम् ।
स्थूलोऽपि चिद्घनाकारं गुरुदेवे प्रतिष्ठितम् ॥६१ ॥

परमात्मा भवेत् सूक्ष्मः चैतन्यसतीसंयुतः ।
चिताङ्गमिष्टं श्रेष्ठञ्च अमृतार्णवप्लावितम् ॥६२ ॥

सोमधारा क्षरेद् यस्तु ब्रह्मरन्ध्राद् वरानने ।
पीत्वामृतमयीं धारां स एव मध्यसाधकः ॥६३ ॥

शक्तिः सुरा शिवो मांसो मत्स्यः कपथगामिनः ।
श्वासग्रासे मृत्युनाशे मुद्रा मुद्राप्रकाशनम् ॥६४ ॥

शिवसन्दर्शनार्थाय वासुकी व्याकुला सदा ।
रकारो रमणी बाला आकारस्वररूपिणी ॥६५ ॥

मकारः श्रीमहाकालो गुरुर्ब्रह्मपुरे स्थितः ।
रमणी रमणयोग आत्मारामः स उच्यते ॥६६ ॥

महेशः सूत्रसङ्गानि तन्त्रमन्त्रप्रकाशकः ।
कात्यायनो विष्णुसूत्रभक्तिसूत्रप्रबोधकः ॥६७ ॥

पाणिनिर्वेदवेदान्तसूत्रप्रकाशकारकः ।
निश्शब्दस्तु विजानीयाद् निष्कलो निर्गुणात्मनः ॥६८ ॥

हंसः सकलं ब्रह्म हि कारणं शब्ददेहिनाम् ।
शिवशक्त्यात्मको हंसः विसर्गो बीजव्यापितः ॥६९ ॥

अनुलोमो भवेच्छिवः विलोमो जीव उच्यते ।
निर्गुणो व्यञ्जनं हे सौः सगुणः स्वर उच्यते ।।७० ।।

गुणसाम्याद् महत्तत्त्वं तस्मात्त्रिगुणो जायते ।
ह्रस्वो दीर्घस्तथा प्लुतः सृष्टिस्थितिलयात्मकः ।।७१ ।।

पञ्चवर्गः पञ्चभूतं सत्यांशे मनो जायते ।
वृत्तिभेदे भवेद्भेदोऽहङ्कारादिस्त्रिरूपकः ।।७२ ।।

सगुणः शब्द ओङ्कारस्त्रिगुणो वेदबीजकः ।
नादबिन्दुसमायोगे भ्रमरो मोक्षदायकः ।।७३ ।।

मनच्छाया महामाया सङ्कल्पः सृष्टिबीजकः ।
त्रिबिन्दुर्मकारः साक्षाद् अकारः सृष्टिकारकः ।।७४ ।।

उकारः स्थितिरूपश्च बुद्धिरूपो जनार्दनः ।
मकारो बिन्दुसंहर्ता अहङ्कारो महेश्वरः ।।७५ ।।

अकारो ब्रह्मणो रूपम् उकारो विष्णुरूपधृक् ।
मकारश्च महारुद्रो भ्रुवोर्मध्ये प्रतिष्ठितः ।।७६ ।।

एतद्बिन्दुः समाख्यातो नादसूक्ष्मलयात्मकः ।
अकारो नयनस्थानम् उकारः कृष्णरूपधृक् ।।७७ ।।

मकारश्च महारुद्रो महाप्रलयशायिनः ।
शब्दसाम्यं भवेन्नादे प्रकृतिर्गुणसंयमी ।।७८ ।।

कारणं देहिनां चित्तं लयस्थानं चराचरम् ।
पञ्चाशद्वर्णाः पङ्क्तिश्च परा पश्यन्ती वैखरी ।।७९ ।।

अनन्तः शब्दसम्भूतोऽनन्तो जीवजन्तवः ।
पञ्चाशत् पञ्च पञ्चश्च गुणतत्त्वसमन्वितः ।।८० ।।

अनन्तो विश्वसंव्यापी ह्यनन्तो जीवकल्पना ।
निगमवाचको ब्रह्म हंसश्चैतन्यरूपिणी ।।८१ ।।

मन्त्ररूपा ब्रह्मयोनिः शास्त्रयोनिः सनातनी ।
पातालभूतलस्वर्गत्रिसप्तस्वर्गपूजितः ॥८२ ॥

योनिमुद्रा महामन्त्रो महावाक्यार्थनिर्णयः ।
ककारः कालिका साक्षाद् महायोनिस्वरूपिणी ॥८३ ॥

ककारः परमं ब्रह्म ख आदिः शून्य आत्मनः ।
स्वरशक्तिसमायोगे शब्दः सर्वप्रकाशिनी ॥८४ ॥

ककारः शून्यसंस्थायी हकारः पुरुषो महान् ।
पुरुषो द्विविधाकारः सकलो निष्कलात्मकः ॥८५ ॥

निष्कलञ्च निराकारोऽन्धकारो दिवि गतः ।
चित्कला सकला रेखा महाशून्यप्रकाशिनी ॥८६ ॥

नादरेखा त्रिकोणा हि बिन्दुर्वर्त्मनिरूपकः ।
अनादिरादिर्नादो हि भानुरिन्दुप्रकाशकः ॥८७ ॥

षट्शून्ये परमा विद्या घनस्थूलप्रकाशिनी ।
जगद्योनिः कामकला कला कलाप्रचारिणी ॥८८ ॥

विश्वयोनिर्बीजकला दशकलास्वरूपिणी ।
ककारस्त्रिकोणाकारो महायोनिश्चिदात्मकः ॥८९ ॥

शून्यः सूक्ष्मो निष्कलो हि सकलो रेखाभास्करः ।
अङ्कुश इषुर्विषुश्च कामरूपो महेश्वरः ॥९० ॥

अर्थतो निष्कलः शून्यः सकलो हि परः शिवः ।
त्रिगुणात्मा भवेन्मात्रा मायागुणप्रकाशकः ॥९१ ॥

चित्कला सकला व्याप्या त्रिगुणा गुणवर्जिता ।
महाकालो द्विधाकारो निष्कलः सकलः परः ॥९२ ॥

मायाकला जीवकला द्विधा माया प्रतिष्ठिता ।
अरुणतरुणनाम आद्यन्ते समभागतः ॥९३ ॥

वह्निकलासमायोगे चतुःषष्टिकला कला ।
सच्चिदानन्दो विभवः सकलः परमेश्वरः ॥९४ ॥

आसीत् शक्तिस्ततो नादस्ततो बिन्दुः प्रकाशितः ।
निनादः शून्यमेकञ्च द्विशून्यो नादबोधकः ॥९५ ॥

अर्थतश्चित्कला नादो वर्णतः सकारात्मकः ।
एकबिन्दुर्भवेच्चन्द्रः सृष्टिबीजचराचरः ॥९६ ॥

द्विबिन्दू रजतो भानुसंस्थितः कारणं महान् ।
त्रिबिन्दुः सर्वशून्यश्च रुद्ररूपं हुताशनः ॥९७ ॥

विस्फुलिङ्गः खण्डकोऽङ्गः पिण्डब्रह्माण्डव्यापितः ।
शून्यरूपो महाकालः कालिकाकूटयोगतः ॥९८ ॥

प्राणापानसमानश्च कन्दर्पदर्पबीजकः ।
उज्ज्वलोऽनलः काममेधासाम्राज्यवाचकः ॥९९ ॥

मीनकेतुर्महासेतुर्वाग्भवो भवमोचनम् ।
वसुर्मधुसुधाधारः रतिः सरस्वती परा ॥१०० ॥

मन्मथो मोहिनी बाला भूमण्डलसमावृतः ।
सच्चिदानन्द आकारस्त्रिधाकारः सुचिन्तनम् ॥१०१ ॥

स्थूलसूक्ष्मचिदाकारः ककारेषु प्रकाशितः ।
शून्यरूप एकाकारः सूक्ष्मरूपप्रवाचकः ॥१०२ ॥

हकारवाचकः पुंसः ककारः कामिनी परा ।
कालिकानलरूपं हि जलरूपा सरस्वती ॥१०३ ॥

धरणी ह्लादिनी बाला सर्वविद्या(कामकला) स्वरूपिणी ।
आद्या साध्या कामराजो वसुगम्या सरस्वती ॥१०४ ॥

कल्पश्च साधिनी बाला महाविद्या क्रमागतः ।
चिदाकारो द्विधाकारः कुलाकुलसमुच्चितः ॥१०५ ॥

ककार: सर्वमूलं हि व्यक्ताव्यक्तं द्विधा मतम् ।
तथा हकारो द्विविधस्त्रिविधो लयरूपकम् ।।१०६ ।।

प्रलये बिन्दुरूपञ्च नादचक्रे प्रतिष्ठितम् ।
कामकलासमायुक्त: सकारो नादरूपिणी ।।१०७ ।।

अपवर्णां विसर्गश्च रकारगतकामिनी ।
विसर्ग: स्वर्गरूपश्च वकार उकारात्मक: ।।१०८ ।।

हकार: शिवरूपं हि सकार: सतीरूपिणी ।
सर्वो भुवनसंयोगे त्रिभुवनप्रचारक: ।।१०९ ।।

पराप्रसादरूपश्च हकार आदिवर्णक: ।
सकलभुवनयोगे त्रिपुरा त्रिपुरेश्वरी ।।११० ।।

चणकाकृति: सर्वतो न भेद: परमात्मनि ।
व्यक्ताव्यक्तं द्विविधञ्च ज्ञानविज्ञानगोचरे ।।१११ ।।

स्वरूपविरूपं ज्ञानविज्ञानं द्विविधं मतम् ।
गुरुगम्ये शास्त्रयोगे क्रियायोगे स्वरूपत: ।।११२ ।।

(आदिकामस्वरूपञ्च अन्तकलास्वरूपिणी ।
स्मरहरकलाकाली काली चैतन्यरूपिणी ।।११३ ।।

त्रिकृतं सच्चिदानन्दं द्वितीयकालयोगत: ।
हंसमाया महामाया भानुनामेन पुटित: ।।११४ ।।

ढद्वयचन्द्रयोगेन ज्ञानचन्द्र: प्रकाशित: ।)
विरूपं विषयज्ञानं ध्यानमोहसमावृतम् ।।११५ ।।

अभ्रमविषय: कश्चित् शुद्धसत्यसमाश्रित: ।
शुद्धसत्ये भवेद् विद्या सर्वविद्याप्रकाशिनी ।।११६ ।।

चन्द्रदर्शस्वरवर्णा युगलशब्दवाचक: ।
पराप्रासादो विख्यात: प्रासादक्रमयोगत: ।।११७ ।।

हंसः सोऽहमिति ज्ञात्वा सोऽहं प्रासादवाचकः ।
वेदबीजं झिलिकादिस्तथैव परिजायते ॥११८ ॥

त्रिगुणात्मा त्रिमात्रा च पञ्चमात्रा च मुक्तिदः ।
तारस्तारा समाख्याता सर्वान्ते कालिका स्थिता ॥११९ ॥

कामः साम इच्छा कामः कामः सङ्कल्पवाचकः ।
कामराजो महामन्त्रः सर्वतन्त्रेषु गोपितः ॥१२० ॥

शब्दबीजं सृष्टिबीजं ककारो ब्रह्मरूपकम् ।
एकबिन्दुर्द्विबिन्दुश्च त्रिबिन्दुः ककारे स्थितः ॥१२१ ॥

ककाराज्जायते हंसः क्रमे मायागुणान्वितः ।
हंकारो निष्कलः शून्यो हंकारः सकलः शिवः ॥१२२ ॥

हंकारस्त्रिगुणो भर्त्ता ब्रह्मविष्णुमहेश्वराः ।
सकारस्त्रिविधा शक्तिः चिन्माया गुणरूपिणी ॥१२३ ॥

सकारः सच्चिदानन्दः कालिका परमाक्षरी ।
कुलकुण्डलिनी काली तारिणी रासभा नवी ॥१२४ ॥

सुन्दरी परमा विद्या सर्वविद्यास्वरूपिणी ।
शतकोटिमहाविद्या उपविद्या च तादृशी ॥१२५ ॥

तत्रैव भैरवादिश्च मन्त्रश्च (वै) प्रचोदितः ।
निगमो भावपूर्णश्च तदर्थ आगमः स्मृतः ॥१२६ ॥

अमलो यामलः प्रायो निगमागमसम्मतः ।
चतुर्विधं यामलञ्च तदन्यद् उपयामलम् ॥१२७ ॥

त्रिषष्टिचतुरास्तन्त्राः (१९२) क्रान्तिभागे प्रचारिताः ।
वासुदेवं मतं ग्राह्यं तन्मतं त्रिविधं स्मृतम् ॥१२८ ॥

प्रथमे वेदाचारो हि पश्वाचारेण भाषितः ।
ब्रह्मणा पूजिताचारो ब्रह्मचारिक्रियान्वितः ॥१२९ ॥

विष्णुपूज्यः पराभक्तिशुद्धाचारसमन्वितः ।
वामाचारः प्रवर्त्तो हि विभावरीयलक्षणम् ॥१३० ॥

शिवग्राह्यो दिव्यः पूज्यस्त्रिमतं विष्णुसम्मतम् ।
चिदात्मा निगमः प्रोक्तो विद्यात्मा आगमः स्मृतः ॥१३१ ॥

अन्तरात्मा यामलञ्च बाह्यात्मा वेद उच्यते ।
अङ्गप्रत्यङ्गशास्त्राणि तनुरोहादिकास्त्रिधा ॥१३२ ॥

आत्मत्राता भवेद् धन्यो अधमा आत्मघातिनः ।
मानवः कर्मभूयिष्ठोऽन्ये च भोगदेहिनः ॥१३३ ॥

पशुपक्षी भवेद् धन्यः पूर्वजन्मक्रियामतः ।
संसर्गः प्रथमद्वारमात्मनः त्राणकारणम् ॥१३४ ॥

श्रद्धानर्थो निवृत्तिश्च क्रमेण परिजायते ।
धर्मद्वारं द्वितीयञ्च कृतञ्च परमार्थकम् ॥१३५ ॥

स्ववर्णवर्णितधर्मः कृतधर्मः स उच्यते ।
यस्मिन् मन्त्रे यदाचारः परमार्थः स एव हि ॥१३६ ॥

कृतधर्मे चित्तशुद्धिर्विश्वासौ गुरुदैवतौ ।
क्रमे वैराग्यसमता सद्गुरुमन्त्रचिन्तनम् ॥१३७ ॥

तृतीयस्त्रिविधद्वारो भक्तिज्ञानक्रियान्वितः ।
आत्मसमर्पणं श्रेष्ठम् इष्टसाक्षात् प्रयोजनम् ॥१३८ ॥

चतुर्थं मुक्तिद्वारञ्च निर्विकल्पं सुदुर्लभम् ।
प्रथमद्वारं गुप्तञ्च एकादशसमन्वितम् ॥१३९ ॥

प्रेमभावमहालाभद्वादशेन प्रवेशनम् ।
ब्रह्मदीक्षा श्रेष्ठशिक्षा अभिषेकप्रवर्तना ॥१४० ॥

क्रमदीक्षा महाशिक्षा साधनपूर्णसेचनम् ।
महामेधा कुलसुधा सिद्धिसाम्राज्यदायिका ॥१४१ ॥

कुलक्षेत्रे कुलतीर्थे शिक्षा कुलाभिषेचनम् ।
क्रमाभ्यासं विना शास्त्रं क्रमाभ्यासं विना क्रियाम् ।।१४२ ।।

क्रमाभ्यासं विना भक्तिं ज्ञानप्रेमफलादिकम् ।
न लभते त्रिसत्यं हि बीजवृक्षं विना फलम् ।।१४३ ।।

दाने पणे लभेत् केचित् कच्चिद् वृक्षोऽपि निष्फलम् ।
पूर्वजन्मार्जिता विद्या अग्रे धावति निश्चितम् ।।१४४ ।।

भविष्यजन्म पूर्वस्थितजन्म न संशयः ।
अवश्यं क्रिया पूर्णे हि फलप्राप्तिप्रयोजकम् ।।१४५ ।।

भक्तिज्ञानक्रियायोगे न फलवञ्चनं भवेत् ।
स्थितो भूत-भविष्यद्वेत्ता सद्गुरुर्निश्चितम् ।।१४६ ।।

अधिकारो गुरुदत्तो असतस्तद्विपर्ययः ।।१४७ ।।

।। इति सर्वोत्तमे रहस्यषडाम्नायतन्त्रे निगमसन्दर्भे
प्रथमः पटलः ।।



## ॥अथ द्वितीयः पटलः ॥

श्रीभगवान् शिव उवाच—

मन्त्रबीजं देवतानां देवता सच्चिदात्मकः ।
शास्त्रगम्यस्तदन्तस्थो मन्त्रनित्यः कथं भवेत् ॥१ ॥

सच्छब्दवाचको ब्रह्म तथैव गुरुरीश्वरी ।
त्रितापहारकः को वा अनर्थो ह्यशुभप्रदः ॥२ ॥

को भेदो गुरौ देवे तु तथा मन्त्रे परमात्मनि ।
यतस्त्वं संशयच्छेत्ता वद सम्प्रति मां प्रति ॥३ ॥

श्रीभगवत्युवाच—

सम्पद्धि गुरुपादाब्जं चिन्तामणिर्मनीषिणाम् ।
मननं विश्वविज्ञानं त्रासदुःखसमाकुलम् ॥४ ॥

मन्त्रयन्त्रषडाम्नाय इष्टदो गुरुतत्त्वतः ।
मन्त्रवाचकः शास्त्रं हि न मन्त्रः शास्त्रसम्भवः ॥ ५ ॥

ब्रह्मबीजं मन्त्रवृक्षो ब्रह्म सकलो निष्कलः ।
ब्रह्मयोनिर्विश्वयोनिर्जगद्योनिस्तृतीयकः ॥ ६ ॥

हंसयोनिः शास्त्रयोनिः पञ्चयोनिस्त्वं हि भव ।
अनादिसृष्टिर्नित्यश्च बीजवृक्षः परस्परः ॥ ७ ॥

जीवात्मनः सूक्ष्मनित्यः शब्दबीजमयोनिजः ।
प्रकाशो वृक्षरूपश्च गुप्तो बीजे नपुंसकः ॥ ८ ॥

वृक्षोऽपि जायते बीजं वृक्षो द्विविधरूपकम् ।
नित्यो वृक्षः कालीकालो गुरुश्चिद्घनविग्रहः ॥ ९ ॥

नित्यः शिवो नित्यो जीवो मायागुणसमन्वितः ।
सत्ये विद्यागतः शिवो रजस्तमे चराचरः ॥१० ॥

जीवोऽपि शुद्धसत्त्वेन नित्यशिवत्वमाप्नुयात् ।
वृक्षमूलं यथा बीजं बीजमूलं हि पादपः ॥११ ॥

मन्त्रमूलं कल्पवृक्षः श्रीगुरुः परमेश्वरः ।
मन्त्रबीजे भवेद् वृक्षश्चतुर्वर्गफलप्रदः ॥
(देवता पुरुषार्थदा) द्विपाठः ॥१२ ॥

विद्यादः सद्गुरुर्देवो यशोऽर्थी यशःप्रापकः ।
अर्थार्थी ज्ञानहीनेन ज्ञानवृत्त्यपहारकः ॥१३ ॥

दीक्षागुरुर्महाकालः कालिका परमेश्वरी ।
माता पिता शिक्षागुरुस्तदङ्गं बहुधा स्मृताः ॥१४ ॥

गुरौ मन्त्रे तथा देवे एकात्मा दृढनिश्चयः ।
ऐक्यज्ञाने भवेत्सिद्धो न द्वितीयः कदाचन ॥१५ ॥

दीक्षागुरुर्मन्त्रदाता मन्त्रश्च परमगुरुः ।
परापरगुरुर्विद्या कुलकुण्डलिनी परा ॥१६ ॥

सकलो निष्कलो ब्रह्म इष्टानिष्टः प्रचोदितः ।
वह्निवच्चित् परं ब्रह्म गुरुश्चिद्वह्निर्नान्यथा ॥१७ ॥

काष्ठमध्ये यथा वह्निः शिष्यमध्ये तथेश्वरी ।
स्नेहवर्तिर्दीपधारा भस्माच्छादितोऽनलः ॥१८ ॥

संस्थितोऽपि तमोभूतो विना संयोगकारणम् ।
गुरुः प्रकाशते दीपं वह्निप्रकाशपूर्वकम् ॥१९ ॥

स्वप्रकाशः परं ब्रह्म तथा सद्गुरुरीश्वरी ।
सकलः सकलखण्डः पिण्डब्रह्माण्डसंहितः ॥२० ॥

अतोऽस्यामग्निपुञ्जः स्यात् तत्त्वतो ब्राह्मणो गुरुः ।
शुद्धचित्तो भवेच्छिष्यो यदा विश्वासभक्तिमान् ॥२१ ॥

नीरसं तरुवत्तूर्णम् अवनी पावनी भवेत् ।
अग्निपुञ्जःप्रवेशेन भूरिसरससंस्थिते ॥२२ ॥

क्रमे नीरसं सम्प्राप्य अनलस्तु प्रदीप्यते ।
प्रारब्धजनितो देहः सरसो रसवर्जितः ॥२३ ॥

जीवन्मुक्तो भवेद् वह्निर्विदेहे भस्म भूयते ।
सगुणः संस्थिते काष्ठे निर्गुणो वह्निमण्डले ॥२४ ॥

बहुभाग्ये महाभागे प्राप्यते मण्डलान्तरम् ।
वाडवानलखण्डश्च विस्फुलिङ्गो ह्यनन्तकः ॥२५ ॥

दशकलात्मना पूर्णा द्वादशाकाशमण्डले ।
कलापूर्णः कला चांसः अण्वंशश्चराचरे ॥२६ ॥

ब्रह्मविद् ब्राह्मणः पूर्णो वह्निमण्डलदेशिकः ।
आशुक्रमे चरेद् भस्म सरसो नीरसस्तरुः ॥२७ ॥

किञ्चित्तत्त्वज्ञोऽर्थार्थी ह्यज्ञो वित्तापहारकः ।
दीक्षाकाले महाकालप्रवेशो विद्युताकृतिः ॥२८ ॥

न दहने भवेत् क्षमोऽनात्मज्ञो जीवाकृतिः ।
प्रज्ञावान् लभते ज्ञानं वज्राग्निर्दाहनं यथा ॥२९ ॥

उपदेशक्रमो नित्यः शिष्यप्राप्ते सफलता ।
विस्फुलिङ्गे भवेत् पुञ्जस्तूलराशौ यथानलः ॥३० ॥

सकलं परमं ब्रह्म बृहदनलमण्डलम् ।
निष्कलं सूक्ष्मतत्त्वञ्च काष्ठमध्ये यथानलः ॥
(अस्तिमात्रं परात्मनः) ॥३१ ॥

सर्वव्यापि पूर्णमेकं स्थूलसूक्ष्मचिदात्मकम् ।
आत्मा सूक्ष्मो बृहद् ब्रह्म चिद्घनः परमेश्वरी ॥३२ ॥

सूक्ष्मप्रकाशकः स्थूलः सच्चिदानन्दविग्रहः ।
पदे यन्त्रं तनुर्भानुर्ब्रह्म दिवा निशाकरः ॥३३ ॥

चिदात्मकः परं योगश्चैतन्यः कुण्डली मुदा ।
वृक्षं प्रकाशते बीजं बीजं वृक्षः प्रकाशते ॥३४ ॥

तथैव गुरुदेवश्च मन्त्रराजो न चान्यथा ।
स्थूलः सूक्ष्मस्तथा द्योतिर्न स्वतन्त्रः कदाचन ॥३५ ॥

प्रेमविज्ञाने सद्ज्ञाने परा भक्तिः प्रलभ्यते ।
ज्ञानी ध्यानी तथा योगी मोक्षार्थी भक्तसाधुना ॥३६ ॥

भिन्नभावो ह्यभावश्च अभिज्ञः पूर्णभावना ।
फललाभो भावभेदे पञ्चमः पुरुषार्थदः ॥३७ ॥

गुरौ ब्रह्मे तथा मन्त्रे अभेदः सच्चिदात्मनः ।
आदिनाथो महाकालः परं ब्रह्म परात्मनः ॥३८ ॥

स्वरूपं कालः काली च अरूपं सर्वव्यापितम् ।
बिन्दुर्नादः सूक्ष्ममात्रं पुष्पवन्तप्रकाशितः ॥३९ ॥

गुरुपद्मे स्थितश्चन्द्रो रक्तपद्मे दिवाकरः ।
दशदले स्थितो वह्निः पिण्डब्रह्माण्डसंयुतः ॥४० ॥

नीलपद्मे महानीला पाटलः पीतपद्मके ।
अष्टदले धूम्रवर्णे षोडशारे विचित्रकः ॥४१ ॥

द्विदलस्थो महाकालः कालीनादः कुलान्तरे ।
सहस्रारे द्विधाकारे माधुर्यं उज्ज्वलासने ॥४२ ॥

महावीर्यो महैश्वर्योऽपसव्यो रूपमन्तरे ।
शान्तो दान्तः कुलीनश्च कुलशक्तिसमन्वितः ॥४३ ॥

गुरुरूपे सहस्रारे दयाकरुणया युतः ।
मन्त्रदाता यन्त्ररूपं चक्रं यन्त्रं यथा हरेः ॥४४ ॥

अभेदो यन्त्रदेवेषु तथा मन्त्रे वरेश्वरे ।
सद्गुरुः सच्चिदानन्दो विग्रहो विग्रहान्तरे ॥४५ ॥

स्थूलसूक्ष्ममहाद्योतिस्त्रिविधं रूपं निर्भरे ।
वाचकः स्थूलरूपं हि वाचा सूक्ष्मबीजात्मकः ॥४६ ॥

चिदात्मको महाद्योतिर्गुरुवक्त्रे प्रकाशितः ।
निष्कलः सकलब्रह्म गुरुप्रकाशकारकः ॥४७ ॥

पुष्पगन्धं लभेद् नासा दूरस्थं वायुयोगतः ।
चिदग्निर्देहमध्ये च काष्ठमध्ये यथानलः ॥४८ ॥

गुरुयोगे लभेद् ज्ञानं ज्ञानात्मा परमेश्वरः ।
स्रोतजलगततृणं स्रोतवेगे गतागतम् ॥४९ ॥

मायायोगे यथा जीवो यातायातः पुनः पुनः ।
सुरायुः सद्गुरुः कच्चित् चित्कुलः कुलमन्त्रदः ॥५० ॥

सूर्यः प्रकाश्यते सूर्यं न चान्यः प्रकाशवान् भवेत् ।
स्वप्रकाशः सूर्यः सत्ये न चक्षुषि न पश्यति ॥५१ ॥

स्वभावप्रकाशः सूर्यो अखण्डमण्डलं रविः ।
खण्डनयनं भाण्डे च शरावजलवद् भवेत् ॥५२ ॥

संयोगे शुभयोगे च गुरुकृपाप्रसादतः ।
लभते परमं ज्ञानं विज्ञानं प्रेममिलितम् ॥५३ ॥

श्रीगुरुर्ज्ञानदाता च फलदाता परेश्वरी ।
उभयश्चिद्घनाकारः करुणासागरो गुरुः ॥५४ ॥

दारुणा दारुणा मिश्रः त्रिसिन्धुर्जगदीश्वरी ।
कामचारो व्यभिचारोऽल्पायासं न सिद्धिदः ॥५५ ॥

त्याज्यो वर्ज्योऽसत्कार्यः श्रद्धाभक्तिपरायणः ।
सद्गुरुं लभते कच्चिद् बहुभाग्यप्रसादतः ॥५६ ॥

स्वधर्मरक्षणे ग्राह्यो नियमो गुरुवाक्यतः ।
समासनाङ्गः पञ्चाङ्गोऽनङ्गमङ्गवान् भवेत् ।।५७ ।।
तनुजो मन्त्रदः श्रेष्ठो भुक्तिमुक्तिशुभप्रदः ।
तनुज इष्टो मिष्टश्च वात्सल्यभावितः सदा ।।५८ ।।
वात्सल्यो द्विविधो भावो माधुर्यैश्वर्यमिश्रितः ।
शुद्धमातामयो भाव ऐश्वर्यः परमेश्वरी ।।५९ ।।
तत्पतिः पितारूपेण प्रकाशः परमेश्वरः ।
एतद्भावसंहितेन भावान्तरो विशिष्यते ।।६० ।।
केवले मधुरे सख्ये श्रेष्ठभावो भविष्यति ।
सर्वकर्ता सर्वहर्ता सर्वज्ञः श्रीमहेश्वरः ।।६१ ।।
दैवयोगमहाभोगवियोगादि तदिच्छतः ।
वामापक्षो भवेत्सख्य ऐक्यः केन सुसिद्धये ।।६२ ।।
मधुरं द्विविधं रूपं रससरससंयुतम् ।
भक्तिप्रेमे दैवो लक्ष्यो ह्यलक्ष्यो ज्ञानमिश्रिते ।।६३ ।।
निर्वाणपथमाहृत्य ध्यानज्ञानविवर्जितः ।
परा भक्तिः प्रेमभावः पञ्चमपुरुषार्थदः ।।६४ ।।
परिपक्वो यदा ऐक्यस्तत्त्वमसि सुसिद्धिदः ।
एकाकी न रमेत् कच्चिद् द्वित्त्वदैवसुयोगतः ।।६५ ।।
ब्रह्मसायुज्यो धन्यो हि तथा सायुज्य आत्मनः ।
महेशः समता ज्ञानं नास्तीति नास्तिकमतम् ।।६६ ।।
अतो दैवं समासाद्य प्रवर्त्यः सिद्धसाधकः ।
भावाभावो महाभावो महासिद्धिप्रदायकः ।।६७ ।।
एतद्भावो गुरुगम्यो न गुरुर्लभ्यते क्वचित् ।
गुरुश्च द्विविधः प्रोक्तः शिक्षादीक्षाप्रभेदतः ।।६८ ।।

दीक्षाकाले महाकाले कालिका परमेश्वरी ।
शिक्षागुरुस्तदङ्गञ्च क्रमे उपाङ्गो ह्यंशकः ।।६९ ।।
गुरुपद इष्टयन्त्रं ब्रह्मयोनिः सदा भवेत् ।
तत्पदं लभते भाग्ये कुलीनो दिव्यमेव च ।।७० ।।
द्विपदो दक्षवामतो दक्षो ह्यक्षो दिवाकरः ।
वामश्चन्द्रः पराभक्तोऽमृतपाने सदा मृडः ।।७१ ।।

।। इति रहस्यषडाम्नायनिगमसन्दर्भतन्त्रे
द्वितीयः पटलः ।।



## ।।अथ तृतीयः पटलः ।।

श्रीभगवान् शिव उवाच—

निष्कलसकलभेदं निष्कलं सकलं कथम् ।
चिदङ्गं जड्गमाङ्गञ्च को भेदो मायिने हरे ।।१ ।।

प्रयोजनं परं तत्त्वं सम्बन्धः को जीवेश्वरे ।
निर्विकारः कथं प्रेमा भिये न जायते ।।२ ।।

स्वरूपं किं रूपं सत्यं कथय भ्रान्तिशान्तये ।

श्रीभगवत्युवाच—

तत्त्वज्ञानं परं तत्त्वं चैतन्यं ज्ञानमुच्यते ।।३ ।।

ज्ञानाज्ञानं तटस्थञ्च चैतन्यं शक्तियोगतः ।
स्वरूपं लक्षणं प्रोक्तं सा शक्तिस्त्रिविधा स्मृता ।।४ ।।

चिच्छक्तिः परमाराध्या मायाशक्त्यपि पूजिता ।
गुणशक्तिः सृष्टिरूपा पूज्यापूज्या द्विधा मता ।।५ ।।

सत्त्वगुणे भवेद् विद्या विद्या रजतमान्विता ।
यथा बीजं वस्तुमात्रं मधुमिश्रेण मिष्टता ।।६ ।।

तिक्तः सैन्धवमिश्रेण रसा नानाविधाः स्मृताः ।
चिद्वस्तु बीजमात्रं हि परमात्माख्यरूपकम् ।।७ ।।

पिण्डं कुण्डलिनी शक्तिस्त्रिविधा बहुधा मता ।
चिद्घनो ह्यच्युतानन्दः सकला परमेश्वरी ।।८ ।।

यथा शून्यमभावश्च रेखाशून्यप्रवाचकः ।
तथा च शून्यं शून्यं हि अङ्गमुक्ते फलोदयः ।।९ ।।

निष्कलं शून्यमात्रं हि सकलं सकलं भवेत् ।
एकमात्रं सकलं हि स्त्रीपुरुषे प्रकाशितम् ।।१० ।।

एका काली महाकालो न द्वितीयः कथञ्चन ।
पूर्णोत्तमः पूर्णतरः सर्वेश्वरो महेश्वरः ॥११ ॥

महामाया गुणयोगे पूर्णविष्णुशिवादयः ।
सत्त्वगुणे भवेद्देवाः रजस्तमे चराचरम् ॥१२ ॥

चिन्मात्रं सकलाधारो बृहद्ब्रह्म सनातनम् ।
सर्वव्यापी अखण्डश्च खण्डशक्तिसमागमः ॥१३ ॥

निष्कलं परमं ब्रह्म अस्ति नास्ति गतो महान् ।
अस्ति काष्ठगतो वह्निर्नास्ति किञ्चिद् अनङ्गितम् ॥१४ ॥

आधेयः अस्ति चैतन्यः पिण्डस्थः परमात्मनः ।
सच्चिदानन्दो विभवः सकलः परमेश्वरः ॥१५ ॥

विभवः प्रभवः शक्तिः सकला चित्कला परा ।
गर्वमदः क्षीरोदशायी कारणशायी ईश्वरः ॥१६ ॥

मायाकलायुताः सर्वे महामायी महेश्वरः ।
माया जाता गुणशक्तिः प्रतिबिम्बो मनोमयः ॥१७ ॥

स्वर्गादिगम्यः सप्तश्च ज्ञानभूमीविचारय ।
वेत्ति तत्त्वस्वरूपेण सकलो निष्कलः परः ॥१८ ॥

धर्मे श्रेया ज्ञानकर्म (में) इन्द्रियबाह्या आन्तराः ।
आधिभौती आधिदैवी तथा चाध्यात्मिका यतः ॥१९ ॥

विषयभूतो वर्णश्च देवतागण एव च ।
मनो बुद्धिरहङ्काराश्चित्तेन्द्रियान्तराः ॥२० ॥

विषयदर्शनादीनां तेजः सूर्यादिदेवताः ।
पञ्चभूतानां सत्यांशे मनाद्यन्तरेन्द्रियः ॥२१ ॥

समष्टिभूता रजांशे प्राणपञ्चसमुद्भवाः ।
तमांशे केवला मोहरूपा परापराः ॥२२ ॥

प्रत्येकभूतसत्त्वांशे विषयश्रवणादिकः।
प्रत्येकभूतरजांशे कर्मेन्द्रियादि पञ्च च ॥२३॥

तमांशे स्वभावकामक्रोधादि पञ्च पञ्च च।
चतुर्विधा अण्डजादिर्जीवजन्तुचराचराः ॥२४॥

पञ्चीकृतो महाभूतः पञ्चकोशसमन्वितः।
कारणमानन्दमयं लिङ्गं व्याप्य तृतीयकम् ॥२५॥

मनप्राणादिविज्ञानम् अन्नजलादिसम्भवम्।
जाग्रते पञ्चविंशत्या तत्त्वं तेन प्रकाशितम् ॥२६॥

स्वप्ने ऊनविंशतिश्च सुषुप्ते कारणे स्थिता।
स्थूला सूक्ष्मा द्विधा स्थूले लिङ्गे सूक्ष्मभोगात्मका ॥२७॥

सुषुप्तिः प्रकृतिस्था च मृत्युः प्रलय उच्यते।
नित्यं दैनन्दिनं चैव नैमित्तिकादिर्भाष्यते ॥२८॥

प्राज्ञो ह्यत्यल्पजीवादिः सर्वज्ञो विराडान्तरे।
महाप्रलयो नास्त्येव प्रलयः पारिभाषिकः ॥२९॥

तुरीयावस्थस्वरूपञ्च वासनाबन्धं मुञ्चति।
ब्रह्मप्रलय इत्युक्तो निर्वाणं लय उच्यते ॥३०॥

कदाचिल्लभते कश्चिदनुभवसमन्वितः।
अनुभवो द्विविधश्च विषयपरमार्थकः ॥३१॥

आनन्दो ब्रह्मणो रूपमानन्दो हि प्रयोजनम्।
अत्यन्तनिवृत्तिसुखो द्विधाकारे सुसंस्थितः ॥३२॥

जीवन्मुक्तो देहमुक्तः विदेहो देहवर्जितः।
जीवन्मुक्तो द्विविधश्च विषयज्ञानमिश्रितः ॥३३॥

चिद्घनविषयध्यानविषयः परमार्थकः।
ज्ञाता ज्ञेयो गुण्यो मान्यो ज्ञानानन्दो ह्यनुल्बणः ॥३४॥

अच्युतः अच्युतानन्दः अच्युतो ध्यानदर्शनः ।
ध्यानोऽपि त्रिविधाकारो ज्ञानोऽपि त्रिविधः स्मृतः ॥३५ ॥

क्रमेणोक्तो यथा मुक्तो विषयो द्विविधः स्मृतः ।
विद्याविद्या द्विविधा च विषयः सर्वव्यापितः ॥३६ ॥

अविद्याजनितज्ञानविषयः सर्वनिन्दितः ।
नित्यसिद्धः कृपासिद्धः क्रियासिद्धः स्वरूपकः ॥३७ ॥

सर्वतः ध्येयं रूपञ्च नामरूपं स्वतन्त्रकम् ।
वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ॥३८ ॥

सुसिद्धे वासना शुद्धा मलिना तद्विपर्यया ।
उभयवासनात्यागो नेमो ज्ञाने विवेचितः ॥३९ ॥

नित्यसिद्धः शिवादिकः क्रियासिद्धो ह्यनन्तकः ।
नयनं त्रिविधं प्रोक्तं शुद्धञ्च मलिनं तथा ॥४० ॥

शुद्धं सकलब्रह्म च मायायोगेन मलिनम् ।
आधेयं विद्यायोगेन गुरुश्चक्षुप्रकाशकः ॥४१ ॥

यथा ब्रह्म निराकारो ह्यन्तरात्मा तथा भवेत् ।
परमात्मा महाशून्यः शून्या चिच्छक्तिरूपिणी ॥४२ ॥

चिद्घनः शक्तिस्थूला च यथा नीरकरकता ।
नीरः क्षीरो यथा पृथ्वी पाषाणादिक्रमागतः ॥४३ ॥

स्वभावः सर्वमूलञ्च स्वभावः सती ईश्वरी ।
अन्तरङ्गास्त्रिविधाश्च बहिरङ्गास्तथा पुनः ॥४४ ॥

तटस्थास्त्रिविधा मिश्रा सर्वव्यापी चराचरः ।
अन्तरङ्गा अन्तरात्मा सकलः परमेश्वरे ॥४५ ॥

सूर्यः प्रकाशको दीप्ते चैतन्यः सती निर्भरे ।
मायिने अंशभूतश्च कला अनुर्जीवान्तरे ॥४६ ॥

दर्पणस्थे शरावस्थे जले बिम्बे यथा रविः ।
सूर्यमण्डलं स्थूलं हि दिवि सूक्ष्मो भवेन्महान् ॥४७ ॥

गवाक्षोपरि छिन्नश्च दर्शने अनुलक्षितः ।
मण्डलमध्यशून्यवन्निष्कलः परमेश्वरः ॥४८ ॥

प्रकाशद्योतिचैतन्यं सकलशक्तिरीश्वरी ।
ब्रह्म ज्योतिर्भवेद् वह्निर्गवाक्षो देवकल्पना ॥४९ ॥

अणुवज्जीवजन्तुर्हि क्षुद्रद्वारे प्रदर्शितः ।
चिच्छक्तिः सच्चिदानन्दो माया इच्छा ज्ञानक्रिया ॥५० ॥

मनोऽपि सदसद्रूपं सत्त्वरजतमाश्रितम् ।
सकले सच्चिदानन्दः प्रेम सक्षरमक्षरम् ॥५१ ॥

ईश्वरे सत्यकामश्च प्रेम ऐश्वर्यमिश्रितम् ।
कल्पनापरिपूर्णेन असत्या भवति क्वचित् ॥५२ ॥

सत्याधिक्ये नरादीनां कर्मानुप्रेम प्राप्यते ।
स्त्रीमन्त्र उष्णज्योतिश्च पुंमन्त्रः शीतलप्रभा ॥५३ ॥

सूर्यश्चन्द्रं शशिर्भानुं वाञ्छति प्रेमलिप्सया ।
अन्तरङ्गा पराशक्तिर्मध्यमा योगमायया ॥५४ ॥

अधमा विद्याशक्तिश्च निराकारा पराश्रया ।
स्थूलवत् कुरुते कर्म ज्ञानकर्मेन्द्रियैः सह ॥५५ ॥

लिङ्गदेहो निराकारः सूक्ष्मः सप्रेमभुञ्जितः ।
कारणं स्वभावः सुप्तः चिच्छक्तिस्तुर्यकालिका ॥५६ ॥

चिद्घनः स्वप्रकाशश्च महाज्योतिः स्वभावतः ।
आनन्दो ब्रह्मणो रूपं स्थूलरूपप्रकाशकः ॥५७ ॥

माधुर्यो रसनाग्राह्यो रसः सूक्ष्मो न संशयः ।
अनुभवः सुखानन्दोऽप्रत्यक्षः कदाचन ॥५८ ॥

स्थूलः सूक्ष्मः फलसम्प्राप्त आनन्दस्त्रिविधात्मकः ।
सर्वाङ्गसुन्दरी किं वा सुन्दरो यौवनस्थितः ॥५९ ॥

अथवा प्रियरूपादि सुपुष्पः पूर्णचन्द्रिका ।
दर्शने जायते ह्लादोऽनुभवः परमात्मनि ॥६० ॥

आनन्दो धनस्थूलश्च कालानन्दो गरिष्ठो हि ।
अनुभवो बोधानन्दो यद् यदानन्दवाचकः ॥६१ ॥

स्थूलधनसुफलञ्च योगादिमन्त्रचिन्तनम् ।
स्थूलसूक्ष्मकोषादीनां कोषं स्थूलार्थं कथ्यते ॥६२ ॥

कोषवादः सकलो हि सकल ईश्वरादिकः ।
चिद्घनः कोषमावाह्य सकलः परमेश्वरः ॥६३ ॥

विभवः प्रभवः शक्तिरच्युतो नित्यदायकः ।
नित्योऽपि वर्तते स्थूले सूक्ष्मो नित्यः स्वभावतः ॥६४ ॥

निर्वाचनो निराकारः स्वभावो भाववर्जितः ।
अप्रकाशोऽभावश्च प्रकाशभावसंयुतः ॥६५ ॥

परस्परं भवेद् बन्धः सम्बन्धसंयोगात्मकः ।
न भवेत् सकलं ब्रह्म स्थूलसूक्ष्मचिदात्मकः ॥६६ ॥

जीवे भिन्नो भवेत् स्थूलो सज्ज्ञाने मरणे किल ।
दीक्षा शिक्षा प्राणयोगः स्थूलेन सह जायते ॥६७ ॥

विनाधारं निराकारं फलमात्रं न वर्तते ।
आधारः त्रिविधाकारश्चिन्मायामयरूपकः ॥६८ ॥

आधारः स्फटिकः शुद्ध आधारो वर्णभूषितः ।
शुद्धाङ्गमन्तरं साक्षी उपाङ्गो गुणमिश्रितः ॥६९ ॥

उपाङ्गस्पर्शने गङ्गा सदङ्गं सद् भवेद् ध्रुवम् ।
एकाङ्गदर्शने सर्पः सर्वाङ्गं विषप्लावितम् ॥७० ॥

स्वप्नजागरणसुप्तं मनः कारणसङ्गतम् ।
मन एव मुनिध्यानं कारणं बन्धमोक्षयोः ॥७१ ॥

यथा वृक्षादिषु च्छाया जलमाने प्रजायते ।
जले नष्टे पुनश्छाया पुनर्वृक्षे प्रलीयते ॥७२ ॥

मनोरूपं भवेद् वृक्षो वृक्षो बीजगतो यदा ।
कारणाकरणं ज्ञात्वा ध्यानज्ञानं समाचरेत् ॥७३ ॥

ज्ञाने कारणं नश्यति ध्याने प्रेमस्वरूपतः ।
चिच्छक्तिः कारणं ब्रह्म ध्यानज्ञानफलप्रदम् ॥७४ ॥

स्वप्रकाशं जागरणं तुर्यस्था कुलरूपिणी ।
चतुष्षष्टिकलाधारे सहस्रारे समावृतः ॥७५ ॥

सदाशिवः खगाकारो द्विदलोर्ध्वपुरे स्थितः ।
ब्रह्मपुरं विष्णुपुरं रुद्रपुरं तथेश्वरः ॥७६ ॥

त्रिपुरस्त्रिपुरा पुरकाली पुरसमावृता ।
सरस्वती निराकारा बिन्दुचक्रे प्रतिष्ठिता ॥७७ ॥

भिन्नाभिन्ना पञ्चशून्ये तारिणी सुप्रकाशिता ।
नाक्षत्री तिथिरूपा च षोडशवर्षा षोडशी ॥७८ ॥

चैतन्यरूपिणी काली समानन्दप्रदायिनी ।
शवरूपं भवेच्छिवः शक्तियोगे शिवो महान् ॥७९ ॥

शिवयोगे तथा सती सच्चिदानन्दरूपिणी ।
तारमन्त्रस्त्रिधाकारो ब्रह्मविष्णुमहेश्वराः ॥८० ॥

पञ्चमात्रा महातारा पञ्चप्रेतशवासना ।
कला बाला कामकला अमला कालकामिनी ॥८१ ॥

ज्ञाने मुक्तिः ध्याने भक्तिः प्रेमे भुक्तिफलप्रदा ।
अज्ञानं जीवजन्तूनां सृष्टिस्थितिलयात्मकाः ॥८२ ॥

तमः सुप्तो जरे स्वप्नः सत्यमिश्रेण जाग्रतः ।
जीवानां जीवभावश्च प्रेमिणां भाव उत्तमः ॥८३ ॥

चिच्छक्तिर्निर्मला काली मायाशक्तिस्तदंशकः ।
घनशक्तिः प्रतिबिम्बं सुखदुःखप्रयोजकम् ॥८४ ॥

सङ्कल्पवासनामुक्तं वासना द्विविधा मता ।
शुद्धा अर्थविनाशी स्याद् मलिना अर्थदायिनी ॥८५ ॥

शारीरं मानसं वाचं त्रिविधं कर्म चाचरेत् ।
सुकर्म सत्यं पूर्णञ्च कुकर्म नरकप्रदम् ॥८६ ॥

विकर्म धर्मनाशाय सुकाला विफला मृता ।
मलिना व्यापिता जन्तौ स्थावरो गुप्तजाग्रतः ॥८७ ॥

मनश्च जीवजन्तूनां कारणं बन्धमोक्षयोः ।
सत्सङ्गे सत्यसञ्चारः सत्यकर्मे निपुणता ॥८८ ॥

आसक्तिर्भक्तियोगेन कामहीने सफलता ।
कामना बहुविधा च इष्टा श्रेष्ठा अकामता ॥८९ ॥

चिदानन्दात्मसुखमात्मवन्तं द्विधा मतम् ।
जाग्रदिन्द्रियग्राह्यः सेव्यसेविप्रतिष्ठितः ॥९० ॥

स्थूल ऐक्यं महामोक्षः सूक्ष्मचिन्तनं स्वप्नवत् ।
सुषुप्ते प्रलयः सर्वोऽस्ति नास्ति गतो भवेत् ॥९१ ॥

अस्ति चैतन्य उष्णत्वं नास्ति किञ्चिद् निष्कलम् ।
तुर्यस्वरूपमाप्नोति भ्रमप्रमादवर्जितम् ॥९२ ॥

बहुभाग्यप्रसादेन तुर्यावस्था पुरे स्थितम् ।
तुर्यपुरं गुरुपुरं कालीपुरसमायुतम् ॥९३ ॥

त्रिपुरेशपुरं वेत्ति स्वामीव वेत्ति भाविनी ।
सजलपूरितपुरं कारणं लवणाम्बुधिः ॥९४ ॥

क्षीरोदशयने विष्णुः ब्रह्मा चैव स्मरहरः ।
सुचैतन्यं महामान्यं त्रिविधं सतीकारणम् ॥९५ ॥

गुप्ता व्यक्ता तथा सुप्ता स्थूलसूक्ष्मचिदात्मकः ।
नादबिन्दुः सूक्ष्मज्योतिः सवितुर्वह्निचन्द्रमाः ॥९६ ॥

चिच्छक्तिः सुप्रसन्नेन सत्यरूपस्य दर्शनम् ।
गुरुकृपा विना शक्तिर्न प्रसन्ना भवेत् कदा ॥९७ ॥

प्रथमे गुरुदीक्षादिः क्रमे एकाग्रसाधना ।
व्यग्रत्वं जाग्रत्त्वं शक्तेः ततः सद्गुरुभावना ॥९८ ॥

सर्वत्र अङ्गस्वाङ्गानामुत्तमं श्रीगुरुपदम् ।
शिवपदः शक्तिपदः चिन्तामणिर्मनीषिणाम् ॥९९ ॥

पिण्डब्रह्माण्डपरमं महाशून्यमधःस्थितम् ।
ज्ञानचक्षे भवेल्लक्ष्यं वैरिपक्षे विडम्बना ॥१०० ॥

त्रिलोचनो लक्षान्तोऽक्षो विरूपाक्षप्रयासिनः ।
चक्षुर्दर्शनमुक्तो हि आकाशः क्षुद्ररन्ध्रके ॥१०१ ॥

ज्ञानचक्षे किमाश्चर्यं कामकलाप्रदर्शनम् ।
माधुर्यं वर्जितसौर्यं सम्राड् विराडादिकम् ॥१०२ ॥

महाश्चर्यमणिमादि इन्द्रजालं प्रपश्यति ।
मधुरमूर्तिर्माधुर्यं भावुकरसिकप्रियः ॥१०३ ॥

तदन्यो नास्ति मधुरोऽतो लिप्सा यथेच्छया ।
सुरासिन्धुः सुधासिन्धुर्विषसिन्धुर्विरहजः ॥१०४ ॥

भावाभावे महाभावो द्विविधो भाव उत्तमः ।
मननं दर्शनं साक्षाद् दर्शनं सुप्रयोजनम् ॥१०५ ॥

प्रथमे दर्शनलिप्सा द्वितीये पदसेवनम् ।
तृतीये चरणाम्बुजामृतपानधारणम् ॥१०६ ॥

पुरुषार्थः पञ्चमार्थः परमार्थो विशिष्यते ।
पुष्पवन्तश्चन्द्रभानुरेको लीनः प्रकाशितः ॥१०७ ॥

अतुल्यप्रकाशः सूर्यः अतुल्यशीतलः शशी ।
सुनिर्मलं महाफलं नादबिन्दुसमन्वितम् ॥१०८ ॥

विना भक्तिम् अन्यमुक्तिः खद्योतरूपकल्पनम् ।
अविधेया परा भक्तिः प्रेमफलप्रदायिका ॥१०९ ॥

अतः प्राणो मनो बुद्धिर्देहसर्वेन्द्रियाणि च ।
आत्मसमर्पणं कुर्याद् यथा प्रेमप्रयोजनम् ॥११० ॥

सानन्दं विचरेत् पूर्वमात्मानात्मविवेकतः ।
आत्मा पूर्णशक्तिवस्तु शक्तिः सूक्ष्मे निरामयः ॥१११ ॥

अनन्तवाचकः शक्तिर्धनचैतन्यरूपिणी ।
चैतन्यः शक्तिसम्भूतस्तन्मात्रे हि प्रतिष्ठितः ॥११२ ॥

इच्छाज्ञानक्रियाशक्तिर्महत्तत्त्वगुणत्रयम् ।
विषयभूतवर्गञ्च देवताजन्मकर्मसु ॥११३ ॥

ब्रह्मलीनं जगत्सर्वं गुह्यलीनं प्रयोजनम् ।
निष्कलमद्वितीयञ्च शक्तिगुणादिगोपितम् ॥११४ ॥

सकलं सर्वसम्पूर्णं पूर्णहरतमोत्तमम् ।
एकात्मा हि द्विधा भूत्वा सद्रूपं चिद्घनात्मकम् ॥११५ ॥

सर्वावयवपूर्णञ्च माधुर्यरूपमव्ययम् ।
तरुणा करुणा नित्या न वेश्या सर्वमोहिनी ॥११६ ॥

तथैव मोहनं नित्यं प्रेमानन्दप्रवर्धनम् ।
सर्वोज्ज्वला उज्ज्वला च उज्ज्वला आसने स्थिता ॥११७ ॥

अनन्तानन्तब्रह्माण्डे अद्वित्वद्विप्रतिष्ठिता ।
प्रेमानन्दप्रेममयी शुद्धसत्यसनातनम् ॥११८ ॥

आधारश्चिद्घनाकार आधेयश्चित्परात्मनी ।
विषयः परमा प्रीतिः सद्रूपं दोषवर्जितम् ॥११९ ॥

विस्फुलिङ्गो जीवात्मनः परमात्मा यथा धनः ।
देवानां मूलदेवो हि इन्द्रियभूतदैवतम् ॥१२० ॥

बीजभूते न दोषः स्याद् दोषगुणगुणत्रयम् ।
गुणसाम्ये महत्तत्त्वं प्रकृतिः शक्तिवाचिनी ॥१२१ ॥

शक्तिः शान्ता शक्तिः कान्ता शक्तिर्बन्धपरमेश्वरी ।
न भेदः प्रकृत्यां ब्रह्म चिच्छक्त्योश्चित्परात्मनोः ॥१२२ ॥

प्रकृतिर्बहुरूपा च मिश्रे विकृतिर्बहुला ।
न दोषो जायते ब्रह्म निर्लिप्तं शक्तिसङ्गमे ॥१२३ ॥

चिच्छक्तिः परमात्मा च देहप्राणसमन्वितः ।
महामाया भवेत् काया इन्द्रियदेवसंयुता ॥१२४ ॥

तनूरुहतटस्थादित्रिगुणशक्तिव्यापितः ।
निर्मलमनलयोगे सुवर्णवर्णः सुन्दरः ॥१२५ ॥

तरलः कठिनो दीप्तिस्तथा ब्रह्म परात्मनः ।
कठिने एकरूपं हि द्विरूपमानुषङ्गिकम् ॥१२६ ॥

स्वरूपं स्वरूपं वर्णघर्षणे मणिदर्शनम् ।
कालकूटोऽप्रकटो विषेण कालनाशकः ॥१२७ ॥

वरं विषं हरेद् विष इन्द्रिययोगसाधनम् ।
बहुभाग्यप्रसादेन पराभक्तिप्रसादतः ॥१२८ ॥

ततो कुलगुरुं वेत्ति सहस्रदलसहितम् ।
अनर्पितं चरित्रं स्यात् करुणयामृतप्रदम् ॥१२९ ॥

चिन्तामणिमणिपुरे इष्टरूपे प्रकाशितम् ।
कुलपुरे स्वरूपञ्च कुलपुरे तदंशकम् ॥१३० ॥

चन्द्रपुरे पूर्णत्वं च अर्कपुरोत्तमोत्तमम् ।
मध्यपुरे गोलोकञ्च नित्यं वृन्दावने हरिः ॥१३१ ॥

वृन्दावनं परित्यज्य पादमेकं न गच्छति ।
श्मशानानलो यज्ञाग्निरग्निरेकत्त्ववाचकः ॥१३२ ॥

तथा वृन्दावनं सर्वं वृन्दावनप्रवाचकः ।
गोलोको गोलोको नित्यं तथा वृन्दावनपुरी ॥१३३ ॥

अच्युतो नित्यपुरश्च अनित्यो योनिजो यतः ।
एककालो न नश्यन्ति अतो नित्यः सुसङ्गतः ॥१३४ ॥

नित्यं वृन्दावनं विद्धि अङ्गे लोमानि सर्वतः ।
वृन्दावने घनश्यामो घनश्यामाङ्गिनी खगः ॥१३५ ॥

हितार्थममरलोकानां कृष्णस्तिष्ठति बालवत् ।
कृष्णवर्णः शशिर्यत्र तत्र द्वारावती स्थिता ॥१३६ ॥

तत्र कृष्णश्च राधा च चन्द्रे सूर्ये नराकृतिः ।
ब्रह्मा चेद् गुप्तो भुक्तः स्याद् मेरुर्ब्रह्म सनातनम् ॥१३७ ॥

आदिमेरुः स्वर्गयोगे ब्रह्मस्थानमुदाहृतः ।
चिद्घनः कालिकाकुलमानन्दो ब्रह्मविग्रहः ॥१३८ ॥

माधुर्यं रसराज्यञ्च चैतन्यं तारिणी परा ।
तत्सवितुर्वरणीयं बाला श्रीभानुकन्यका ॥१३९ ॥

न भेदः सच्चिदानन्दे वेदा रसप्रयोजकाः ।
इक्षुदण्डो भवेत्पिण्डो रस आस्वादबोधकः ॥१४० ॥

चिद्घनस्थूला ख्याता रसः सूक्ष्मः परात्मनि ।
मिष्ट इष्टो भवेद् ह्लादः सर्वदा ज्योतिसंयुतः ॥१४१ ॥

स्थूलपिण्डो मिश्रखंण्ड आधाराधेयसन्ततः ।
सच्छब्दवाचको नित्या आधेया रसरूपिणी ॥१४२ ॥

सर्वव्यापी चिदाधारा ब्रह्मरूपा सनातनी ।
आनन्दो ब्रह्मणो रूपं चैतन्यं शक्तिसंस्थितम् ॥१४३ ॥

महाकाशो घटाकाशो ह्यखण्डखण्डव्यापितः ।
सन्दिनी ह्लादिनी मुक्ता सच्चिद्रूपा परात्मनि ॥१४४ ॥

सच्चिदंशो न चेद् ध्वंसः अखण्डः खण्डकल्पना ।
अखण्डो भासुरो भानुः शराबजलसंस्थितः ॥१४५ ॥

अस्थिरा सन्दिनी यत्र ह्लादिनी अस्थिरा भवेत् ।
नित्यानन्दो भवेच्छिवो जीवोऽनित्यकल्पना ॥१४६ ॥

पुष्पवन्तो ह्लादयोगो योगचन्द्रदिवाकरः ।
परमाराध्या भवेदाद्या चिद्घनशक्तिरूपिणी ॥१४७ ॥

दक्षो ह्यक्षः सदङ्गश्च द्वितीया द्वितीया परा ।
वामा रामा नन्दबाला सकला सफला यतः ॥१४८ ॥

ब्रह्मरन्ध्रे महाकालो ब्रह्मवक्त्रे (रन्ध्रे) च कालिका ।
प्रकाशनयनं ज्योतिः श्रुतिस्मृतिनिगमजः ॥१४९ ॥

सुपुष्पगन्धरसिका रसिका नायिकाद्वयः ।
तिमिरबाणजालश्च पिण्डब्रह्माण्डो मस्तकः ॥१५० ॥

तिमिरारिर्मुखद्वारि करगतः पदानतः ।
हस्ताध्वन्तं खण्डः खण्डः शाणितकरधारणे ॥१५१ ॥

अभयवरदा नित्या दक्षिणा दक्षिणागमे ।
द्विजराजो भवेदस्तं नगराजप्रदर्शने ॥१५२ ॥

वक्ष (रक्ष) लक्षं शैलसुता त्रिपुरे सृष्टिसंस्थिता ।
समानमाहुतिस्थानं वदनं करालं मतम् ॥१५३ ॥

मध्यक्षीणचरतटो विस्तीर्णसरितस्तटः ।
अभ्रान्तो भवति शान्तो भ्रान्तः शान्तः समागतः ॥१५४ ॥

धारिणीमानिनीप्रायः कम्पमानः क्षणे क्षणे ।
कालग्रासे सर्वनाशे कालग्रासे निपातितः ॥१५५ ॥

कालसंग्रसनात् काली महाकालविमोचिनी ।
वाराणसी नित्यकाशी रामचन्द्रवने स्थिता ॥१५६ ॥

कुलनाथो विश्वनाथो ध्यानज्ञानपरायणः ।
इहामुत्र विरागश्च भुक्तिमुक्तिपदप्रदः ॥१५७ ॥

उरुभानुः किरणसूस्तरुः करिकरस्तथा ।
परमसम्पदपदमुक्तिपदद्वयस्थितः ॥१५८ ॥

भक्तिपराः केचिद्भावाः प्रेमभावाश्च उज्ज्वलाः ।
न वाञ्छति शुद्धमतिः निर्वाणगतिवञ्चना ॥१५९ ॥

सनन्दस्त्रिविधो बन्धः प्रवर्तः साध्यसिद्धकः ।
सिद्धानां प्रथमा व्याख्या साधनं मध्यवाचकम् ॥१६० ॥

प्रवर्तं त्रिविधं वर्त्म क्रमे श्रृणु स्वतन्त्रकम् ।
कृष्णचन्द्रो भवेत् कालः कालिका भानुकन्यका ॥१६१ ॥

पिण्डखण्डो वक्त्रखण्डोऽष्टस्पष्टो गृहान्तरः ।
ब्रह्माण्डो मांसपिण्डश्च विविधं ग्रहणं यथा ॥१६२ ॥

राहुचन्द्रो ग्रसेत् सूर्यं विपरीतो विपरीतम् ।
मन्त्रयोगः प्राणयोगः क्रियाज्ञानसमन्वितः ॥१६३ ॥

भक्तियोगः समायोगः पञ्चयोग उदाहृतः ।
योगो बहुविधः प्रोक्तः पञ्चयोगो गरीयान् ॥१६४ ॥

सर्वयोगः सहयोगो मन्त्रयोगः सफलता ।
मन्त्रो हि परमाराध्या देवता बीजपूर्विका ॥१६५ ॥

मन्त्रहीनः क्रियाहीनो ज्ञानहीनो विडम्बितः ।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ॥१६६ ॥

शतकोटिजपेनैव तस्य सिद्धिर्न जायते ।
अष्टाङ्गः प्राणयोगश्च पञ्चाङ्गः फलति महान् ॥१६७ ॥

परिचर्या चतुःषष्टि उपचारात्मकक्रिया ।
ज्ञानयोगे भूतशुद्धिः ब्रह्मज्ञाननिरूपणम् ॥१६८ ॥

भक्तियोगः क्रियामुक्तः कामसङ्कल्पवर्जितः ।
श्रद्धा शुद्धा व्यभिचारो दृढभावपरान्वितः ॥१६९ ॥

वैराग्यं मनोभूमिश्च समायोगेन रोपणम् ।
भक्तिवारिजलचक्रे मन्त्रयन्त्रे प्रसेचनम् ॥१७० ॥

उष्णज्ञानं प्राणध्यानम् आकाशस्थलविस्तृतम् ।
कल्पवृक्षो भवेल्लक्ष्यः फलपुष्पसमन्वितः ॥१७१ ॥

प्रथमे आत्मज्ञानं हि द्वितीये विद्याचिन्तनम् ।
तृतीये शिवतत्त्वं च सकलनिष्कलात्मकम् ॥१७२ ॥

त्रिविधं त्रिविधं सर्वं क्रमेण श्रृणु सादरम् ।
देहज्ञानेन दासोऽहम् आत्मज्ञाने तदंशकम् ॥१७३ ॥

ब्रह्मज्ञानेन पूर्णोऽहम् इति मे निश्चलात्मनः ।
वीर्यरूपी पिता सुतो गर्भागारे प्रवेशनम् ॥१७४ ॥

न भेदो भेदः प्रत्यक्षः सेव्यसेवकरूपकः ।
स्थूलसूक्ष्ममात्रं भेदो बीजं वृक्षे यथा भवेत् ॥१७५ ॥

भेदाभेदौ विभेदश्च केवलभावकल्पनम् ।
विस्फुलिङ्गे न च भेदोऽनले सूर्यमण्डले ॥१७६ ॥

सर्वव्यापी घटरूपी रसज्योतिर्यथा स्थितः ।
आत्मज्ञानं सख्यध्यानमेकांशेन स्थितो जगत् ॥१७७ ॥

सुवर्णं निर्मलं सत्त्वं धातुयोगे जडात्मकम् ।
दहनपवनयोगे स्वत्वगुणस्वरूपकम् ॥१७८ ॥

ब्रह्मज्ञानं द्विधा ध्यानं सकलनिष्कलात्मकम् ।
सकलो द्विविधाकारः सेव्यसेवके वर्तते ॥१७९ ॥

भावभेदे भेदभावो भूतगुणः परस्परः ।
तत्त्वांशे कनकं सर्वं न भेदो भेदवाचकः ॥१८० ॥

अवज्ञः स कण्ठकेशचरणाभरणादिकः ।
चरणाभरणवत् सदा सादिभावप्रपूरितः ॥१८१ ॥

तदन्यभावपूर्णश्च क्रमे कण्ठशिरोगतः ।
प्रायशः निष्कलभावः शान्तभावे प्रतिष्ठितः ॥१८२ ॥

यदि वा गुरुकारुण्ये लभते बीजमव्ययम् ।
वेदागमविवेकेन प्रथमे बीजरोपणम् ॥१८३ ॥

क्रमे स्कन्धः शाखा वल्लिः पुष्पवन्तं निगमजम् ।
फलोद्भूतं त्रिमतञ्च पक्वे फलं तृतीयकम् ॥१८४ ॥

मधुरं मधुरं श्रेष्ठम् अतिसुमधुरं महान् ।
प्रवर्तवर्त्म मधुरं नीलचेलमती क्रिया ॥१८५ ॥

साधको द्विविधो बोध्यः सचेलो वस्त्रवर्जितः ।
सचेले गुप्तभावश्च प्रकाशश्च दिगम्बरे ॥१८६ ॥

सिद्धे मनोगतो भावः सचेलो यतिरम्बरे ।
सम्बन्धेन भवेद् बन्धो बन्धमूलक्रियां चरेत् ॥१८७ ॥

श्रेष्ठे नष्टे साधारणे सम्बन्ध एकरूपतः ।
कायिकवाचिकव्याप्तं मानसं साधनत्रयम् ॥१८८ ॥

कायिकं स्थूलरूपं च शरीरसाधनं महत् ।
स्थूलगन्धस्थूलपुष्पस्थूलनैवेद्यसंयुतम् ॥१८९ ॥

वाचिकं स्तुतिनामादि ज्ञानादि भक्तिपूरितम् ।
मानसे क्रियाविस्तारो मानसो जपनादिकः ॥१९० ॥

एष सेवापरो मन्त्री सम्बन्धः सुकृतो जनः।
एतद्विपर्ययकार्यं पशुपक्षिगणादिवत् ॥१९१॥

नष्टदुष्टजातिभ्रष्टा भ्रष्टदेशनिवासिनः।
माता पिता पतिर्भ्राता सुतसुताविवर्जनम् ॥१९२॥

निःसम्पर्को भवेत् पक्षो गुणसपक्षो बान्धवः।
अत एव क्रियामूलं ध्यानभक्तिसमन्वितम् ॥१९३॥

ज्ञानविज्ञानसंयुक्तं रहस्यसाधनादिकम्।
सम्बन्धः सकलब्रह्म निष्कलोऽभेदात्मनः ॥१९४॥

त्याज्यः पूज्यः कामक्रोधादिरविद्यासम्भवः।
एतद् रोगो दुःखभोगो नश्यन्ति आत्मघातिनः ॥१९५॥

गुरुदत्तो महामन्त्र औषधं विधिसाधना।
साधुसङ्गः क्रियामुक्तो यमनियमभावितः ॥१९६॥

सुगम्यो वर्त्मतन्त्रेण सधर्मसहधर्मिणा।
यस्मिन् मन्त्रे यदाचारः सोऽपि धर्मव्यवस्थितः ॥१९७॥

अर्थश्च जपसम्पत्तिरन्यार्थश्च निरर्थकः।
कामनादेवतासिद्धिं मोक्षं तन्मयमाप्नुयात् ॥१९८॥

तन्मन्त्रः सच्चिदानन्दोऽभेदो न स्वतन्त्रकः।
रसज्ञो रसनारूपे सुरसभोगकामना ॥१९९॥

सिद्धकामभावलाभस्तन्मयो वामभाविनाम्।
विभावभाविनां भावस्तन्मये योगसाधना ॥२००॥

मुक्तिर्बहुविधा रूपा सालोक्यरूपसम्मता।
सायुज्यो विभावो भावः कल्पना पूर्णसिद्धता ॥२०१॥

तन्मये तद्रूपभावे साम्राज्यराज्ञी पूजिता।
निर्वाणं त्रिविधं शान्ति-एकत्वद्वित्वमिश्रितम् ॥२०२॥

प्रेमास्पदः पञ्चपञ्चतः पञ्चमः पुरुषार्थदः ।
पुरुषार्थो ह्यनेकार्थस्त्रितयभावसंयुतः ॥२०३ ॥

आद्यन्तो नित्यसम्बन्धो जननीजनकमतम् ।
तद्रूपं ज्ञानगम्ये च सकल ईश्वरे गतः ॥२०४ ॥

गुरुभावो दीक्षालाभः शिक्षाभावो ह्यनन्तकः ।
निःसम्पर्कः स्त्रियो लक्षः सम्बन्धो दम्पतीर्यतः ॥२०५ ॥

पूर्वजन्मार्जितो भावः सुदृढो यदि जायते ।
अवश्यं लभते शिष्यो गुरुगम्ये प्रकाशते ॥२०६ ॥

संकेतज्ञः क्रियादक्षः सर्वज्ञो विज्ञः सद्गुरुः ।
अधिकारी भावाचारो यथायोग्यनियोजितः ॥२०७ ॥

उपदेशक्रमो लक्षदक्षताशिष्यसंयुतः ।
चर्मचक्षे इष्टमूर्तिं प्रत्यक्षदर्शनं महान् ॥२०८ ॥

प्रथमे पुरुषाकार आकारो मूर्तिभावना ।
दृढक्रियः क्रियायोगे भक्तियोगे कृपात्मना ॥२०९ ॥

कृपाकार्यो महापूज्यो द्वितीयपुरुषार्थदः ।
भावलाभो ह्यभावेन इच्छासिद्धिस्तृतीयकः ॥२१० ॥

भ्रान्तिनाशे शान्तिलाभे चतुर्थरूपकल्पनम् ।
पञ्चमे पञ्चमभावः पुरुषार्थश्च पञ्चमः ॥२११ ॥

क्रमेण जायते प्रेमा देवानामपि दुर्लभः ।
भक्तिश्च द्विविधा प्रोक्ता प्रेमोऽपि द्विविधः परः ॥२१२ ॥

शुद्धभक्तिः प्रेममिश्रा ज्ञानमिश्रा तथा परा ।
शुद्धभक्तिः परा चैव माधुर्यरूपं लभ्यते ॥२१३ ॥

ज्ञानमिश्रे लभेन्मिश्रं देव्यैश्वर्यमिश्रितम् ।
स्वजनदासाभिमानं केचित् पितृसुतादिवत् ॥२१४ ॥

शुद्धज्ञाने लभेन्मुक्तिर्भक्तियोगेन पार्श्वदः ।
भक्तिमिश्रे प्रेमयोगे बाहुल्यभावो जायते ॥२१५ ॥

गणाधिपं धनाधिपं द्विविधं फलमश्नुते ।
भक्तिविज्ञानमिश्रेण सख्यादा विजयादिकम् ॥२१६ ॥

शुद्धप्रेमो महाकाले कालिकायाः सुनिश्चितम् ।
अंशकला विनाशेन शिवशिवादिभैरवान् ॥२१७ ॥

नित्यसिद्धो बहुविधः क्रियासिद्धस्तथापरः ।
भाविना भावभेदेन त्रिविधः साधनादिकः ॥२१८ ॥

ब्रह्मलीनं प्रेममनो जीवः क्रियाप्रेमात्मकः ।
पुष्पवन्तः प्रपञ्चानामानन्दो प्रेममूलकः ॥२१९ ॥

लीना क्रिया सुखानन्दो यथा आत्मनि जायते ।
आत्मसुखं स्वभावश्च एकात्मा ज्ञानसुखदः ॥२२० ॥

अनात्मबाह्य आत्माया अनात्मा अन्तरात्मनः ।
अज्ञाने आत्मज्ञानञ्च शुद्धसत्त्वपरात्मनः ॥२२१ ॥

आत्मसुखं स्वरूपञ्च सुखम् आनन्दवाचकम् ।
आनन्दो ब्रह्मणो रूपं नित्यानन्दविभेदतः ॥२२२ ॥

आनन्दो चिद्घने स्थितो नित्यरूपे प्रतिष्ठितः ।
मिश्रशिवो असज्जीवे आनन्दो दुःखदायकः ॥२२३ ॥

पूर्णवद् अंशिकलानाम् अणुपरमाण्वादिकम् ।
प्रेमघनः स्वभावश्च निष्पन्नः प्रेमपरस्परः ॥२२४ ॥

ज्ञाने ध्याने परानन्दो ज्ञानहीने विडम्बना ।
आत्मज्ञानं परं तत्त्वं भावज्ञानं तदोत्तमम् ॥२२५ ॥

आत्मज्ञानं प्रवर्तञ्च सम्बन्धभाव उन्मुखम् ।
भावाभावे साधनञ्च श्रद्धाभक्तिसमन्वितम् ॥२२६ ॥

अनन्यचेतना सेवा अभिधेयादिकल्पना।
मन्दत्यागो ह्यनुराग इष्टे आत्मसमर्पणम् ॥२२७॥

महाभावे महासिद्धिः लक्ष्यमैक्यप्रयोजनम्।
एकात्मा रसो रसज्ञो द्वित्व एकत्वभावना ॥२२८॥

पूर्णज्ञानमनुमानं ज्ञानमात्रं न विद्यते।
ॐ तत्सद्वाचकं ब्रह्म सच्चिदानन्दस्वरूपकम् ॥२२९॥

निष्कलं शून्यमात्रं हि सकलं द्विविलासितम्।
न द्वित्वं सच्चिदानन्दमनुमेयम् अनुभवम् ॥२३०॥

द्वित्वभावे रसाधिक्यमेकात्मद्वित्वचिन्तनम्।
ऐक्यज्ञाने भवेदैक्यमैक्यधनप्रयोजनम् ॥२३१॥

शुष्कज्ञानी अभिमानी अनैक्य ऐक्यकल्पनम्।
द्वित्वं विना न एकत्वं न द्वित्वं द्वित्वकल्पना ॥२३२॥

स्वरूपमद्वित्वरूपं हि रसज्ञः सरसो जनः।
इक्षुदण्डो मिश्रखण्डो न द्वित्वं द्वित्वभावना ॥२३३॥

ज्वरनाशे रसाभासे तथा रसज्ञा रसना।
रस आनन्दरूपश्च रसज्ञे बोध आत्मना ॥२३४॥

अज्ञानं ब्रह्मविज्ञानं रसना इन्द्रियमना।
सुरसो विरसः कच्चिद् विरसः सुरसात्मकः ॥२३५॥

अज्ञानं सङ्गमूलेन न दोषो रसरसना।
सर्वमूलमैक्यमन ऐक्यं हि सत्त्वमूलकम् ॥२३६॥

सुविचारो विवेकेन ब्रह्मानन्दप्रबोधनात्।
अभिधेयं प्रेमधनं प्रेमघनं प्रयोजनम् ॥२३७॥

प्रयोजनं ब्रह्मानन्दो ह्यच्युतानन्दकारणम्।
सम्बन्धः परमानन्दः सुभक्तेषु प्रेमी यथा ॥२३८॥

यथा स्थूलस्तथा सूक्ष्मस्तथा चिदात्मकस्तनुः ।
अभिधेयं तत्त्वं ज्ञात्वा विज्ञानवान् भवेत् ॥२३९ ॥

अतिसुमधुरं प्रेम भाविना भावगोचरम् ।
अभावे न हि संवेत्ति विना भावपरायणम् ॥२४० ॥

सकलं परमं ब्रह्म सर्वमोहनमोहिनी ।
तदंशविद्यायोगेन शिवादिदेवतागणाः ॥२४१ ॥

अविद्याजनितः सर्वो जीवजन्तुचराचरः ।
सदाकारो नराकारः स्थूलसूक्ष्मचिदात्मकः ॥२४२ ॥

इच्छारूपं भवेदीशो देवता बहुरूपिणः ।
महाकालो महाकाली माधुर्यमानवाकृतिः ॥२४३ ॥

अद्वैतो ह्यच्युतः पूर्णस्तदंशकलाव्यापितः ।
स्थूलो मोहनः प्रत्यक्षः सूक्ष्मो वीर्यरसात्मकः ॥२४४ ॥

पुष्पवन्तो भगवन्तश्चन्द्रः सूर्यो महाज्योतिः ।
रसज्ञो रसरूपा च नायको नायिका यथा ॥२४५ ॥

उभय उभयरूपं सूक्ष्मचित्ते अभिन्नता ।
स्थूलो भिन्नोऽनुमानम् आधाराधेयरूपता ॥२४६ ॥

ब्रह्म आधाररूपं हि आधेयः परमात्मनः ।
जलाधारो यथा पृथ्वी पृथ्व्याधारो जलं यथा ॥२४७ ॥

शेषाधारः शून्याकारोऽनलाकर्षणे स्थितः ।
सञ्चरणं वायुयोगे वायुः शून्यालये गतः ॥२४८ ॥

स्थूलशून्यो महाकाशो मनो माया च सूक्ष्मकः ।
चिच्छून्यः परमं ब्रह्म अङ्गसाङ्गे प्रबोधनम् ॥२४९ ॥

महाकाशो घटाकाश आकाशप्रतिबिम्बकः ।
जाग्रत् स्वप्नो यथा सुप्तिः सृष्टिस्थितिलयात्मकः ॥२५० ॥

एतन्मायामयं व्याप्तं चिच्छून्यं त्रिविधात्मकम् ।
आनन्दो ब्रह्मणो रूपं स्थूलो दृष्टान्तवाचकः ॥२५१ ॥

अनुभवः सूक्ष्मज्ञानं तमश्शक्तिविलोपकः ।
जाग्रत् स्थूलरूपं हि स्वप्नः सूक्ष्मानुभावकः ॥२५२ ॥

सुषुप्तिः प्रलयशक्तिः तमोभूतनिरञ्जनः ।
आसीदिदं तमोभूतमप्रज्ञातमगोचरम् ॥२५३ ॥

ज्ञानं ज्ञेयो भवेल्लुप्तः सुप्तो ज्ञाता प्रकाशकः ।
स्वप्रकाशः परं ब्रह्म सर्वकारणकारणम् ॥२५४ ॥

चैतन्यं परमात्मानं शक्तियुतं समण्डलम् ।
भगवती पतिरती अर्द्धाङ्गो लिङ्गभूषणम् ॥२५५ ॥

एकात्मवादिनां वादो विवादो वादभूषणम् ।
विदेहो मुक्तिफलञ्च जीवन्मुक्तः स्वतन्त्रकः ॥२५६ ॥

आत्मविद्या शिवतत्त्वं प्रवर्तो भिन्नभावनम् ।
आत्मा ज्ञाता शिवो ज्ञेयो विद्याज्ञाने उपासना ॥२५७ ॥

चिद्ब्रह्म आत्मचिदंशश्चिच्छक्ती विद्यारूपिणी ।
लक्ष ऐक्यो महामोक्षः प्रेम ऐक्यप्रयोजनम् ॥२५८ ॥

यथा घृतं त्रिविधञ्च काठिन्यो मिश्रस्वच्छता ।
यथा स्थूलः सूक्ष्मज्योतिश्चिदात्मा सर्वव्यापितः ॥२५९ ॥

शक्तियोगे महारुद्रः शक्तिहीने शवो मतः ।
शक्तियोगे सृष्टिकर्ता शक्तियोगे चराचरः ॥२६० ॥

चिच्छक्ती पूर्णकला सकलः परमेश्वरे ।
मायाशक्तिं समाश्रित्य ब्रह्मविष्णुमहेश्वराः ॥२६१ ॥

गुणवती सत्यवती असती रजतामसा ।
प्रकृतिर्विकृतिः शक्तिः शक्तिज्ञानसुखयुता ॥२६२ ॥

प्रकृतिः पुरुषो ब्रह्म शक्तिसूक्ष्मे निरञ्जनम् ।
स्वप्रकाशा यदा शक्तिः स्वप्रकाशः परेश्वरः ॥२६३ ॥

चतुष्षष्टिकलापूर्णस्तथा सकल ईश्वरः ।
सकले विविधा शक्तिस्त्रिविधानन्दवाचकः ॥२६४.॥

सन्धिनी ह्लादिनी संवित् तुर्यैका ब्रह्मसंशयः ।
ह्लादतापकरी मिश्रा न कदापि परेश्वरः ॥२६५ ॥

चिच्छक्तिसच्चिदानन्दब्रह्मरूपा सनातनी ।
सर्वव्यापी न सन्तापी न भिन्नो ह्यद्वितीयकः ॥२६६ ॥

शक्तिः शक्तिवन्तः कान्तो ह्यभिन्नः सुविचारतः ।
तथा चित् चित्कला शक्तिरेकत्वं निर्गुणात्मनः ॥२६७ ॥

स्वप्रकाशो यथा भानुः प्रकाशज्योतिरव्ययः ॥२६८ ॥

अन्धधन्दमन्दज्ञाने उदयास्तादिः कल्पितः ।
कृशानुर्भानुरभिन्नो वह्निरनन्तवाचकः ॥२६९ ॥

द्वित्वज्ञानं ज्ञानहीने ज्ञानिज्ञानस्वरूपकः ।
चिच्छक्तिर्न भवेत् सूक्ष्मा स्वप्रकाशश्चिदात्मनः ॥२७० ॥

शुद्धसत्त्वा भगवत्या नित्या चिद्घन आत्मनः ।
चिद्ब्रह्म सर्वव्यापी च चैतन्यं सती आत्मनः ॥२७१ ॥

चिद्घनं सकलं ब्रह्म शक्तिकारणकारणम् ।
सवितृमण्डलशक्तिर्मध्यशून्ये सदाशिवः ॥२७२ ॥

प्रकाश आकाशो व्याप्यश्चिच्छक्तिरन्तरात्मनः ।
आनन्दो ब्रह्मणो रूपं चिद्घनो हि प्रवाचकः ॥२७३ ॥

आनन्दजननी स्थूला सूक्ष्माऽनङ्गस्वच्छता ।
प्रत्यक्षोऽच्युतो नित्यो न नित्यो वागाडम्बरः ॥२७४ ॥

सकलाङ्गोऽन्तरङ्गोऽनङ्गोऽङ्गरूपिणम् ।
बहिरङ्गा महामाया प्रकाशशक्तिसम्भूता ॥२७५ ॥

प्रकाशो विनाशशक्तिरीश्वरी त्रिगुणात्मनी ।
आकर्षणं विक्षेपणं दहनं सचलाचलम् ॥२७६ ॥

विक्षेपणं तमहन्ता क्रिया सृष्टिप्रकाशिका ।
कर्षणं बीजं बीजेन पालनमिच्छारूपिणम् ॥२७७ ॥

दहनं दहनकार्यं ज्ञानरूपा महेश्वरी ।
त्रिगुणे जायन्ते प्राणायामा सर्वेन्द्रियाणि च ॥२७८ ॥

खं वायुर्ज्योतीरूपं च पृथिवी खण्डधारिणी ।
प्रकृतिः पुरुषः शिवो विकृतिर्जीवव्यापिता ॥२७९ ॥

चित्कला अंशसम्भूता प्रकृतिर्द्विविधा स्मृता ।
सूक्ष्मनीरं जलं वीर्यं स्थूलो विराट्पादपः ॥२८० ॥

महत्तत्त्वगतो वा स्यात् शाखावल्लिरूपान्तरम् ।
गुणशक्तिर्विविधा च सुकृतिविकृतिमयी ॥२८१ ॥

एकाकृतिस्त्रिधा भाति बालिका युवती जया ।
कामधामोऽविश्राम आत्मारामस्तथोदितः ॥२८२ ॥

बालिकायाः सूक्ष्मकामः प्रकाशकामः कामिनी ।
जराव्याप्तः कामलुप्तः स्वभावभावभाविनी ॥२८३ ॥

महत्तत्त्वं त्रिधा सत्यं ज्ञानेच्छाक्रियात्मकम् ।
प्रकाशविनाशनाशतत्त्वरूपा महेश्वरी ॥२८४ ॥

सृष्टिनाशे भवेत् सूक्ष्मः शक्तिः प्रकृतिवाचिनी ।
तदा तमोभूतसर्वमप्रज्ञातमलक्षणम् ॥२८५ ॥

निराकारोऽन्धकारः सूक्ष्मशक्तिः स्वभावतः ।
जाग्रत्स्वप्नसुषुप्तिवद् जीवभावः प्रकाशितः ॥२८६ ॥

अनवस्करश्चिदाकारो ज्ञानपक्षप्रदर्शितः ।
तुर्यावस्था चतुर्थी च पञ्चमी प्रेममिलिता ॥२८७ ॥

समष्टिव्यष्टिरूपेण महत्तत्त्वं द्विधा मतम् ।
सत्त्वे विद्या रजस्तमे अविद्या परिकीर्तिता ॥२८८ ॥

विद्यायोगे शिवादीनां सृष्टिस्थितिलयात्मकः ।
सत्त्वाधिक्ये भवेद्देवो रजाधिक्ये नरादिकः ॥२८९ ॥

तमाधिक्ये उद्भिजादिर्मिश्रे जीवोऽनेकधा ।
सत्सङ्गे जायते श्रद्धा विद्ययाऽमृतमश्नुते ॥२९० ॥

अमृतचिद्रसशक्तिश्चिद्घनः कालिका परा ।
सुधानन्दो मिश्रखण्डो ह्यखण्डो मण्डलान्तरा ॥२९१ ॥

महाविद्याक्रमे आद्या स्थूलसूक्ष्मचिदात्मिका ।
महाकालो विद्यावन्तः श्रीकान्तादिसमन्वितः ॥२९२ ॥

चिच्छक्तिः प्रकृतिर्नारी हरगौरीप्रवाचकः ।
निष्कलो ब्रह्मस्वरूपं हरादिरूपकल्पनम् ॥२९३ ॥

असारज्ञानात्मज्ञवचनं परिभाषणम् ।
निराकार एकाकारः सुवर्णाकारशब्दितः ॥२९४ ॥

चिच्छब्दवाचकं ब्रह्म सचैतन्यं परात्मनः ।
चिद्घनः सकलं ब्रह्म एकात्मा चणकाकृतिः ॥२९५ ॥

स्त्रीरूपं कालिकारूपं पुंरूपं परमेश्वरः ।
सुवर्णमेकरूपं हि द्विरूपं मूर्तिकल्पना ॥२९६ ॥

शक्तियुक्ते भवेच्छिवः शक्तिहीने शवो मतः ।
निष्कलः शक्तिहीनो हि तमोरूपे समावृतः ॥२९७ ॥

व्यक्तो वह्निर्यदा लुप्तः अन्धकारसमन्वितः ।
तमो मतः काष्ठगतो न वह्निः काष्ठदर्शितः ॥२९८ ॥

चिद्घनः सकलं ब्रह्म चैतन्यं शक्तिसंयुतम् ।
स्त्रीरूपं पुरुषाकारे सच्चिद्धामे सदा स्थितम् ॥२९९ ॥

मायाधामे महेश्वरो महामाया सह युतः ।
सत्यधामे तत्त्वं महद् ब्रह्मविष्णुशिवात्मकम् ॥३०० ॥

सुकृतिर्विकृतिः शक्तिर्विकृतिर्विकृतिर्मनः ।
पञ्चभूतं सत्त्वांशेन त्रिगुणो मनकल्पितः ॥३०१ ॥

सत्त्वरूपा इच्छाशक्ती रजः प्राणक्रियात्मकः ।
तमांशे ज्ञानशक्तिश्च ज्ञानाज्ञानमिश्रिता ॥३०२ ॥

प्रकृतिः पुरुषः प्राज्ञः सर्वज्ञो विश्व ईश्वरः ।
वैश्वानरस्तैजसञ्च प्रकृतिपुरुषगतः ॥३०३ ॥

दिवाधारो मायाकारो ब्रह्मशक्तिरनन्तकः ।
आधेयः पुरुषः सर्वश्चैतन्यशक्तियोगतः ॥३०४ ॥

आधारः प्रकृतिशक्तिर्बृहद्ब्रह्मप्रतिष्ठितः ।
इन्द्रियविषया देवाः कुण्डली सती चालिताः ॥३०५ ॥

स्वप्ने ज्ञानं यथा लभ्यं दीर्घस्वप्नोऽनिद्रितः ।
प्राणे लुप्तः सुप्तकाले मरणे कारणे गतः ॥३०६ ॥

तस्मिन् सूक्ष्मरूपा शक्तिः स्थूलरूपा चराचरे ।
पिण्डब्रह्माण्डसंव्याप्या व्यक्ताव्यक्ता कुलाकुले ॥३०७ ॥

तुर्यधामे आत्मारामः पञ्चमपुरुषार्थदः ।
पुरस्वरः पुरहरो जीवपुरोऽनेकधा ॥३०८ ॥

त्रिपुरा प्रथमगम्या विराडा त्रिपुरेश्वरी ।
जीवपुरे गुणमयी स्थूलसूक्ष्मचिदात्मनि ॥३०९ ॥

क्वचिद् व्यक्ता क्वचिद् गुप्ता स्वरूपं वरुणपुरे ।
भूरूपं वह्निसंव्याप्तं कामकलाकलान्तरे ॥३१० ॥

कामः सामः कुलाकुलः पुररूपेण उदितः ।
कलाधाम आत्मधाम कामसाम प्रकाशितः ॥३११ ॥

स्वरूपमेकरूपं हि महाशक्तिस्वरूपिणी ।
ईकाररूपिणी वह्निः कामिनी कामदायिनी ॥३१२ ॥

खचरः परमहंसः कामरूपः परशिवः ।
हकारः शून्यवाक्यार्थः कन्दर्पदर्पः अनिलः ॥३१३ ॥

रकारः कामिनी साक्षाद् भूरग्निजलमिश्रितः ।
अनिला लीनाः सर्वत्र दश द्वादश अङ्गुलः ॥३१४ ॥

द्विदले दलं बलं च षड्चक्रे बलं निष्कलम् ।
पश्चिमाभिमुखं लिङ्गं वृषशून्यं पुरातनम् ॥३१५ ॥

कुण्डलीकुलमाख्यातं कामकलाप्रतिष्ठितम् ।
वृषारूढो महाचण्डोऽस्थिमालाविभूषितः ॥३१६ ॥

नागिनी रागिणी नित्यं मुखचुम्बनतत्परा ।
शवासना सवासनामूर्ध्वे शम्भुनिपातनम् ॥३१७ ॥

जीवनं जीवनदाने पुनः शम्भुः सचेतनः ।
पञ्चाननः पञ्चकालः कला षडाननसमा ॥३१८ ॥

ऐक्यमर्थः पुरुषार्थः कामकलास्वरूपतः ।
पूर्वास्यः शास्ता कुलं च याम्यः पुंरूपशब्दितः ॥३१९ ॥

पश्चिमः सुखमुखं च स्थूलकुलपुरोः स्थितः ।
उत्तमत्युरमुखं शरामुखं निष्कलम् ॥३२० ॥

ऊर्ध्व उग्रः सदा व्यग्रः षडाननासनादिकः ।
चित्कलास्थो महाकालो विद्यायोगे शिवादयः ॥३२१ ॥

गुणयोगे भवेज्जीवो जन्तुरूपे प्रतिष्ठितः ।
कमलं विमलं शून्यं सकलं कमलं खगः ॥३२२ ॥

सूर्यवत् पूर्णमानेऽपि सुकमलः प्रकाशकः ।
सुधावृष्टिस्तदा सृष्टिः पूर्णचन्द्रस्थितामरः ॥३२३ ॥
शोषयेत् सविता सर्वं यदि सूर्यो न शुष्यति ॥३२४ ॥
अमलं गोलोकं विद्धि नारायणपरं जनम् ।
रमणे रमणशक्ती रमणी शक्तिरमणी ॥३२५ ॥
भूतशक्तिर्गुणशक्तिर्माया चित् सती तारिणी ।
शक्तिः स्त्रीवाचकः शब्दस्त्रिगुणः पुंस्वरार्थदः ॥३२६ ॥
सदसन्निराकारो भूताकारः स्वतन्त्रकः ।
स्त्रीपुंसाकृतिर्भिन्नः प्रकृतिगुणमिलितः ॥३२७ ॥
पञ्चचरः शिवपरः खचरो दैवतो महान् ।
वायुचरो देवचरो नानारूपः स्वतन्त्रकः ॥३२८ ॥
अग्निचरा बहुतरा देवता द्योतिरूपिणः ।
भूचरा जरायुजा जीवा डिम्बजाधिकनीरगाः ॥३२९ ॥
अहङ्कारस्त्रिधा पुंसः सत्त्वगुणे प्रतिष्ठितः ।
ईश्वरः करणं सत्त्वं रजतमगुणयुतः ॥३३० ॥
ब्रह्माणी कुरुते सृष्टिर्न च ब्रह्मा कदाचन ।
अत एव महादेवो महाप्रेतो न संशयः ॥३३१ ॥
वैष्णवी पालनकर्त्री न च विष्णुः कदाचन ।
अत एव महाविष्णुः प्रेतरूपो न संशयः ॥३३२ ॥
रुद्राणी हरते सर्वं न च रुद्रः कदाचन ।
अत एव महारुद्रो महाप्रेतो न संशयः ॥३३३ ॥
ॐ तत्सद्वाचकं ब्रह्म ॐकारो गुणवाचकः ।
तच्छब्दः परमा शक्तिः सच्छब्दः परमात्मनः ॥३३४ ॥

योनिजः पञ्चभूतश्च निर्गुणे दोषवर्जितः ।
निर्गुणो द्विविधो वाच्यः सुविद्या सुजनो यथा ॥३३५ ॥

शुद्धसत्त्वगुणे विद्या रजस्तमे दोषान्वितः ।
गङ्गादिसलिलं शुद्धं स्नानपाने पवित्रता ॥३३६ ॥

दोषमिलितो निन्दितः स्पर्शने जलवर्ज्जितः ।
शुचिः शुचियोगे मुद्रा उच्छिष्टजलयोगतः ॥३३७ ॥

कमले कमलं जातं विमलं जलं कमले ।
नीरं क्षीरं कमलजं कमलं कमलान्तरे ॥३३८ ॥

कमलविमलभानुः निर्मलतनुश्चन्द्रमाः ।
पञ्चकामः पञ्चधाम कीलज्ञाने प्रकाशितः ॥३३९ ॥

धारिणी गामिनी वर्षाप्रवाहः सवितृत्रयः ।
दीपनाकर्षणदीप्तेर्यथाकारो दिवाकरः ॥३४० ॥

चलनी चालनी वायू रसनिर्नागिनी सदा ।
अवकाशो महाकाशः पिण्डब्रह्माण्डान्तरे ॥३४१ ॥

भूतानां पञ्च प्रपञ्चतत्त्वगुणसमन्वितः ।
मादनादि पञ्च पञ्च शक्त्यादिर्मातृकान्तरे ॥३४२ ॥

चिच्छक्तिः सर्वमूलञ्च त्रिदेहदेहमाश्रितः ।
स्त्रीपुंदेहो जङ्गमादि नपुंसकबीजादयः ॥३४३ ॥

प्रायो भ्रान्तः क्वचित् शान्तः शक्तिवन्तो महेश्वरः ।
अज्ञानं भेदमूलं हि अभेदो ज्ञानगोचरः ॥३४४ ॥

ब्रह्मशक्तिर्विष्णुशक्तिः शिवशक्तिर्दिगेश्वरः ।
सर्वः किञ्चित् क्वचिद् वस्तु सदसदात्मनात्मने ॥३४५ ॥

सर्वशक्तिमयं पश्येद् नित्यं व्याप्यं चराचरे ।
अनादिसृष्टिरूपेण विषयदेवताद्वयम् ॥३४६ ॥

जीवो नित्यः सत्यभृत्यः स्वामित्वग्रस्त ईश्वरः ।
सत्यवस्तु ब्रह्मचैतन्यावस्था गुणजातयः ॥३४७ ॥

त्रिगुणमिश्रितः सर्वो यतो जातस्ततो लयः ।
स्त्रीपुंरूपे न भेदोऽस्ति चिदात्मा परमात्मनि ॥३४८ ॥

पुरुषः पुरुषवाच्यः स्थूले भेदः कथञ्चन ।
लिङ्गकारणकोषादिगुणभेदो न चेत् कदा ॥३४९ ॥

महाज्योतिर्मयो भानुस्तरुणारुणतनुः ।
करुणः करुणाम्बुधिः लावण्यमधुरनदी ॥३५० ॥

त्रिधारा त्रिवेणीधारा स्थूलसूक्ष्मपथि गतः ।
सूक्ष्मपन्था महारथः सुषुम्नामार्गसंस्थितः ॥३५१ ॥

यदि शक्तिरूर्ध्वगतिस्तदा सुप्रेमफलम् ।
अधोवर्त्म काममत्तं सृष्टिस्थितिलयात्मकम् ॥३५२ ॥

एवम्भूतो निशानाथो द्विदलपद्म उज्ज्वलः ।
चिच्चन्द्रो हृदयाकाशे प्रकाशमुखमण्डलः ॥३५३ ॥

अकलङ्कश्चन्द्रमुखः कलङ्कशून्यमण्डले ।
पूर्णचन्द्रः शतशतं हस्तपदनखान्तरे ॥३५४ ॥

लण्डे मुण्डे चतुर्थञ्च शिरे अर्धविभूषितम् ।
क्षणे ह्रासः क्षणे नाशः क्षणे पूर्णो गृहान्तरे ॥३५५ ॥

महाकालः कृष्णचन्द्रः कोटिचन्द्रसमप्रभः ।
सूर्यप्रकाशकश्चन्द्रः कमलं कमलालये ॥३५६ ॥

विमलकमल आस्यं हृदये कमलद्वये ।
कमलं कर आकीर्णं कमलचरणभरे ॥३५७ ॥

सवितुर्वरणीयञ्च चित्सूर्यो हृदये स्थितः ।
नाभिमूले कुलाकुले त्रिपुरे तेजविस्तृते ॥३५८ ॥

चिच्छक्तिः कालिका सूर्या पद्मनि हुँ सवासना।
जीवस्थो जलजस्थश्च परिशिवो वृषासने ॥३५९ ॥

एतत्प्रयोजनं तत्त्वं तत्त्वज्ञानेन लभ्यते।
कुलतत्त्वं लयतत्त्वं विज्ञानं ज्ञानगोचरे ॥३६० ॥

पाशबद्धो भवेज्जीवः पाशमुक्तः सदाशिवः।
पाशबद्धा तथा नारी गौरी पाशविमुक्तिदा ॥३६१ ॥

श्रीभगवान् शिव उवाच—

एकमेवाद्वितीयञ्च ब्रह्म शास्त्रेषु निश्चितम्।
अनन्तब्रह्मवाच्येन पञ्चदीक्षा प्रकाशिता ॥३६२ ॥

पञ्चतनी परं दीक्षा शक्तिवैष्णवविस्तराः।
गाणपत्यश्चतुर्विधः सौरो द्वादशवाचकः ॥३६३ ॥

शैवादिर्बहुधा प्रोक्तः शाक्तसंख्या यथोदिता।
शतकोटिमहाविद्या उपविद्या च तादृशी ॥३६४ ॥

सर्वा भैरवसंयुक्ता विष्ण्वादिशक्तियोगतः।
कथमेकत्वमापन्नमपरं श्रृणु अम्बिकाम् ॥३६५ ॥

महाविद्या आद्यादीन् शिवादिहृदये स्थिताः।
पद्मासना सिंहासना प्रेतासनादिका भृशम् ॥३६६ ॥

आद्यरामा महाकाले सदासने योगान्विता।
एतत् संशयं हृदये छित्वा कुरु पवित्रता ॥३६७ ॥

श्रीभगवती देव्युवाच—

एकमेवाद्वितीयञ्च ब्रह्म निष्कलं सकलम्।
पुंस्त्रीरूपं सकलञ्च एकमेवाद्वितीयकम् ॥३६८ ॥

एकरूपो महाकालः पुरुषो नास्ति तादृशः।
तथैव योषिता काली कामरूपा महोज्ज्वला ॥३६९ ॥

यथा राज्ञ एकप्राज्ञ आत्मत्वं राजवाचकम् ।
अनात्मत्वं भवेद् वाचा राजा राजगुणान्वितः ॥३७० ॥

गणावरणेन सह देवता एकपूजिता ।
त्रिधा ध्यानं महाज्ञानं स्थूलसूक्ष्मचिदात्मकम् ॥३७१ ॥

प्रथमे केवलं स्थूलं वैदिकं पशुकल्पितम् ।
स्थूलसूक्ष्मचिदंशेन वीराणां भावो निश्चितः ॥३७२ ॥

विद्यभावः श्रेष्ठलाभः द्वित्व एकत्वमिलितः ।
स्थूलरूपं स्त्रीस्वरूपं पुंरूपं वा समन्वितम् ॥३७३ ॥

सूक्ष्मरूपं न भेदो हि एकात्मा सर्वव्यापितः ।
चिदात्मा चैत्यरूपेण कुलाकुलसमास्थितः ॥३७४ ॥

कुलाकुलं सर्वमूलं स्थूल एकात्मवाचकः ।
द्वित्वेऽपि द्वितीयो नास्ति चैतन्यं ब्रह्मरूपकम् ॥३७५ ॥

स्थूलं ब्रह्म बृहद्वाच्यं विराड्वै ईशसंज्ञकः ।
शुक्रं ब्रह्मबीजादीनां वेदादिशास्त्रनिश्चितम् ॥३७६ ॥

अन्यवर्त्म न चेद् वर्त्म ब्रह्मा वर्त्मप्रकाशितम् ।
कुलाधारः सत्यसारोऽन्याधारो विवर्जितः ॥३७७ ॥

पुष्पवन्ताद्योपान्तो ज्योतिर्दिवा निशाकरः ।
सुविचार्यं किमाश्चर्यं ब्रह्म खल्विदं निश्चितम् ॥३७८ ॥

तन्त्रं मन्त्रो यः स्वतन्त्रो यथाभावभावान्तरम् ।
एकमुखं द्विभावेन पित्रा भर्त्रा प्रचुम्बितः ॥३७९ ॥

सुतः पिता पिता सुतो भर्ता एकस्य वाचकः ।
संकेतज्ञस्तन्त्रवेत्ता न वेत्ता धातुरादिनः ॥३८० ॥

धातुवादविवादादि शठधूर्तविवर्णितः ।
आसनासनबन्धो निगमे सुप्रकाशितः ॥३८१ ॥

अमलं कमलं पद्मं कमलञ्च कुलाकुलम् ।
मातङ्गाङ्गोन्मत्तो मातङ्गी सङ्गमानसे ॥३८२ ॥

सिंहाकारा रागपरा कुलमातङ्गघातिका ।
सिंहासना तदाख्यानमद्रिजा सिंहवाहिनी ॥३८३ ॥

विलोमार्थेऽपि यथार्थः कुलसाधकसम्मतः ।
विपरीतमहाप्रेतहृदये चरणद्वयम् ॥३८४ ॥

कुलेशी काली कुलञ्च अकुलः कालभैरवः ।
कृष्णचन्द्रो भवेत् कालश्चिरकालयोगान्वितः ॥३८५ ॥

भानुकन्या भवेद् धन्या सहजानन्दनन्दिता ।
वृन्दावनं परित्यज्य पादमेकं न गच्छति ॥३८६ ॥

वृन्दावनं सहस्रारो ब्रह्मद्वारो द्विरस्रकः ।
द्विरस्रो नादरूपञ्च एकबिन्दुसमाहिता ॥३८७ ॥

इति वाक्य अक्षलक्षो नित्यवृन्दावनं पुरः ।
प्रत्यालीढा महाधीरा दक्षिणशिवव्यापिका ॥३८८ ॥

कुलदक्षोऽक्षपद्मे तारारूपा शवासना ।
महालीढा वामाधीरा नाभिनी रजवासिनी ॥३८९ ॥

पञ्चकामोऽविश्रामो बाला पञ्चशवासना ।
नादबिन्दुमध्ये इन्दुर्महानादो महोज्ज्वलः ॥३९० ॥

कामकला भानुबाला चित्कला परमेश्वरी ।
काली कुलादिकूलादिषट्चक्रमध्यव्यापिता ॥३९१ ॥

आलीढो दक्षिणे कालः कुलाकुलसमास्थितः ।
षाम्यो व्रामो भिन्नः सामो न भिन्न एकरूपता ॥३९२ ॥

यथा काली तथा तारा तथा त्रिपुरसुन्दरी ।
स्थूलसूक्ष्मचिदाकारे महाज्योतिप्रकाशिनी ॥३९३ ॥

चिदङ्गमच्युतानन्दोऽन्तरङ्गस्वरूपता ।
महाविद्या अन्तरङ्गा विद्या सर्वाङ्गवेष्टिता ॥३९४ ॥

देव्यङ्गे शिवो गुप्तश्च शिवाङ्गे सूक्ष्मकालिका ।
स्त्र्यङ्गेऽन्तरपुंसः पुमङ्गे योषिता कुला ॥३९५ ॥

व्यक्ता गुप्ताः स्वरूपेण शिवजीवादिजङ्गमाः ।
स्थूलाभ्यन्तरं व्याप्य चिच्छक्तिर्मिश्रखण्डवत् ॥३९६ ॥

न चेद् भिन्नो मिष्टोऽन्यः परमेष्टफलप्रदः ।
अङ्गस्पर्शे ब्रह्मज्ञाने यथैकाङ्गपूजने ॥३९७ ॥

अवश्यं लभते सिद्धिं चतुर्वर्गफलप्रदाम् ।
पुष्पं बहुविधं सत्यं मधुमेकं न चान्यथा ॥३९८ ॥

एतद् गौणं भवेन्मोक्षो वृक्षमूले प्रसेचनम् ।
सर्वाङ्गे जायते तृप्तिः शाखावल्लिसमन्विते ॥३९९ ॥

॥ इति रहस्यषडाम्नायतन्त्रे निगमसन्दर्भे
तृतीयः पटलः ॥

## ॥अथ चतुर्थः पटलः ॥

श्रीभगवान् शिव उवाच—

यस्मिन् मन्त्रे यदाचारः प्रवर्तधर्म उच्यते ।
तदाचारः साधनञ्च प्रवर्तभावस्त्रिविधः ॥१ ॥
साधने भवति प्राप्तं सिद्धिसाधनमुत्तमम् ।
सिद्धे प्रवर्तभावादिर्भावपक्षे क्रियादिकः ॥
महाभावपरा सिद्धिः कीदृशी वद अम्बिके ॥२ ॥

श्रीभगवती देव्युवाच—

सर्वेभ्यश्चोत्तमो वेदो ब्रह्मचर्यसुसंयतः ।
विष्णुमते परा भक्तिर्ज्ञानक्रियासमन्विता ॥३ ॥
ज्ञानाधिक्ये भक्तिक्रिया न्यासादिर्बाह्य अन्तरे ।
शैवो दक्षिणः शाक्तश्च मन्त्रादिर्नीलसाधनम् ॥४ ॥
वेदतन्त्रोक्तमिश्रेण कामसङ्कल्पवर्जितम् ।
वामपथा यजेद् वामां स्वयं कामकलात्मना ॥५ ॥
भावपक्षे भवेत् सिद्धिस्त्रिविधं सिद्धिलक्षणम् ।
बीजं कीटः कीटो भृङ्गोऽहिवत् त्वचवर्जनम् ॥ ६ ॥
भावसिद्धो जीवन्मुक्तो भावदेहः स्वतन्त्रकः ।
भाववद्देहः प्रत्यक्षो नित्यसिद्धस्तदन्तरम् ॥ ७ ॥
सिद्धान्ते भाविनीभावः शिवादितत्त्वनिर्णयः ।
शब्दब्रह्म परंब्रह्म सिद्धान्तप्राज्ञलक्षणम् ॥ ८ ॥
महासिद्धिर्भवेत् कौले दिव्यरूपः शिवोत्तमः ।
कुलिनी कुलं कौलश्च प्रत्यक्षदेवसाधनम् ॥ ९ ॥
ब्रह्मचर्यं तपोमूलं पापघ्नं शुद्धचित्तवान् ।
पशुभावे चरेदादौ सर्वमङ्गलकारणम् ॥१० ॥

त्यागो भोगो मिश्राचारो ब्रह्मचर्यं द्विधा मतम् ।
व्यक्ताव्यक्तं द्विविधञ्च वामसिद्धान्तसंयुतम् ॥११ ॥

अवधूतो द्विधा प्रोक्तः सचेलश्च दिगम्बरः ।
हंसो न कुर्यात् स्त्रीसङ्गं विधियोनिविहारवान् ॥१२ ॥

गृहस्थश्च भवेत् कौलो द्वितीयस्थः सदाशिवः ।
विभावः पशुर्वीरश्च आदौ नीलं समाचरेत् ॥१३ ॥

महाबलो महावीर्यो महासाहसिकः शुचिः ।
दिवा चरेद् ब्रह्मचर्यं नित्यपर्यटनं निशि ॥१४ ॥

शय्यादिश्मशानान्तञ्च साधनं सिद्धिदायकम् ।
मन्त्रयोगो मुद्रायोगो मन्त्रचैतन्यकारणम् ॥१५ ॥

असिद्धश्चेतनाहीने भावः सुभावो दुर्लभः ।
भावभेदे श्मशानादि भावभेदे शवासनम् ॥१६ ॥

शय्यादिशवपर्यन्तं द्विविधं नीलसाधनम् ।
सचेलवर्त्म प्रवर्तं गुरुवर्त्म प्रदर्शकम् ॥१७ ॥

चीनो मिश्रो नीलश्रेष्ठो महाशङ्खादिसंयुतः ।
विधिवत् कारणे सिद्धिरसिद्धिर्विधिलङ्घने ॥१८ ॥

एकार्थवाचको भावो महाभावप्रदायकः ।
एतत्प्रयोगविशेष आनन्दो भैरवीकृता ॥१९ ॥

प्रथमे भूतशुद्ध्यादि पञ्चशुद्धिपुरस्कृतः ।
पशुस्तु त्रिविधः प्रोक्तः स्वभावो मन्दो वर्जितः ॥२० ॥

स्वभावो द्विविधः प्रोक्तः संयातनाविधानवित् ।
मन्दो निन्दको धूर्तश्च वर्जितः कौलघातकः ॥२१ ॥

आदिक्रम आगमदीक्षा सूर्यगणेशमाधवाः ।
शैवः शिवपरः शाक्तो विद्यादीक्षाक्रमागतः ॥२२ ॥

महाविद्या पराविद्या साधनं कौलसम्मतम् ।
नियमज्ञो महाप्राज्ञः सर्वज्ञः श्रीगुरुर्यदि ॥२३ ॥

भूतभविष्यज्ज्ञात्वा या विद्या पूर्वजन्मनि ।
सच्छिष्ये दापयेत् तूर्णं क्रमलङ्घनपूर्वकम् ॥२४ ॥

असामर्थ्ये महाविद्यां दत्त्वा यो लोभतत्परः ।
उभयः पतति श्वभ्रे यावच्चन्द्रदिवाकरौ ॥२५ ॥

कौलाचारे क्रमदीक्षा महासाम्राज्यदीक्षिता ।
ब्रह्मज्ञानं पूर्णध्यानं सर्वज्ञे प्राज्ञे दर्शितम् ॥२६ ॥

अर्द्धसार्धप्रवर्तेषु सर्वं ब्रह्मेति यो वदेत् ।
उभयोर्निरयं याति नास्ति निष्कृतिः कुत्रचित् ॥२७ ॥

वीरोऽपि त्रिविधः प्रोक्त उत्तमाधममध्यमाः ।
निर्विकल्पः सविकल्पः सकलध्यानवर्जितः ॥२८ ॥

अनित्यकर्मसंत्यागी नित्यकर्मपरायणः ।
व्याकुलः स कुलाचारे उत्तमं वीरलक्षणम् ॥२९ ॥

मध्यमः शास्त्रविश्वासः श्रद्धाभक्तिसमन्वितः ।
नित्यक्रिया ज्ञानध्यानं निष्कामी संयमी मतम् ॥३० ॥

स्वेच्छामतं विपरीतमनित्यकर्मनिन्दितम् ।
वर्जितोऽधमो वीरः कामना कामनागतः ॥३१ ॥

इन्द्रियार्थो धनार्थो वा यशार्थो विधिलङ्घनम् ।
प्रकाशः साधकवेशो मिथ्यावेशपरायणः ॥३२ ।

ततोऽधिको भवेन्मन्त्री मन्दकामपरायणः ।
वामाचारस्त्रिविधश्च प्रवर्तः सिद्धिसाधनम् ॥३३ ॥

वामाभावो महाभावस्तत्त्वमसीत्यभेदकः ।
वामा भूत्वा यजेद् वामां साधनं सिद्धिलक्षणम् ॥३४ ॥

विभावः कल्पितभावः क्रमे सिद्धिप्रदायकः ।
कल्पना दक्षिणाभावः शिवो भूत्वा यजेच्छिवाम् ।।३५ ।।

कल्पना लभते सिद्धिर्न तु सिद्धिव्यतिक्रमः ।
भावलाभो भवेत् सत्यः शिववत् कल्पनामयः ।।३६ ।।

कल्पभावो बहुविधो भैरवो वटुकादिकः ।
दिव्योऽथ मानवः सिद्ध एतद्भावपरायणः ।।३७ ।।

निर्विकल्पा महाविद्या आद्या श्रीः परमेश्वरी ।
न लभते शक्तिरूपे सती पतिपरायणा ।।३८ ।।

तदंशस्तत्कला विद्या इच्छाज्ञानक्रियात्मिका ।
माधुर्यैश्वर्यमिश्रा च सत्यकामफलप्रदा ।।३९ ।।

निर्विकल्पस्त्रिविधश्च सूक्ष्मज्योतिस्थूलात्मकः ।
सूक्ष्मब्रह्म अस्तिमात्रं नास्ति शेषमगोचरम् ।।४० ।।

सूक्ष्मसतीसमायोगे सर्वाधारं निरञ्जनम् ।
तटस्थं लक्षणे ऐक्यं कूटस्थः परमात्मनः ।।४१ ।।

ज्योतिरभ्यन्तरे ज्योतिश्चैतन्यशक्तियोगतः ।
महाकालो भूताकाशः पटाकाशः स्वतन्त्रकः ।।४२ ।।

भानुरणुः सुकृशानुर्विस्फुलिङ्गप्रवाचकः ।
चिद्घनः सकलब्रह्म स्थूलो दम्पतिशक्तितः ।।४३ ।।

सुप्रकाशो महाकाशे नित्यधामे मुदान्वितः ।
समभावो विराटादिरैश्वर्यशक्तिमिश्रितः ।।४४ ।।

सुकृशानुः पञ्चतनुर्विस्फुलिङ्गश्चराचरः ।
सङ्कल्पस्त्रिविधरूपो नित्यः सिद्धो गुणात्मकः ।।४५ ।।

विराट्वाचको नित्यः क्रियाभेदे गुणाश्रयः ।
क्रमे असंख्यसंज्ञा च संज्ञासङ्कल्पसिद्धकः ।।४६ ।।

महेश्वरी महासती क्रियादिसृष्टिमूलिका।
अष्टः स्पष्टो ब्रह्मण्यादिः क्रमे सती अनन्तकः ॥४७ ॥

सर्वाराध्या आद्या विद्या ऐश्वर्यगुणवर्जिता।
निर्गुणा सद्गुणा विद्या त्रिगुणा त्रिपुरा स्थिता ॥४८ ॥

सामकामा विश्रामशुद्धमाधुर्यलक्षिता।
चतुःषष्टिकलापूर्णा पूर्णोत्तमा प्रचोदिता ॥४९ ॥

काल्यादिसकलाः सर्वा माधुर्यभावसंस्थिताः।
तथैव भैरवादयो महाभैरवांशजाः ॥५० ॥

सामकामः सामधाम सामसाम्राज्यसेवितः।
चिद्घनः सकलब्रह्म माया तदंशव्यापिका ॥५१ ॥

तदंशे मनः सञ्जातं सदसद् मनःकल्पितम्।
शुद्धसत्त्वे लभेद् ज्ञानं भक्तिप्रेमसमन्वितम् ॥५२ ॥

रजःकामी स्वर्गकामी तमे निरयगामिणः।
स्वस्वपक्षे वामाचाराः परोक्षे विभावमनाः ॥५३ ॥

विपरीतक्रिया सर्वा अकुले कुलसाधना।
सहस्रारो द्विधाकारः कल्पलतागतं दलम् ॥५४ ॥

पञ्चाननः पञ्चवेदाः पञ्चपुष्पसमायुताः।
पञ्चमं फलपञ्चञ्च पञ्चमपुरुषार्थदः ॥५५ ॥

चतुर्वेदाश्चतुःशाखाश्चतुर्थमुक्तिदायकाः।
विलयप्रलयो मोक्षो ब्रह्म सकलं निष्कलम् ॥५६ ॥

विलयो वेदमार्गिणां प्रलयो निगमपथाम्।
निष्कले प्रलयो याति प्रलयः क्रियाभाविनाम् ॥५७ ॥

सकलाः सकलाः सर्वे महाप्रलयरूपिणः।
शुक्रपद्मे वसेत् कालः कालिका गुणरूपिणः ॥५८ ॥

अधःपद्मे महाकालः कालिका कालभाविनी ।
द्विदलो हि द्विधा कूलमासनं वृषभासनम् ॥५९ ॥

द्विदलं सकलाकुलमूर्ध्वबिन्दुर्निरञ्जनम् ।
षोडशारे स्वरपुरे कुलाकुलं द्विधा मतम् ॥६० ॥

द्वादशाब्दे कालः पूज्यः प्राणे ध्याने स्वतन्त्रके ।
अपाने वर्तते प्राणः समानो नाभिमण्डले ॥६१ ॥

दशदले महाबलः कन्दर्पलाञ्छितः सदा ।
षडाननः पञ्चाननः विंशतिदलव्यापितः ॥६२ ॥

व्रजेश्वरी अष्टनारी अष्टदले मुदान्वितः ।
षोडशकला पूर्णबाला पञ्चदशकलावृतः ॥६३ ॥

अष्टनागा अनुरागा महाविष्णुपुरे स्थिताः ।
मूलपद्मः क्रमे साध्यः शुक्रे रक्ते मणिपुरे ॥६४ ॥

पाटलः पीतवर्णश्च जलस्थलसमायुतः ।
जले विष्णुः स्थले विष्णुर्भानुमण्डलव्यापितः ॥६५ ॥

कालग्रासे कूलनाशे कालग्रासे निपातितः ।
स्थूलक्षयो जलमयश्चन्द्रमण्डलव्यापितः ॥६६ ॥

सूर्यग्रासे जलनाशे हुताशे चन्द्रपतितः ।
तरुणः अरुणो भानुर्वायुवेगे गतागतः ॥६७ ॥

वायुदर्पो भवेत् खर्वः प्रलये दिवि संगतः ।
बाह्यनाशे मनोदेशे स्वप्नवत् सर्वमाप्लुतम् ॥६८ ॥

मनोद्भवः पराभवः क्रमे शिवपुरे गतः ।
जलहीनो यथा मीनो निष्कलः कलावर्जितः ॥६९ ॥

सकला सकलो घनो घनाघनं कुलाकुलम् ।
चन्द्रामृतवत् पूतो यदि सूर्यो न शुष्यति ॥ ७० ॥

पापक्षयं पूतमयं भावदेहं प्रलभ्यते ।
सूर्यतीर्थः सुपवित्रः अपवित्रं प्रणश्यति ॥७१ ॥

शुचेरादिः आधिव्याध्यादित्रितापनाशकः ।
जलरूपे भवेत्तीर्थं स्थूलरूपे कुलाकुलम् ॥७२ ॥.

चिद्रूपा सकला ब्रह्मकालिका कालरूपिणी ।
सहस्रारे स्थितो देवो देवी हृदम्बुजे स्थिता ॥७३ ॥

मायाशक्तिर्वसेन्नाभौ गुणशक्तिर्मूलाम्बुजे ।
चिद्ब्रह्म परमा आद्या द्वितीया परमात्मनि ॥७४ ॥

भगवती महासती सुन्दरी शिवमोहिनी ।
नाक्षत्री चन्द्रमाकाशे महाशून्यसमावृता ॥७५ ॥

हृदये सुन्दरी भानुः सर्वतनुप्रकाशिनी ।
श्मशानानलमध्यस्था कालिका चित्कलात्मनि ॥७६ ॥

चिदाकारे सूक्ष्मद्वारे साधनं निष्कलात्मनः ।
सविकल्पनिर्विकल्पसाधनं वेदवर्जितम् ॥७७ ॥

कुलाकुलं शिलापुष्पे ब्रह्मणो रूपं कल्पितम् ।
त्रिविधार्थो भवेत् सत्यो विभावज्ञानवादिनाम् ॥७८ ॥

मूर्तिहीनं सुवर्णं हि ब्रह्मणः परमात्मनः ।
मनःकल्पितव्याजेन स्वरूपो गुरुवर्त्मना ॥७९ ॥

निराकारं परं ब्रह्म निराकारः परात्मनः ।
अनुभव्येऽननुभव्यो ज्ञानिनां हठयोगिनाम् ॥८० ॥

कौलानां मुद्रायोगो हि ज्ञानयोगसमन्वितः ।
न शुष्कः सरसयोगो भक्तिप्रेमसमन्वितः ॥८१ ॥

निर्विकल्पः शुष्कज्ञानी निर्वाणपदवाचकः ।
सकलवाचकः कौलो यत आद्यन्तवर्जितः ॥८२ ॥

सकला परमा विद्या परं ब्रह्म परात्मनि ।
एकात्मा द्विविधा भूत्वा प्रेमार्थं प्रेमरूपिणी ॥८३ ॥

ब्रह्मसती अनन्ताद्यब्रह्मणो बहुवाचकः ।
आभरणश्रितं गात्रं न गात्रं स्वर्णभूषणम् ॥८४ ॥

प्रकृतिपुरुषज्ञाने प्रकृतिपुरः पञ्चधा ।
कूटस्थे शेरते सर्वे विराटादिचराचराः ॥८५ ॥

व्यष्टिसमष्टिरूपेण साक्षी भूत्वा परस्परम् ।
वाक्यार्थे वामाप्रभृतिर्वामाचारस्वरूपकाः ॥८६ ॥

कुलज्ञाने कुलध्याने कालीकालसमागमः ।
शब्दार्थं कालिकाकूलं पञ्चकलाप्रवाचकम् ॥८७ ॥

कामकलासमा सोमचित्कला कलारूपिणः ।
त्रिगुणः साम्यकला च मायाकलाप्रकाशितः ॥
यन्त्रध्यानं ब्रह्मज्ञानं साधनं प्रेममिश्रितम् ॥८८ ॥

विना वामां कथं श्यामा सकला कलासेविता ।
भावान्तरे यदा सिद्धी रूपान्तरप्रदर्शिका ॥८९ ॥

द्विभुजश्चतुर्भुजश्च दशभुजः स्वतन्त्रकः ।
अष्टविद्या दुर्गावाच्या दुर्गादिकालीवाचकाः ॥९० ॥

उमा गौरी श्यामा भीमा भावरूपे प्रदर्शिताः ।
महाकालं यजेद् देव्या दक्षिणे द्विविधार्थकम् ॥९१ ॥

ब्रह्मानन्दं सहस्रारे गुरुरूपे प्रपूजितम् ।
दक्षवामे पतिः पत्नी दक्षिणो दिव्यतीर्थदः ॥९२ ॥

कुलानन्दः कुले पूज्यः कुलाकुलसमावृतः ।
भक्तिसाध्या यदा आद्या हृदये रूपचिन्तनम् ॥९३ ॥

प्रत्यक्षे सम्मुखे श्यामा कल्पितपुत्तल्यादिकम् ।
सव्ये कालवामा श्यामापूजनं विधिपूर्वकम् ॥९४ ॥

प्रेमसाध्या यदा आद्या महाभावे प्रपूजिता ।
तरुणारुणदक्षाक्षरूपं सर्वं प्रकाशितम् ॥९५ ॥

समाबन्धः पञ्चानन्दः पञ्चकामे प्रसेवितः ।
बोधानन्दः सुधानन्दो ध्यानानन्दस्तृतीयकः ॥९६ ॥

श्यामानन्दो रामानन्दः कन्दर्पपञ्चमिलितः ।
पञ्चयोगः पञ्चभोगो भवरोगविनाशकः ॥९७ ॥

नित्यधामे यथा श्यामः श्यामा सह समागतः ।
वामाचारे यजेत् श्यामा वामाभावः सुविस्तरः ॥९८ ॥

रश्मिवृन्दः कुलानन्दः सामरसानन्दभागितः ।
विद्यानन्दो योगानन्दः स्वयं सुरतानन्दितः ॥९९ ॥

सहजानन्दो ब्रह्माद्यः कारणानन्दसेवितः ।
सेवानन्दः असंख्यश्च दर्शनार्थी ततोऽधिकः ॥१०० ॥

देवाङ्गना अप्सराद्या गन्धर्वा नृत्यगायनाः ।
न कल्पनाविर्भूतो जीवभूतो न चेत् कदा ॥१०१ ॥

अनादिरादिः श्रीआद्या सच्चिदानन्दवाचकः ।
भक्तियोगे सर्वाः साध्या न भक्तपुरगामिनः ॥१०२ ॥

चिन्मयी कृपामयी भाक्ते अंशकलाप्रदर्शितः ।
न स्वयं करोति सिद्धं न नाशार्थमस्त्रधारणम् ॥१०३ ॥

कारणं कारणज्ञानं निर्विकल्पसमाधिना ।
अंशकल्पा बहुरूपं स्वरूपं फलदायिनम् ॥१०४ ॥

सविकल्पो बहुविधो भैरवभैरवीगणः ।
सविकल्पो विभावश्च स्वभावो वामभावितः ॥१०५ ॥

कल्पसिद्धः कल्पे लब्धः कल्पान्ते स्वभावगतः।
पुरुषकारो द्विधाकारो निर्विकल्पसकल्पना ॥१०६ ॥

साक्षात्कारः सेवासारो ह्यच्युतभावे भावितः।
आत्मानं न तारयेद् यस्तु स एव आत्मघातकः ॥१०७ ॥

निर्विकल्पो निष्कलार्थो नास्ति मात्रमुपासना।
ज्ञाता ज्ञेयं ज्ञानमैक्यं निर्विकल्पः समाधिना ॥१०८ ॥

द्विपक्षौ लक्षालक्षश्च सापेक्षो लक्षवाचकः।
अहं भोक्ता सखा अंशः साक्षीरूपं निरञ्जनम् ॥१०९ ॥

शुद्धज्ञानं पूजाध्यानमुपचारविवर्जितम्।
शान्तिलाभः क्रमे लाभो यदि दोषविवर्जितः ॥११० ॥

उक्त्या लीनो यदा लीनो वासना मम सहितः।
तदा मुक्तिर्भविष्यति उक्तिमात्रं प्रचारणा ॥१११ ॥

अभिन्नः प्रकृतिर्ब्रह्म तथा मनो जीवात्मनि।
अभिन्नवासना नित्यसंयोगचेतनामने ॥११२ ॥

अचेतः सुप्त उत्थितः सदसद्वासनागतः।
खपुष्पदर्शनमात्रं भ्रान्तिमात्रं न लभ्यते ॥११३ ॥

अथवा चन्द्रमा सत्यः स्पर्शने कः क्षमो भवेत्।
बालवत् क्रीडनं मात्रं निष्कलं चिदाराधना ॥११४ ॥

अमृतममृतकुण्डे सत्यं न भ्रान्तिवाचकम्।
संलाभः पानं दुःसाध्यो नाम्नि न मृत्युनाशनः ॥११५ ॥

चित्तशुद्धिः शुद्धबुद्धिर्नामक्रममुपासना।
निर्गुणो निष्कलो देव उपदेवो विडम्बना ॥११६ ॥

मांसरूपं मां स्वरूपं स्वरूपं रूपगर्वितम्।
वामाचारे स्वरूपञ्च विभावे सत्यं कल्पितम् ॥११७ ॥

स्वरूपं निर्विकल्पञ्च सकलब्रह्मसाधना ।
एकरूपा जगन्माता द्वितीया कामनापरा ॥११८ ॥

कल्पनारहितरूपा निर्विकल्पविवेचना ।
सविकल्पो सत्यरूपं गुरुदत्तः सुकल्पना ॥११९ ॥

अनन्तरूपमैश्वर्यं विभवः सकलात्मना ।
देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ॥१२० ॥

उत्पन्ना च क्वचित् सर्वे अदर्शनेति रोधना ।
गुरुवाक्यं च मन्त्रैक्यं सुचित्तं ध्यानदर्शितम् ॥१२१ ॥

शुद्धा अन्तःक्रियावन्तो देववद् देवसाधना ।
मन्त्रार्थस्तन्त्रसंकेतः स्वरूपरूपदर्शनम् ॥१२२ ॥

आकारस्त्रिविधाकारो बहुभाग्ये प्रदर्शनम् ।
चारुचक्षुः सूक्ष्मः अक्ष आभासत्यागवर्जितः ॥१२३ ॥

कृपासिद्धिः क्रियासिद्धिरिच्छासिद्धिः परोत्तमा ।
सिद्धान्तः कौलो मिश्रश्च वामाभावो विभावकः ॥१२४ ॥

दिव्यभावस्त्रिविधश्च कौलाचारे प्रतिष्ठितः ।
आरूढः सिद्धः कौलश्च महावीरश्च नित्यता ॥१२५ ॥

अभेद ऐक्यमेकञ्च स्वरूपं स्वरूपे स्थितम् ।
सुवर्णे सुवर्णयोगं शुद्धसत्त्वे भविष्यति ॥१२६ ॥

अविद्या ताम्रवद् योगः सत्यासत्ये भविष्यति ।
यथा वर्णो वर्णशिक्षा शिक्षान्ते वर्णव्यापितः ॥१२७ ॥

शिक्षान्ते अक्षो लक्षञ्च सिद्धान्ते अक्षः पूजितः ।
प्रवर्तसाधनं वक्ष्ये सावधानावधारय ॥१२८ ॥

तमःपुरं रजोपुरं अनुभवो द्विधा मतः ।
पापवक्ता दुःखभोक्ता सत्यच्छेत्ता दुराशयः ॥१२९ ॥

सत्यपुरं स्वतन्त्रकं तमोनाशे प्रदर्शितम् ।
त्रिगुणमिश्रिता माया भूततत्त्वप्रसाधिनी ॥१३० ॥

त्रिमात्रा कुण्डलीयोगे वायुवेगे प्रधाविता ।
क्रमे लयः पापक्षयो योनिजो योनिसंयुतः ॥१३१ ॥

षट्चक्रभेदः प्रवर्तो गुरुवर्त्मप्रदर्शितः ।
पापपुण्ये सर्वशून्ये पक्षशून्ये समाश्रिते ॥१३२ ॥

पञ्चप्रेते स्थिता बाला तारिणी पञ्चमात्रगा ।
त्रिमात्रा द्विनादबिन्दुः सर्वान्ते कालिका स्थिता ॥१३३ ॥

दहने दहति पापं प्राणेऽज्ञानं च शुध्यति ।
अमृतप्लावनादात्मा शुद्धसत्त्वं भविष्यति ॥१३४ ॥

ध्यानानन्दो ज्ञानानन्दो विषयानन्दः अच्युतः ।
योगानन्दो भोगानन्दः पञ्चानन्दलक्षणम् ॥१३५ ॥

ध्यानानन्दो नकारश्च वकारो ज्ञानरूपकः ।
वकारो विषयानन्दो भोगानन्दसमायुतः ॥१३६ ॥

योगानन्दो हकारश्च क्रमयोगो यकारकः ।
सोमधारा सर्वसारा ब्रह्मरन्ध्रात् प्रसर्पति ॥१३७ ॥

क्रमे गतिः पुरं प्रति पुरं त्रिपुरमच्युतम् ।
अच्युतः अच्युतपुरं वरुणालयं दधतः ॥१३८ ॥

इडा इक्षुं क्षरेद् बिन्दुं पिङ्गलामृतवारुणीम् ।
अरुणस्तरुणो यत्र नवीनो भवति तनुः ॥१३९ ॥

सूर्यद्वारं सहस्रारं चैतन्यं कुलरूपिणी ।
चन्द्रद्वारमन्धकारं भानुस्तनुप्रकाशकः ॥१४० ॥

जाग्रत्कुण्डलिनी व्यग्रा पथप्रज्ञा यदा भवेत् ।
सुविस्तारं सहस्रारं गुरुपदप्रदर्शितम् ॥१४१ ॥

पादुकातत्त्वसाधने गुरुसत्यं प्रकाशितम् ।
नाथसाध्वी दयामयी चिन्मयी प्रेमफलदा ॥१४२ ॥

नवचक्राः कलाधाराः त्रिशून्यं पञ्चव्योमकम् ।
षड्चक्राः पञ्चदेवाश्च त्रिलिङ्गं पञ्चदेवताः ॥१४३ ॥

ज्ञानदाता शिवपद्मे द्विदले सुखदः स्थितः ।
प्राणापानसमायोगे फलदाता हृदम्बुजे ॥१४४ ॥

प्रेमदाता नाभिमूले भूर्भुवो भोगमोक्षदा ।
कविदाता कण्ठदेशे भ्रुवोर्मूले च ध्यानदा ॥१४५ ॥

षट्चक्रध्यानं प्रत्यक्षं सप्तमचक्रे गुरुः सदा ।
सर्वं कुण्डलिनी पिण्डं ब्रह्माण्डः कुण्डली मतः ॥१४६ ॥

चिद्घना परिपूर्णा च तदंशे विद्याघनता ।
गुणे अंशकलाध्वंसः अध्वंसो द्विविधा गतिः ॥१४७ ॥

पुरुष्कारः चिदाकारो यदि प्रत्यक्षो जायते ।
विशुद्धात्मनो भूत्वा विद्यातत्त्वसमन्वितः ॥१४८ ॥

शिवतत्त्वं लभेदाशु चिद्घनपरमात्मनः ।
चिद्घनः सकलब्रह्म विशुद्धात्मा प्रदर्शयेत् ॥१४९ ॥

शुद्धः सत्त्वं विशुद्धो हि हेतुवादविवर्जितः ।
कामरागो भवेत्त्यागः रजस्तमःसमन्वितः ॥१५० ॥

मनजीवात्मनो शुद्धिः भूतशुद्धिप्रसादतः ।
प्राणयोगः सगर्भश्च निगर्भात् शतगुणितः ॥१५१ ॥

श्रद्धा भक्तिर्ध्यानं ज्ञानं मन्त्रयोगेन मिलितम् ।
पञ्चयोगः पञ्चयोगः पञ्चयोग उदाहृतः ॥१५२ ॥

हंसयोनिर्भवेत् काली विद्यायोनिश्च तारिणी ।
हंसो माया समाख्याता सर्वमन्त्रप्रकाशिनी ॥१५३ ॥

हकारः शिवरूपश्च सकारः सतीरूपिणी।
सा सती त्रिपुरा बाला विश्वयोनिः प्रकाशिनी ॥१५४॥

जीवयोनिः कूटस्थश्च प्रकृतिः पुरुषः स ह।
हंसः शिवः सोऽहं जीवो नाहं सकारहीनतः ॥१५५॥

स्मरहरो भवेत् पुरं भुवनं सर्वमिलितम्।
तथैव सकारयोगे इन्दुरन्ते प्रकाशितः ॥१५६॥

पराप्रसादमन्त्रश्च हहीने त्रिपुरामनुः।
मनुः सूक्ष्मः ज्योतिरक्षः प्रत्यक्षा चित्कुलेश्वरी ॥१५७॥

त्रिगुणा सृष्टिस्त्रिमात्रा शवः शक्तिविवर्जितः।
शिवशक्ती यदा सूक्ष्मौ नादबिन्दू प्रकाशितौ ॥१५८॥

योगे योगे अनुरागे शिवशक्ती प्रकाशितौ।
सकारयुक्तो नादेन उकारो मन्त्रभूषितः ॥१५९॥

नादो व्यक्तो वकारश्च मन्त्रो महाकाशे स्थितः।
भुवनयुगलरूपकामिनी त्रिपुरे स्थिता ॥१६०॥

कामकला पूर्णकला मिलितो र अयोनिजः।
वकारो नादरूपश्च वकारः अबलालये ॥१६१॥

पुरमध्ये स्थितः कालः शून्यं हंसस्य वाचकम्।
सकारशक्तियोगेन हंसो मायाप्रकाशितः ॥१६२॥

शिवो हंसो भवेज्जीवः सोऽहं सगुणमिश्रितः।
त्रिमात्रा ब्रह्मबीजञ्च वर्णव्यञ्जनहीनतः ॥१६३॥

यतीशः परममन्त्रो युवतीशविवर्जितः।
सकला सकला सिद्धिः पञ्चमात्रा उपाङ्गतः ॥१६४॥

गुरुपादे गुरुबीजं कामबीजं हृदम्बुजे।
स्त्रीबीजं शक्तिबीजञ्च द्विदलपतिमस्तके ॥१६५॥

सहचरी सहचरी सहचरी समायुतम् ।
सुषुम्नावर्त्म प्रवर्तं त्रिशून्यं द्विः प्रकाशितम् ॥१६६ ॥

ब्रह्मरन्ध्रं ब्रह्मवक्त्रं ब्रह्ममार्गसमावृतम् ।
पद्मरूढः क्रमे पूज्यः षट्चक्रदेवी देवता ॥१६७ ॥

करुणा कामकला काली तरुणा तारा तारिणी ।
लावण्यसुन्दरी पूज्या कामबीजेन तर्पिता ॥१६८ ॥

द्विदलोर्ध्वे आदिनाथो निःशब्दः शब्दभाषितः ।
दलगतो महाब्रह्मा महाविष्णुसमन्वितः ॥१६९ ॥

कामचारो बीजसारो महाकालसमावृतः ।
नादशक्तिलयस्थानं तमालयगतो रविः ॥१७० ॥

बिन्दुरिन्दुः सिन्धुचरो ह्यन्धकारप्रकाशितः ।
सृष्टिबीजं बीजबीजं मुक्तिबीजं सदाशिवः ॥१७१ ॥

अखण्डमण्डलं सूर्यः खण्डवह्निस्तदंशकः ।
सप्तस्वर्गसप्तमर्तसप्तपातालव्यापितः ॥१७२ ॥

सप्तसमुद्र आख्यातो लवणाम्बुधिसंयुतः ।
पूर्णशैलः कुलाचलः सप्तव्यक्तः प्रभाषितः ॥१७३ ॥

मेदिनी मेदाङ्गजाता रसो ज्योतिः क्रमोद्भूतः ।
अनिलो लीनः सर्वत्र कन्दर्पदर्पदर्पितः ॥१७४ ॥

महाशून्ये दिवि चक्रः खगो हंसः स्वरूपतः ।
सुपथः कुपथः पथः सुपथः तत्त्वविद्गतः ॥१७५ ॥

मनुमन्त्रसुरथेन सुपथविधिनिर्मितः ।
प्रवर्तः सुषुम्नावर्त्मसाधनं चित्रिणीपथः ॥१७६ ॥

ब्रह्मनाडी सिद्धपुरी योगेश्वरीप्रचोदिता ।
शिवसन्दर्शनोत्साही कुण्डली सह संगता ॥१७७ ॥

स्वयं वामा कामकला विभावकल्पभावतः ।
ऐक्यलक्षविभावेन स्वभावः स्वभावे स्थितः ॥१७८ ॥

स्थूलाकारे चिदाकारः शिवशक्तिप्रदर्शकः ।
चिद्घनविग्रहध्यानं स्थूलरूपे प्रकाशितम् ॥१७९ ॥

दर्पणो मुखसापेक्षोऽक्षिदर्शनकारणम् ।
न सूक्ष्मादक्षहीनेन लक्ष्यालक्ष्यदर्शनम् ॥१८० ॥

समनेन विना कापि निर्मलं दर्शनं भवेत् ।
साधने समनदेहो भावदेहः सुनिर्मलः ॥१८१ ॥

सुनिर्मलः समोज्ज्वलः सिद्धे एकमहेश्वरः ।
दर्शनज़न्यं चक्षुर्हि स्थूलसूक्ष्मचिदात्मकम् ॥१८२ ॥

आधिभौती आधिदैवी आध्यात्मिकसमायुतः ।
दर्शनं दर्पणं चक्षुः सुचक्षुर्ज्ञाननिर्मितः ॥१८३ ॥

सुचारुरूपं ध्येयञ्च सर्वावयवमिलितम् ।
स्थूलजाग्रत् चक्षुश्च सूक्ष्मः स्वप्नप्रदर्शकः ॥१८४ ॥

मनश्चक्षुस्त्रिगुणश्च सदसत्संप्रदर्शकः ।
जीवाकारो निराकारो मन आकारवर्जितः ॥१८५ ॥

कारणं प्रकृतिः सूक्ष्मा निराकारा निरञ्जना ।
भावलक्षस्त्रिधा पक्षः स्थूलसूक्ष्मचिदात्मकः ॥१८६ ॥

आत्मा सूक्ष्मो न चेल्लक्षः कूटस्थो जीवशब्दितः ।
स्थूलो घनः सकलश्च चिद्घनो विराटादिकः ॥१८७ ॥

सम्राट् च सकलं ब्रह्म विराट् अंशकल्पितः ।
सर्वव्यापी निराकारो ब्रह्मब्रह्मादिखण्डकः ॥१८८ ॥

समष्टिव्यष्टिरूपेण घटः खण्डः चराचरः ।
कुण्डली त्रिविधा नित्या जाग्रता सुप्ता स्वप्निता ॥१८९ ॥

जाग्रता त्रिविधा भद्रा चिन्मया सत्यरूपिणी ।
ज्ञानशक्तिस्त्रिविधा च लिङ्गः अङ्गः चिदङ्गकः ॥१९० ॥

स्वप्नवत् पश्यति लिङ्गे अङ्गे जाग्रज्जायते ।
चिदङ्गः सकलं ब्रह्म पुंस्त्रीरूपे प्रकाशितः ॥१९१ ॥

निष्कलः सकलं ब्रह्म पुंस्त्रीरूपे प्रकाशितः ।
निष्कलः परमं ब्रह्म अन्तरात्मा अगोचरः ॥१९२ ॥

सकलः परिपूर्णश्च कल्पितरूप अंशकः ।
कल्पितरूपं बहुधा सत्यं कल्पितमव्ययम् ॥१९३ ॥

पुंमन्त्रो रथमारुह्य चक्रवायुज्योतिर्मयम् ।
महाशून्ये प्रगच्छन्ति भावशक्तिसमाश्रिताः ॥१९४ ॥

स्त्री आचारो वामाचारो वामापि द्विविधा स्मृता ।
दक्षिणो द्विविधाचारो विविधार्थप्रवाचकः ॥१९५ ॥

तान्त्रिकी वैदिकी मिश्रा इति मे त्रिविधं मतम् ।
वैदिकी दक्षिणाचारः पश्वाचारः प्रमाणितः ॥१९६ ॥

विभावो दक्षिणाचारो विभावः पशुमिश्रितः ।
दिवाकृत्यो ब्रह्मचर्यो रात्र्यां कूलः प्रपूजितः ॥१९७ ॥

दक्षार्थः पुरुषवाच्यो वामे वामा प्रतिष्ठिता ।
पुंसाचारो वीराचार आगमार्थः प्रचारितः ॥१९८ ॥

सकला चित्कला काली स्त्रीरूपा श्रीकुलेश्वरी ।
श्यामापुरे वामारूपे गमने सेवने क्षमा ॥१९९ ॥

पुंरूपं विरूपं सर्वं सतीपुरे पतिं विना ।
किमाश्चर्यमनिवार्या द्वारप्रवेशमात्रतः ॥२०० ॥

क्षरन्ति भवन्ति क्षिप्रा ब्रह्मविष्णुमहेश्वराः ।
शान्तमन्तं दाससुतौ भाविनां भक्तिसाधने ॥२०१ ॥

दर्शनं भवति सत्यं अन्तरे स्वनिकेतने ।
कल्पान्ते सृष्टिरादौ च दर्शनार्थं शिवादयः ॥२०२ ॥

दृष्टिमात्रमाकर्षितास्ते देवाः कुलवर्जिताः ।
देवत्रयः सिद्धमयः तनयभावे करणे ॥२०३ ॥

इच्छामये अचिरात्ते भावलाभः सशक्तिदः ।
सहकारी कर्तृनारी द्वारी कर्ता अगणितः ॥२०४ ॥

पुंभावः अलाभभावो लाभभावो वामा गतिः ।
पराभक्तिप्रसादेन मातृभावे प्रपश्यति ॥२०५ ॥

यामिनी कामिनीवर्ज्या पूज्या सर्वत्र पूजिता ।
स्त्रीभावः कल्पनाभावः कल्पान्तरे सुसिद्ध्यति ॥२०६ ॥

सहस्रारो ब्रह्मद्वारो द्विप्रकारा भवेद्गतिः ।
सूक्ष्मपथो मोक्षपथो महापथमहारतिः ॥२०७ ॥

पथः सुषुम्नामार्गश्च त्रिवेणी द्विविधा स्मृता ।
मूलकूले लभेत् स्थूलः सकलपरदेवता ॥२०८ ॥

गङ्गाधरशिरे गङ्गा गङ्गा त्रिपथगामिनी ।
विष्णुपादोद्भवा गङ्गा विष्णुशयनं निर्जने ॥२०९ ॥

गङ्गागमे पूतो विष्णुर्भानुकन्यासमावृतः ।
सरस्वती महाज्योतिश्चन्द्रसूर्याग्निवाहिका ॥२१० ॥

वृन्दावने घनश्यामस्त्रिवेणी वेणीवेष्टिता ।
द्विदलोर्ध्वे महासिद्धे शुक्लध्वजरथे गतिः ॥२११ ॥

महाकालश्चिरकालं पूर्वमुखे सदा स्थितः ।
रथः पश्चिमसम्मुखश्चलाचलौ विपरीतौ ॥२१२ ॥

कमण्डलुधरो ब्रह्मा स्थिरा गङ्गा कमण्डलौ ।
श्रीकान्तः शान्तभावेन एकान्ते जलशायिने ॥२१३ ॥

पूजने अपवर्गश्च स्नाने पूतः सदा शुचिः ।
मार्जने परमः स्वर्गः पाने मृत्युः प्रणश्यति ॥२१४ ॥

विष्णुनिकेतने ब्रह्मा चरणोद्भूतसम्भवा ।
यमुना मिलिता गङ्गा शशधरधरशिरे ॥२१५ ॥

सरस्वती सृष्टिपतिमिलिता च कमण्डलौ ।
सूर्यतीर्थो नादचक्रे नादो ह्यरुणकन्यका ॥२१६ ॥

चक्रतीर्थो भवेद्गङ्गा सरस्वतीसरोवरे ।
सरस्वती वह्नितीर्थो नित्या अन्तरबहिरे ॥२१७ ॥

यदा वृष्टिस्तदा सृष्टिः परमेष्टिसहकारे ।
श्रीपतिः स्थितिः रतिश्च रुद्रः प्रलयरूपिणः ॥२१८ ॥

पञ्चाननो रसास्वादी षडाननो रसाम्बुधिः ।
कृष्णवर्णः शशी यत्र यत्र सारञ्च तत्त्रयम् ॥२१९ ॥

प्रयोजनं फलं पक्वं साधनं फलकारणम् ।
शुक्लो रक्तस्तथा पीतः कृष्णश्च नीलिमो नीलः ॥२२० ॥

अध ऊर्ध्वो भवेत् पद्मो मन्त्रयोगी योगेश्वरः ।
पश्चिमाभिमुखं पूर्वममरार्थो विपर्ययः ॥२२१ ॥

ऊर्ध्वाननश्चन्द्रनाथः पश्चिमाचलस्थायिन् ।
उदयः शुक्लरूपश्च अग्रे रक्तसमाकृतिः ॥२२२ ॥

चराचरः कृष्णवर्णः पीते मृत्युर्विमुञ्चति ।
पश्वाचारो मूलाधारो नकुले तत्त्वचिन्तनम् ॥२२३ ॥

विद्यासाध्ये ज्ञानरथे गमने परमा गतिः ।
स्वभावोऽरिभावो भावस्तदूर्ध्वे कुलसाधनम् ॥२२४ ॥

निष्कलं ब्रह्मसायुज्यं सम्भवं सकलं न च ।
कल्पान्ते कल्पनासिद्धिर्ब्रह्मादिदेवता यतः ॥२२५ ॥

वामभावो महाभावः सकलमूर्तिसेवनम् ।
स्वभावः सुभावो भावो विभावो ह्यंशरूपकः ॥२२६ ॥

वामाचारः पञ्चभावः पञ्चरससमन्वितः ।
स्वयं कामकला भूत्वा यजनं परमं प्रियम् ॥२२७ ॥

सुभावो युगलध्यानं योगज्ञानसमन्वितम् ।
भावः सुललिताकारः परस्पररसान्वितः ॥२२८ ॥

विदग्धा रसिकं वेत्ति रसज्ञो रससाधनम् ।
क्रियाभावो विभावानामेकभावो विधिर्मतः ॥२२९ ॥

शिवभावो यजेद् वामा स्वयं वामाविदूरतः ।
माधुर्यवीर्यरसिका विदग्धा रसिकप्रिया ॥२३० ॥

योगभोगध्यानज्ञानजपयज्ञादिका क्रिया ।
यद् यदाचरते योगी योगिनी तत्करिष्यति ॥२३१ ॥

योगिना योगिनी साध्या सत्यसङ्कल्प ईश्वरी ।
विभावो वामानां भावो रहस्यं कालसाधनम् ॥२३२ ॥

शैवाः शैवपरा मन्त्रा प्रेतो मृत्युञ्जयादिकः ।
तद्भावभाविनां भावस्तारिणी कालभाविनी ॥२३३ ॥

अथवा कालभावेन योगेन ब्रह्मचिन्तनम् ।
ऐक्यं विलक्षणपक्षः सिद्धान्तः कौलसाधनम् ॥२३४ ॥

ध्यानज्ञानद्वयाभ्यासे भावलाभो भविष्यति ।
कल्पनाज्जायते सिद्धिः पक्वेन अच्युतादिकः ॥२३५ ॥

कल्पान्ते कल्पनाभावः क्रमे स्वभावं पश्यति ।
सिद्धान्तोऽनन्तभावः पञ्चमी तद् गरीयसी ॥२३६ ॥

ऊर्ध्वशून्यमधःशून्यं मध्यशून्यं निरामयम् ।
ऊर्ध्वशून्ये महाकालः अधःशून्ये च कालिका ॥२३७ ॥

मध्यशून्यसमायोगे अमलानन्दः अव्ययः ।
योगिनो योगिनीयोगे योगेश्वरीं प्रपश्यति ॥२३८ ॥

योगश्च द्विविधः प्रोक्तो युक्तो युञ्जान एव च ।
युक्तयोगी रसभोगी युञ्जानो मुक्तिदायकः ॥२३९ ॥

नवचक्रं कलाधारं त्रिशून्यं पञ्चव्योमकम् ।
स्वदेहं यो न जानाति स योगी नामधारकः ॥२४० ॥

षट्चक्रञ्च षडाम्नायं कामकलाप्रकाशिनीम् ।
षट्शून्यं कुण्डलीं कालीं चिच्चैतन्यस्वरूपिणीम् ॥२४१ ॥

पञ्चकामं त्रिशून्यञ्च पञ्चाम्नायं शिवोदितम् ।
समायोगे नवचक्रे योगिनो ध्यानतत्पराः ॥२४२ ॥

मूलाधारादिमाख्यातं नादबिन्दुगुरुपदम् ।
ज्ञानिना शून्यं शून्यञ्च नवचक्रं प्रकीर्तितम् ॥२४३ ॥

कलाधारं कलाधारं कुलाधारञ्च योगिनाम् ।
ध्यानिनां षोडशाधारं मूलादिञ्च भ्रुवान्तकम् ॥२४४ ॥

ज्ञानिनां शक्तिमाधारमाधेयं परमात्मनः ।
इतराख्यं बाणलिङ्गं स्वयम्भूलिङ्गत्रितयम् ॥२४५ ॥

पूर्वाम्नायं कुण्डलिनीं लिङ्गं शून्ये समायुताम् ।
महाकालः पञ्चवक्त्रः अक्षोभ्यो भैरवः स्वयम् ॥२४६ ॥

काली तारा तथा वामा त्रिपुरे त्रिपुरे स्थिता ।
स्थूला सूक्ष्मा ज्योतिः क्वचित् सच्चिदानन्दविग्रहा ॥२४७ ॥

ध्यानिनां परमं ध्यानं नादबिन्दुश्च योगिनाम् ।
त्रिमात्रा ज्ञानिनां प्राणाः पञ्चमात्रा च कर्मिणाम् ॥२४८ ॥

महाशून्यं महाकाशः सहस्रारो द्विरूपकः ।
ऊर्ध्वशून्यं द्विदलस्थं शक्त्याधारः अनन्तकः ॥२४९ ॥

मध्यशून्यं हृदाकाशो दीपवद् हृदये ग्रस्तः ।
ग्रस्तत्यागी जीवो भोगी जीवो दीपान्तरो यथा ।।२५० ।।

एकवृक्षसमारूढो द्विखगः शक्तिसंयुतः ।
समोज्ज्वला लीला केलिः पिण्डब्रह्माण्डव्यापिता ।।२५१ ।।

ग्रासकर्ता भोक्ता भूत्वा आदेशप्रतिपालकः ।
पूर्वकृतः अत्युत्कटः सुखदुःखेन योजितः ।।२५२ ।।

योगिनां पञ्चव्योमं हि देहव्याप्तकुलाकुलम् ।
अनङ्गः अङ्गरूपेण पञ्चव्योमे प्रतिष्ठितः ।।२५३ ।।

कवलितोऽहङ्कारः त्रिगुणः त्रिकलान्वितः ।
पञ्चमः सुसमायोगः त्रिपूर्णो व्योमपञ्चकः ।।२५४ ।।

मन्त्रयोगे सुयोगे च सच्चिदानन्दो लभ्यते ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।।२५५ ।।

सदाशिवः खगाकारो देव्याः पर्यङ्कवाहनः ।
खमध्ये कुरु चात्मानं गकारे खः समागतः ।।२५६ ।।

यथाध्यानं यथाध्यानं यथाध्यानं प्रकाशितः ।
आकाशाज्जायते वायुर्वायोरुत्पद्यते रविः ।।२५७ ।।

रवेरुत्पद्यते तोयं तोयाद् उत्पद्यते मही ।
मही विलीयते तोये तोयं विलीयते रवौ ।।२५८ ।।

रविर्विलीयते वायौ वायुर्विलीयते च खे ।
ध्यानयोगभूतशुद्धिप्राणसंयमनादिना ।।२५९ ।।

मन्त्रयोगादिप्रत्यक्षाः सिद्ध्यन्ते सिद्धिलक्षणाः ।
ज्ञानिनां ज्ञानचिन्ता च ऐक्यपक्वेन मुक्तिदः ।।२६० ।।

पञ्चभूतप्रपञ्चेषु मायागुणसमन्वितः ।
न बद्धः परमज्ञाने खगो बन्धविमुक्तकः ।।२६१ ।।

मनोभूतं विषयञ्च शून्यञ्च परमात्मनः ।
पापं पुण्यं भवेत् शून्यं ज्ञानशून्ये मनोगंते ।।२६२ ।।

मनोविलयो मोक्षश्च नेयो ध्येयो द्विधा मतः ।
वासनासंक्षये नेयो ध्येयो वै अच्युताच्युते ।।२६३ ।।

।। इति रहस्यषडाम्नायनिगमसन्दर्भे तन्त्रे
चतुर्थः पटलः ।।

।।ग्रन्थश्च समाप्तः ।।



# गायत्रीतन्त्रम्

## ॥अथ प्रथमः पटलः॥

श्रीमहादेव उवाच[१]—

अधुना सम्प्रवक्ष्यामि गायत्रीं परमाक्षरीम्।
स्मरणात् सर्वपापेभ्यो मुक्तो भवति तत्क्षणात्॥१॥
अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् [२]स्वपन्नपि।
गायत्रीं प्रजपेद्धीमान् जपात् पापं निकृन्तति॥२॥
मननात् पापतस्त्राति मननात् स्वर्गमश्नुते।
मननान्मोक्षमाप्नोति चतुर्वर्गमयो भवेत्॥३॥
रूपादितत्त्वसहितां गायत्रीं परमाक्षरीम्।
चतुर्भुजां शशिकलां जटाजूटसमन्विताम्॥४॥
ऋक्सामयजुरादीनां[३] प्रफुल्लपङ्कजेक्षणाम्।
पञ्चाशद्वर्णग्रथितां[४] मालोद्योतितहृत्स्थलाम्॥५॥
[५]अनेकवर्णनिर्माणकण्ठदेशविराजिताम्।
दिव्यगन्धप्रलिप्ताङ्गीं[६] शुक्लवस्त्रपरिच्छदाम्[७]॥६॥
शुक्लपद्मसमासीनां शुक्लवस्त्रोत्तरीयिणीम्।
ब्रह्मादिदेवतावृन्दैः संस्तुतां नित्यनूतनाम्॥७॥
एवं ध्यात्वा न्यसेद् वर्णं पठित्वा छन्द उत्तमम्।
ॐ अस्या [८]अग्निमुखीगायत्र्याः परंब्रह्म
ऋषिः ऋग्यजुःसामाथर्वाणश्छन्दांसि[९] सविता
देवता पर[१०]ब्रह्ममातुर्न्यासे विनियोगः॥८॥

---

१. श्रीदेव उवाच-ङ.। २. यथा तथा-ङ। ३. ऋक्सामयजुषां नाथाम्-ग. घ.। ४. प्रथिताम्-ग.। ५. रत्न-ग. घ.। ६. विलिप्ताङ्गीम्-ग. घ.। ७. परिष्कृताम्-ग. घ.। ८. अग्निमुख्याः-घ.। ९. ऋग्यजुःसामाथर्वच्छन्द-ङ., ऋग्यजुःसामाथर्वा विनियोगः-घ.। १०. ब्रह्म- ग.।

पादादिमस्तकान्तं च न्यासे कुर्याद् विशालधीः ।
विना न्यासं जपेद् यस्तु[१] गायत्री निष्फला[२] भवेत् ॥९ ॥

विना मुद्रां न्यसेद् यस्तु न्यासो भवति निष्फलः ।
यतिश्च पञ्चमुद्राभिर्न्यासं कुर्यात् प्रयत्नतः ॥१० ॥

गृही च यत्नतः कुर्यात् त्रिसन्ध्यं तत्त्वमुद्रया ।
कनिष्ठानामिकाङ्गुष्ठा अङ्गुष्ठतर्जनी तथा ॥११ ॥

अङ्गुष्ठमध्यमायुक्ता[३] अङ्गुष्ठानामिका तथा ।
[४]कनिष्ठाङ्गुष्ठसंयोगात् पञ्च मुद्राः प्रकीर्तिताः ॥१२ ॥

पादादिमस्तकान्तं च (ॐ) भूर्भुवःस्वर्न्यसेत् सुधीः ।
सप्तधा विन्यसेद् विद्वान् गायत्रीं[५] क्रमतस्ततः ॥१३ ॥

पादाङ्गुष्ठे न्यसेद्योगी तत्कारं[६] भावतत्परः[७] ।
[८]सकारं[९] गुल्फयोर्न्यस्य विकारं जङ्घयोस्तथा ॥१४ ॥

तुकारं जानुनोर्मध्ये वकारं[१०] मध्यदेशतः ।
रेकारं गुह्यदेशे च[११] निकारं वृषणे न्यसेत् ॥१५ ॥

यंकारं कटिदेशे च मकारं नाभिमण्डले ।
गौकारं जठरे न्यस्य देकारं स्तनयोर्न्यसेत् ॥१६ ॥

वकारं हृदि देशे[१२] च स्यकारं कण्ठतो न्यसेत् ।
धीकारं वदने भद्रे मकारं जानुनि न्यसेत् ॥१७ ॥

हिकारं नासिकाग्रे च धिकारं चक्षुषोर्न्यसेत् ।
योकारं प्रथमं योगी भ्रुवोर्मध्ये च विन्यसेत् ॥१८ ॥

---

१. गायत्रीं- ग.घ.। २. निष्फलं-ग.घ.। ३. अङ्गुष्ठमध्यमाभ्यां च-ग.घ.।
४. अङ्गुष्ठाङ्गुष्ठसंयोगात्- ग.घ.। ५. क्रमयोगतः- ग.घ.। ६. तकारम्- ग.घ.।
७. तत्परम्-ग.घ.। ८. त्सकारम्-ग.घ.। ९. चाङ्गुलयोर्मध्ये-ङ.।
१०. वकारमूरुमध्यतः-ग.घ.। ११. णकार-ङ.। १२. हृदि मध्ये-ग.।

द्वितीयं तच्च[१] विज्ञेयं ललाटे च न संशयः।
नःकारञ्च मुखे ज्ञेयं प्रकारं दक्षिणामुखम् ॥१९॥

चोकारं पश्चिमे तद्वद् दकारं चोत्तरामुखम्।
यात्कारं मूर्ध्नि विज्ञेयं सर्वं व्याप्य व्यवस्थितम्[२] ॥२०॥

तत्कारं[३] चम्पकापीतं ब्रह्मविष्णुशिवात्मकम्।
सकारं[४] चिन्तयेच्छ्यामं विकारं कपिलं तथा ॥२१॥

तुकारमिन्द्रनीलाभं वकारं वह्निसन्निभम्।
रेकारं वह्निसंकाशं णिकारं[५] रक्तवर्णकम् ॥२२॥

यंकारं तडिदाकारं[६] भकारं[७] कृष्णमेव च।
गौकारं रक्तवर्णञ्च देकारं श्यामलं तथा ॥२३॥

वकारं शुक्लसंकाशं स्यकारं श्यामलं[८] तथा।
धीकारं कुन्दपुष्पाभं मकारं शुक्लमेव च ॥२४॥

हिकारं चन्द्रसंकाशं धिकारं पीतमेव च।
ओकारं तडिदाकारं योकारं धूम्रवर्णकम् ॥२५॥

अशेषं शोधयेत्[९] पापं वायुबीजं यथा तथा।
नःकारेन्द्रमुखं[१०] प्रोक्तं प्रतप्तकनकप्रभम् ॥२६॥

नःकारस्य समीपेषु[११] बिन्दुद्वयविभूषितम्[१२]।
ऊर्ध्वबिन्दू रक्तवर्णमधः श्यामः[१३] प्रकीर्तितः[१४] ॥२७॥

---

१. च ततो ज्ञेयम्-ग.घ.। २. स्थितं सदा- ग.घ.। ३. तकारम्- ग.घ.।
४. त्सकारम्- ग.घ.। ५. णकारमतिनिर्मलम्-ग.घ.। ६. धूम्रसङ्काशम्- ग.घ.।
७. श्यामलं तथा- ग.घ.। ८. नीलशोभितम्- ग.घ.। ९. शोषयेत्- ग.घ.।
१०. नःकारन्तु- ग.घ.। ११. समीपे तु- ग.घ.। १२. बिन्दुद्वयं विशेषतः- ग.घ.।
१३. श्यामम्- ग.घ.। १४. प्रकीर्तितः- ग.घ.।

नीलोत्पलदलश्यामं प्रकारं दक्षिणामुखम्।
सौम्यं गोरोचनापीतं चोकारं पश्चिमामुखम् ॥२८॥

शुक्लशङ्खसमाकारं[१] दकारं चोत्तरामुखम्।
यात्कारं मूर्ध्नि विज्ञेयमूर्ध्वास्यं ब्रह्ममन्दिरम् ॥२९॥

[२]ब्रह्मविष्णुशिवादीनामालयं तत्त्वसंयुतम्।
[३]प्रणवत्रयसंयोगाद् गायत्री त्रिपदा तथा ॥३०॥

यथा सन्ध्यात्रयं नित्यं प्राणायामत्रयं तथा।
त्रयमाचमनं भद्रे यथा वर्णगुणत्रयम् ॥३१॥

प्रणवत्रयसंयुक्तां गायत्रीं त्रिपदां तथा।
आद्यन्ते प्रणवं दत्वा प्रजपेदनिशं द्विजः ॥३२॥

चतुर्विंशाक्षरी विद्या [४]परतत्त्वविनिर्मिता।
तकाराद्[५] यात्कारपर्यन्तं शब्दब्रह्मस्वरूपिणी ॥३३॥

परस्य ब्रह्मणो माता गायत्री परदेवता।
प्रसुप्तभुजगाकारा बिसतन्तुसमाकृतिः ॥३४॥

पञ्चाशद्वर्णसंयुक्तं[६] गायत्रीनिर्मितं वपुः।
आधारपद्ममध्यस्था विद्युत्पुञ्जप्रदीपिका ॥३५॥

महापद्मवनमयी महापापविमोचनी।
महापुण्यमयी नित्या सच्चिदानन्दरूपिणी ॥३६॥

---

१. शुक्लसङ्काशमाकारम्- ग.घ.।

२. प्रथमे परमेशानि तकारं खण्डमेव यत्।
सकारान्तर्गतं भूत्वा कुरुते पापमोचनम् ॥
याकारान्तर्गतं खण्डं शेषं च वरवर्णिनि।
खण्डशेषं तकारं च ब्रह्महत्याप्रमोचनम् ॥-ग.च. अधिकम्।

३. प्रणवत्रयेत्यारभ्य त्रिपदां तथेत्यन्तं- ग.घ.नास्ति।

४. अजपातत्त्वनिर्मिता- ग.घ.।

५. तकाराद्यन्तपर्यन्तम्- ग.घ.।

६. संयुक्ता- ग. घ.।

गायत्री पातु वो नित्या[१] ह्यशेषपापनाशिनी ।
गायत्री[२] अजपा विद्या प्रणवो भूर्भुवः स्वरः ॥३७ ॥

ततः प्रणवमुद्धृत्य सुमेरुं[३] सेतुरूपकम्[४] ।
ॐ तत्सवितुर्वरेण्यं[५] भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॐ ॥३८ ॥

प्रणवं प्रजपेद्धीमान् पापोच्चाटनकर्मणि ।
प्रणवत्रयसंयुक्ता[६] ब्राह्मणेषु प्रकीर्तिता[७] ॥३९ ॥

क्षत्र्यादौ[८] परमेशानि सर्वत्र[९] प्रणवद्वयम् ।
[१०]त्रिपदा नाम गायत्री ब्रह्मविद्या पुरातनी ॥४० ॥

सगुणापि गुणातीता प्रणवत्रयसंयुता ।
अत एव महेशानि त्रिपदा परिकीर्तिता ॥४१ ॥

द्विपदा क्षत्रवैश्येषु प्रणवद्वयसंयुता ।
प्रकृष्टनूतनो वर्णो नित्यनूतनविग्रहः ॥४२ ॥

अर्द्धमात्रा धृता[११] बिन्दुर्ब्रह्मविष्णुशिवात्मिका[१२] ।
प्रणवः कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः ॥४३ ॥

श्रीदेव उवाच —

गायत्र्याः प्रथमं वर्णं पीतचम्पकसन्निभम् ।
अग्निना पूजितं वर्णमाग्नेयं परिकीर्तितम् ॥४४ ॥

त्सकारं द्वितीयं भद्रे सं प्रजापतिपूजितम् ।
प्राजापत्यं कथ्यते तैर्मुनिभिस्तत्त्वदर्शिभिः ॥४५ ॥

---

१.नित्यं- ग.घ.। २.गायत्र्या- ग.घ.। ३.सुमेरुः- ग.घ.। ४.सेतुरूपकः- ग.घ.।
५.वरेणियम्- ग.। ६.संयुक्तम्- ग.घ.। ७.प्रकीर्तितम्- ग.घ.। ८.क्षत्रादौ- ग.घ.।
९.शस्यते- ग.घ.। १०.त्रिपदेत्यारभ्य प्रणयद्वयसंयुतेत्यन्तं- ग.घ.पु.नास्ति।
११.धृतो- ग.घ.। १२.शिवात्मकः- ग.घ.।

तृतीयं कपिलं वर्णं सोमेन परिपूजितम् ।
तेन सौम्यं महेशानि कथ्यते तत्त्वदर्शिभिः ॥४६ ॥

इन्द्रनीलसमप्रख्यं चतुर्थं वेदपूजितम् ।
ईशेन पूजितं नित्यमैशान्यं तेन कथ्यते ॥४७ ॥

पञ्चमं परमेशानि ज्वलदग्निसमप्रभम् ।
आदित्यपूजितं वर्णमादित्यं तेन कथ्यते ॥४८ ॥

षष्ठञ्च वह्निसङ्काशं मम बृहस्पतिपूजितम् ।
बार्हस्पत्यं कथ्यते तैर्मुनिभिस्तत्त्वदर्शिभिः ॥४९ ॥

सप्तमं निर्मलं वर्णमिन्द्रेण परिपूजितम् ।
तेन ऐन्द्र्यं महेशानि कथ्यते तत्त्वदर्शिभिः ॥५० ॥

अष्टमं तडिदाकारं पितृदेवेन पूजितम् ।
कथ्यते पैतृदैवत्यं मुनिभिस्तत्त्वदर्शिभिः ॥५१ ॥

नवमं कृष्णवर्णाभं अर्यम्णा परिपूजितम् ।
कथ्यते आर्यमणं तेन मुनिभिस्तत्त्वदर्शिभिः ॥५२ ॥

दशमं रक्तवर्णाभं सावित्र्या परिपूजितम् ।
कथ्यते तेन सावित्र्यं मुनिभिस्तत्त्वदर्शिभिः ॥५३ ॥

एकादशं श्यामवर्णं त्वष्ट्रा च परिपूजितम् ।
तेन तैः कथ्यते त्वाष्ट्र्यं मुनिभिस्तत्त्वदर्शिभिः ॥५४ ॥

द्वादशं शुक्लवर्णाभं सदा पूष्णा प्रपूजितम् ।
तेन तैः कथ्यते पौष्ण्यं मुनिभिस्तत्त्वदर्शिभिः ॥५५ ॥

त्रयोदशं श्यामवर्णमिन्द्राग्निपरिपूजितम् ।
कथ्यते तेन मुनिभिरैन्द्राग्नेयं सुलोचने ॥५६ ॥

चतुर्दशं शङ्खसङ्काशं वामदेवेन पूजितम् ।
वामदेव्यं कथ्यते तैर्मुनिभिस्तत्त्वदर्शिभिः ॥५७ ॥

पञ्चदशं शुक्लवर्णं वायुना परिपूजितम् ।
कथ्यते तेन वायव्यं मुनिभिस्तत्त्वदर्शिभिः ॥५८ ॥

षोडशं चन्द्रसङ्काशं मित्रावरुणपूजितम् ।
अतो वै मैत्रावरुणं कथ्यते तत्त्वदर्शिभिः ॥५९ ॥

सप्तदशं पीतसङ्काशमङ्गिरःपरिपूजितम् ।
कथ्यते त्वाङ्गिरसं तेन मुनिभिस्तत्त्वदर्शिभिः ॥६० ॥

अष्टादशं तडिद्वर्णं विश्वदेवेन पूजितम् ।
वैश्वदेवं कथ्यतेऽतो मुनिभिस्तत्त्वदर्शिभिः ॥६१ ॥

एकोनविंशं धूम्राभं विष्णुना परिपूजितम् ।
वैष्णवं कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः ॥६२ ॥

प्रतप्तकनकप्रख्यं विंशं वासवपूजितम् ।
कथ्यते वासवं तेन मुनिभिस्तत्त्वदर्शिभिः ॥६३ ॥

नीलोत्पलदलश्याममेकविंशं वरानने ।
इष्टभैः पूजितं वर्णमैष्टभ्यं तेन कथ्यते ॥६४ ॥

द्वाविंशं रोचनापीतं कुबेरपरिपूजितम् ।
कथ्यते तेन कौबेरं मुनिभिस्तत्त्वदर्शिभिः ॥६५ ॥

त्रयोविंशं शङ्खसङ्काशमश्विनीकुमारपूजितम् ।
आश्विनं कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः ॥६६ ॥

चतुर्विंशं रक्तवर्णं ब्रह्मणा परिपूजितम् ।
तेनैव कथ्यते ब्राह्मं मुनिभिस्तत्त्वदर्शिभिः ॥६७ ॥

सर्ववेदमयी विद्या गायत्री परदेवता ।
परस्य ब्रह्मणो माता सर्ववेदमयी सदा ॥६८ ॥

गायत्र्या पुटितं कृत्वा इष्टमन्त्रं जपेच्छतम् ।
एतज्जपं महेशानि आधाराधेयमुत्तमम् ॥६९ ॥

विनाधारं महेशानि आधेयञ्च विना तथा।
नाधारं सिद्ध्यते भद्रे नाधेयञ्च सुसिद्ध्यति ॥७० ॥

सर्वेषु विष्णुमन्त्रेषु शैवशाक्तेषु सुन्दरि।
सौरे गाणपतौ भद्रे शस्यते वरवर्णिनी ॥७१ ॥

अङ्गनात् सुलोचनो यस्तु झटिति प्रविशेद् गृहम्।
न पश्येच्चक्षुषा किञ्चिद् गृहमध्येषु यत् स्थितम् ॥७२ ॥

पश्येत् स्थूलान्तरे विद्वान् गृहमध्येषु यत् स्थितम्।
एवमाधारमाधेयं यः करोति द्विजातिकः ॥७३ ॥

अङ्कुरो जायते भद्रे लक्षजापान्न संशयः।
न च जीवात्मनो भिन्ना गायत्री ब्रह्मरूपिणी ॥७४ ॥

गायत्र्या न हि भिन्नः स्याज्जीवात्मा तत्स्वरूपिणी।
सर्वदा उभयोरेकं नारिकेले यथोदकम् ॥७५ ॥

द्विजातिः कथ्यते वेदे अत एव हि ब्राह्मणः।
यथा स्पर्शमणिस्पर्शात् ताम्रोऽपि काञ्चनं सदा ॥७६ ॥

गायत्रीसहितश्चात्मा द्विजात्मा तेन ईरितः।
चन्द्रसूर्योपरागे च जप्त्वा ब्रह्ममयो भवेत् ॥७७ ॥

मन्त्रस्य परमेशानि न च होमादिकं दश।
कृते होमादिके भद्रे तज्जपं विफलं यथा ॥७८ ॥

जपमात्रे महेशानि अनन्तं तन्मनुं यथा।
अनन्तस्य महेशानि दशांशं केन जायते ॥७९ ॥

गायत्र्या रहितो यस्तु जपपूजादिका वृथा।
कोट्युपलक्षणं भद्रे अनन्तं ग्रहणे भवेत् ॥८० ॥

हविराप्ताप्तिमात्रेण यथा वह्निः प्रदीप्यते।
आधाराधेयसम्बन्धान्मन्त्रः प्रज्वलितस्तथा ॥८१ ॥

विना हविर्विना काष्ठं कथं वह्निः प्रदीप्यते ।
तन्त्रजेनैव गायत्र्या शूद्रोऽपि प्रजपेन्मनुम् ॥८२ ॥

आधाराधेयमेतत्ते कथितं चातिभक्तितः ।
विना चाधाराधेयं वै प्रजपेद् यदि मूढधीः ॥८३ ॥
शतकोटिजपेनैव तस्य विद्या न सिद्ध्यति ॥

श्रीदेव्युवाच —

श्रुत्वा चागमसन्दर्भमागता सा सुलोचना ।
किमुक्तं देव योगेन्द्र हेरम्बाय वदस्व तत् ॥८४ ॥
यदि नो कथ्यते देव मम दिव्यं तदास्तु ते ॥

श्रीदेव उवाच —

लम्बोदर महाबाहो श्रृणुष्व मधुरं वचः ।
इदमागमसन्दर्भं मम वक्त्राद्विनिर्गतम् ॥८५ ॥

निर्गतं पार्वतीवक्त्रात् तन्त्रं परमदुर्लभम् ।
विलिख्य बहुयत्नेन गच्छ सिद्धाश्रमं सुत ॥८६ ॥

यत्र तिष्ठन्ति मुनयो वेदवेदाङ्गपारगाः ।
अणिमादिगुणैर्युक्तः शीघ्रं भवतु हे सुत ॥८७ ॥
इत्युक्ते शङ्करे देवे अष्टबाहुरभूत्ततः ।
विलिख्य चतुरैर्हस्तैः शिवाय विनिवेदयेत् ॥८८ ॥

पञ्चाशन्मातृका कन्या तन्त्रादाविरभूत् क्षणात् ।
तां दृष्ट्वा तस्य देवस्य जायते लिङ्गवर्धनम् ॥८९ ॥
विधृत्य लिङ्गं तस्याङ्कं प्रजप्य अणिमामनुम् ।
सूक्ष्मत्वं प्रययौ शीघ्रं गणेशस्य निरन्तरम् ॥९० ॥

गच्छ पुत्र महाबाहो तन्त्रमादाय सत्वरम् ।
प्रणम्य प्रययौ शीघ्रं तन्त्रमादाय सत्वरम् ।।
सिद्धाश्रमं वनं रम्यं यथेन्द्रस्य च नन्दनम् ।
दृष्ट्वा गणेशं ते विप्रा विस्मयोत्फुल्ललोचनाः ।।९१ ।।

विप्रा ऊचुः —

भाग्यादागमनं देव कृपयागमनं वद ।
इत्युक्त्वा पूजयामास तं देवं शिवनन्दनम् ।।९२ ।।
षोडशैरुपचारैश्च गणेशं परिपूजयेत् ।
अणिमादिमहामन्त्रैः पूजेयुः शिवनन्दनम् ।।९३ ।।
ध्यात्वा पाद्यादिकं दत्त्वा अणिमादिं जपेन्मनुम् ।
सिन्दूरवर्णसङ्काशं योगपट्टसमन्वितम् ।।९४ ।।
लम्बोदरं महाकायं मुखं करिकरोपमम् ।
अणिमादिगुणैर्युक्तं चाष्टबाहुं त्रिलोचनम् ।।९५ ।।
विजयाविधृतं लिङ्गं मोक्षकामाय पूजयेत् ।
ॐ अं गणपतये स्वाहा । ॐ लं गणपतये स्वाहा ।
ॐ व्यां गणपतये स्वाहा । ॐ प्रां गणपतये स्वाहा ।।९६ ।।
ॐ मं गणपतये स्वाहा । ॐ ईं गणपतये स्वाहा ।
ॐ वं गणपतये स्वाहा । ॐ कां गणपतये स्वाहा ।।९७ ।।
अनेनैव हि मन्त्रेण पूजयेद् गणनायकम् ।
अणिमाद्यष्टमन्त्रैश्च अष्टबाहुं प्रपूजयेत् ।।९८ ।।
अं अणिम्ने नमः स्वाहा । लं लघिम्ने नमः स्वाहा ।
प्रां प्राप्त्यै नमः स्वाहा । प्रां प्राकाम्याय नमः स्वाहा ।।९९ ।।
मं महिम्ने नमः स्वाहा । ईं ईशित्वाय नमः स्वाहा ।
वं वशित्वाय नमः स्वाहा ।
कां कामावसयितायै नमः स्वाहा ।।१०० ।।

एवं संपूज्य विधिवत् सस्त्रीका मुनयो जये ।
भोजयित्वा विधानेन नानामिष्टफलादिभिः ॥१०१ ॥

परमान्नपिष्टकै रम्यैर्दधिदुग्धघृतादिभिः ।
दिव्यगन्धमयैः पुष्पैर्दिव्यगन्धप्रलेपनैः ॥१०२ ॥

मूषिकं पूजयामास नानामिष्टफलादिभिः ।
ॐ मँ मूषिकाय गणाधिपवाहनाय धर्मराजाय स्वाहा ॥१०३ ॥
इत्यनेनैव मन्त्रेण मूषिकं पूजयेत् सदा ।
अनेनैव विधानेन तुष्टोऽभूच्छिवनन्दनः ।
हे विप्राश्च सपत्नीकाः किमिच्छथ वरञ्च मे ॥१०४ ॥

विप्रा ऊचुः —

देहि मे परमं ज्ञानं तन्त्रं यच्छिवभाषितम् ।
एवं भक्ष्याणि द्रव्याणि नित्यं दास्यामि ते विभो ॥१०५ ॥
मुनेर्वाक्यं ततः श्रुत्वा तत्तन्त्रं मुनये ददौ ।
एवं तन्त्राणि सर्वाणि विलिख्य विनिवेदयेत् ॥१०६ ॥
पूजेयुः प्रत्यहं विप्रा यन्त्रे मूर्तिं विलिख्य वै ।
सर्वाङ्गसुन्दरीं मूर्तिमष्टबाहुसमन्विताम् ॥१०७ ॥
त्रिकोणमध्ये तन्मूर्तिं हेरम्बयन्त्रनिर्णयम् ।
श्रुत्वा जया विजया वाक्यं हर्षगद्गदमानसः ॥१०८ ॥
(एतास्ते) एतत्ते कथिताः सर्वा जयायै विजया तदा ।
पूजितं येन विधिना लिङ्गं तस्माद् द्विजोत्तमैः ॥
तत्सर्वं कथ्यतां देव यदि तेऽस्ति दया मयि ॥१०९ ॥

देव उवाच—

ॐ नमो लिङ्गाय महते अणिमादिगुणैर्युते ।
पाद्यादीनि क्रमाद् दद्यान्मन्त्रेणानेन भक्तितः ॥११० ॥

खर्जूरार्द्धासनं लिङ्गं कन्दर्पज्वरनाशनम् ।
अणिमादिगुणैर्युक्तं ब्रह्मोपेन्द्रादिसेवितम् ॥१११ ॥

यथामन्त्रं प्रवक्ष्यामि जप्त्वा भोगमयो भवेत् ।
मायाबीजं समुद्धृत्य लिङ्गाय तदनन्तरम् ॥११२ ॥

पुनर्मायां समुद्धृत्य अष्टोत्तरशतं जपेत् ।
अष्टोत्तरशतं जप्त्वा शृङ्गारे मदनोपमः ॥११३ ॥

ततः परं प्रवक्ष्यामि स्त्रीमन्त्रं गुणशालिनम् ।
कामबीजं समुद्धृत्य भगरूपिणि पदं ततः ॥११४ ॥

चन्द्रिकाभं गतं वाममर्द्धबिन्दुसमन्वितम् ।
कथितमुभयोर्मन्त्रमुभयोः प्रीतिदायकम् ॥११५ ॥

मन्त्रहीने च या क्रीडा सा क्रीडा पशुवत् सदा ।
लिङ्गतत्त्वमविज्ञाय शिवलिङ्गं प्रपूजयेत् ॥११६ ॥

यथा तस्य वृथा पूजा गायत्रीरहितस्तथा ।
मनो बुद्धिः पुष्पयुतं तत्पदं शिवपूजने ॥११७ ॥

सपदं विलिखेच्छक्तिं वेदित्र्यस्रे च पूजकः ।
सपदं विलिखेच्छून्यं (सूर्य) लिङ्गं मूर्द्धनि यत्नतः ॥११८ ॥

तदैव शिवलिङ्गस्य ध्यानेनोक्तावयं भवेत् ।
जीवन्यासे तदा देवि निश्चयं नात्र संशयः ॥११९ ॥

अनेन विधिना भद्रे यः पूजयति शङ्करम् ।
स सम्यक् फलमाप्नोति सर्वपूजाफलं लभेत् ॥१२० ॥

स शून्यं पूजितं तेन जीवात्मा शुद्धतामियात् ।
ध्यानत्रयं विना देवि निष्फलं शिवपूजनम् ॥१२१ ॥

ध्यानत्रयं प्रवक्ष्यामि अत्यन्तगोपनं श्रृणु ।
शुक्लकृष्णारुणाभासां चतुर्बाहुधरां पराम् ॥
शुक्लाम्बरपरीधानां कटाक्षविशिखोज्ज्वलाम् ॥१२२ ॥
नानाभरणशोभाढ्यां मङ्गलां मङ्गलप्रदाम् ।
शङ्खेन्दुकुन्दसङ्काशां चित्रांशुकपरिच्छदाम् ॥१२३ ॥
शरच्चन्द्रप्रसन्नास्यां चित्रवेणीविराजिताम् ।
नानाभरणवेशाढ्यां लसत्कोकनदेक्षणाम् ॥१२४ ॥
चतुर्बाहुधरां दिव्यां ध्यायेच्छिवस्वरूपिणीम् ।
शरच्चन्द्रप्रतीकाशां कृष्णांशुकपरिच्छदाम् ॥१२५ ॥
द्विभुजां स्वर्णवर्णाढ्यां लसत्पद्मदलेक्षणाम् ।
ध्यायेज्ज्योत्स्नां महामायामणिमासिद्धिरूपिणीम् ॥१२६ ॥
अणिमाद्यष्टसिद्धीश्च रजःसत्त्वतमोगुणाः ।
ज्ञात्वा यः कुरुते देवि श्लोके श्लोके च योजनाम् ॥१२७ ॥
तदा फलमवाप्नोति पुराणस्य च नान्यथा ।
अष्टसिद्धपरिज्ञानं विना पुस्तकवाचनम् ॥१२८ ॥
यः करोति महामूर्खः कुक्कुरध्वनिवद् ध्वनिः ।
विना न्यासं महेशानि प्राणायामं विना तथा ॥१२९ ॥
शून्यं पूजनमात्रेण सर्वं याति पवित्रताम् ।
लिङ्गतत्त्वमविज्ञाय शिवलिङ्गं प्रपूजयेत् ॥१३० ॥
सा पूजा मृत्तिकापूजा जीवात्मनोऽपवित्रता ।
शिवशक्तिमयं लिङ्गं निर्माणसदृशं फलम् ॥१३१ ॥
मनोबुद्धिमयं लिङ्गं सह दृष्ट्वा भवेद् यदा ।
सदृशं कथ्यते तेन मुनिभिस्तन्त्रकोविदैः ॥१३२ ॥
ध्यात्वा शिवं महादेवं श्वासं पुष्पे विनिक्षिपेत् ।
तत्पुष्पं परमेशानि शिवाय विनिवेदयेत् ॥१३३ ॥

तदैव सहसा जीवः शुद्धो भवति पूजने ।
तदैव सहसा जीवो लोचनस्य च गोचरः ॥१३४ ॥

मुकुरेऽपि यथा भद्रे स्थूलदेहनिरीक्षणम् ।
शिवलिङ्गं तथा भद्रे आत्मनैवात्मदर्शनम् ॥१३५ ॥

घृतपूर्णे ताम्रभाण्डे पलैर्द्वादशनिर्मिते ।
प्रत्येकं पात्रे निःक्षिप्य शिवलिङ्गं समर्चयेत् ॥१३६ ॥

सम्पूज्य विधिवद् भक्त्या वाक्यं कृत्वा च पूजने ।
कोटिलिङ्गस्य पूजायाः सम्पूर्णफलमाप्नुयात् ॥
अनेन विधिना कृत्वा कोटिपूजाफलं लभेत् ॥१३७ ॥

श्रीदेव्युवाच —

देवदेव महादेव संसारार्णवतारक ।
यदि न पूजने शक्तो युगभेदक्रमेण च ॥१३८ ॥

लक्षलिङ्गं समभ्यर्च्य कोटिलिङ्गमथापि वा ।
यदि तस्य फलं व्यर्थं किं भविष्यति मे वद ॥१३९ ॥

श्रीदेव उवाच —

निर्माय द्वादशं लिङ्गं शुद्धस्वर्णेन सुन्दरि ।
तोलकं तोलकं कृत्वा दद्यादक्षरपारगे ॥१४० ॥

तदैव कोटिपूजायाः फलमाप्नोति पूजकः ।
निष्फलं जायते सर्वं जपपूजनवाचनम् ॥१४१ ॥

यथा तस्य भवेद् व्यर्थं शिवपूजां विना तथा ।
विफलं जायते सर्वं दिनकृत्यं दिने दिने ॥१४२ ॥

शिवशक्त्यात्मकं जीवं यः पश्यति स वैष्णवः ।
अनेन विधिनात्मानं यस्तु पश्यति तत्पदे ॥१४३ ॥

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
सर्वज्ञानमयः सोऽपि सर्वधर्ममयश्च सः ॥१४४ ॥

अनेन विधिना पूजा जायते परमात्मनः ।
यथा ज्ञानात्मनः पूजा पूजा हि चान्तरात्मनः ॥१४५ ॥

आत्मनैवात्मनः पूजा प्रथमं शिवपूजने ।
लिङ्गस्य दक्षिणे वामे विलिख्य कुसुमद्वयम् ॥१४६ ॥

परं ब्रह्म स्वयं लिङ्गं भवत्येव न चान्यथा ।
पूजनं शिवषट्कानां अनेन विधिना भवेत् ॥१४७ ॥

आत्मान्तरात्मा परमज्ञानात्मा षट्शिवास्तथा ।
सम्पूज्य प्रथमं भद्रे ततोऽष्टौ सम्प्रपूजयेत् ॥
नित्यकर्मफलं प्राप्य काम्यकर्मफलं लभेत् ॥१४८ ॥

श्रीदेव्युवाच —

शव इत्यक्षरे ब्रह्मवाचकः प्रेतनिर्णयः ।
मङ्गलासहिता ज्योत्स्ना यदा भवति सुन्दरः ॥१४९ ॥

शिव इत्यक्षरो ब्रह्मवाचको ब्रह्मनिर्णयः ।
तदा शवो महादेवः शिवोऽभूत् सहसा प्रभो ॥१५० ॥

कृपया कथयेशान वर्णद्वयविनिर्णयम् ।
अज्ञात्वा वर्णद्वयं देवपूजनं शवपूजनम् ॥१५१ ॥

देव उवाच —

कलौ चतुर्गुणं कृत्वा यदि न पूजयेच्छिवम् ।
कोटिपूजाफलं हन्ति किं तस्य काम्यकर्मणि ॥१५२ ॥

ज्ञात्वा यः परमेशानि वर्णद्वयविनिर्णयम् ।
अन्यथा चाभवत् पूजा प्रेतवत् फलदायिनी ॥१५३ ॥

शिवरूपो महादेवः शक्त्या युक्तो भवेद् यदि ।
तदा प्रभवितुं शक्त ईश्वरः कार्यकारकः ॥१५४ ॥

शङ्खेन्दुकुन्दसङ्काशं शिवं कान्तमितीरितम् ।
दलिताञ्जनसङ्काशं संविशान्तमितीरितम् ॥१५५ ॥

पञ्चाशन्मातृकामध्ये तिस्रो वर्णा नगात्मजे ।
विषमा च हरो वर्णो मङ्गला च तथैव च ॥१५६ ॥

कोणविंशतिसंयुक्ता मङ्गलाश्च हरस्तथा ।
दशाष्टकोणसंयुक्ता विषमा कमलेक्षणा ॥१५७ ॥

विशेषं तत्र वक्ष्यामि तालव्यस्य च साधनम् ।
वामा ज्येष्ठा तथा रौद्री बिन्दुत्रयविनिर्मिता ॥१५८ ॥

वामासुसङ्गता रौद्री रौद्री ज्येष्ठासुसङ्गता ।
पञ्चभूतमयी नित्या मङ्गला षट्शिवात्मिका ॥१५९ ॥

वामासु संस्थितो ब्रह्मा विष्णुर्ज्येष्ठासु संस्थितः ।
रौद्रीषु संस्थितो रुद्रो गुणत्रयविनिर्णयः ॥१६० ॥

वामाज्येष्ठासन्धिशून्ये ईश्वरो गुणवर्जितः ।
रौद्रीज्येष्ठासन्धिशून्ये त्रिगुणश्च सदाशिवः ॥१६१ ॥

यः शिवः परमब्रह्म पञ्चशून्ये विजृम्भते ।
चतुष्कोणात्मके ऊर्ध्वे आत्मनः स्थितिनिर्णयः ॥१६२ ॥

अधोभागे चतुष्कोणे निवासश्चान्तरात्मनः ।
दक्षभागे चोर्ध्वकोणे परमात्मा वसेत् सदा ॥१६३ ॥

अधोभागे चतुष्कोणे ज्ञानात्मा निवसेद् ध्रुवम् ।
ऊर्ध्वरेखाद्वये देवि चतुष्कोणे मनःस्थितिः ॥१६४ ॥

सर्ववेत्ता सर्वगामी मनः सर्वत्र कथ्यते ।
दशैक-इन्द्रियाणाञ्च पञ्चभूतेषु संस्थितिः ॥१६५ ॥

पञ्चभूतेषु भूतानां स्थितिरेव न संशयः ।
विष्णुबिन्दुगता ज्योत्स्ना यदा भवति सुन्दरि ॥१६६ ॥

तदासि चञ्चलापाङ्गि कथ्यते तन्त्रदर्शिभिः ।
ईशित्वञ्च शिवः शक्तिर्मङ्गलान्ते भवेद् यदि ॥१६७ ॥

शिवेति कथ्यते नाम मुनिभिस्तन्त्रकोविदैः ।
वामा रजोगुणा नित्या तरुणादित्यसन्निभा ॥१६८ ॥

ज्येष्ठा सत्त्वगुणा नित्या शरच्चन्द्रप्रदीपिका ।
दलिताञ्जनसङ्काशा रौद्री तमोगुणा स्मृता ॥१६९ ॥

विषमा च हरे चैव भावनात् सिद्धिरुत्तमा ।
जायते नात्र सन्देहो गिरिजे नगनन्दिनि ॥१७० ॥

शिवशब्दपरिज्ञानं विना यः पूजयेच्छिवम् ।
तस्य छुरिकया जिह्वाकर्तनं पापमोचनम् ॥१७१ ॥

विष्णुर्बिन्दुगता ज्योत्स्ना अणिमा सत्त्वरूपिणी ।
मङ्गला कामवशीसिद्धिरीशित्वशिवरूपिणी ॥१७२ ॥

लघिमा प्राप्तिसिद्धिषु प्राकाम्या महिमा तथा ।
वशित्वञ्च तथा सिद्धिः पञ्चशून्ये विजृम्भते ॥१७३ ॥

ज्ञात्वा च परमेशानि वर्णद्वयस्य निर्णयम् ।
तदा फलमवाप्नोति पार्थिवस्य प्रपूजने ॥१७४ ॥

एतद्रहस्यं परमं सर्वपूजासु सम्मतम् ।
एतत्तत्त्वमविज्ञाय जपपूजां करोति च ॥
यथा तस्य वृथा पूजा गायत्रीरहितस्तथा ॥१७५ ॥

देव्युवाच —

हंसं निरञ्जनं नित्यं निर्विकारमकृत्रिमम् ।
हंसस्थानं महादेव कथयस्व दयानिधे ॥१७६ ॥

श्रीदेव उवाच —

अधोबिन्दुषु हंकार संकारमूर्ध्वबिन्दुषु ।
विभाव्य पूजयेदात्मा दशवर्णं महामनुम् ॥१७७ ॥
इति ते कथितमन्यद् भेदं परमगोपनम् ।
अनेन विधिना देवि लक्षलिङ्गं प्रपूजयेत् ॥१७८ ॥
युगभेदक्रमे भद्रे कलौ चतुर्गुणं भवेत् ।
त्रेतायां द्विगुणं चैव द्वापरे त्रिगुणं तथा ॥१७९ ॥
सम्पूज्य विधिवल्लिङ्गं परंब्रह्ममयो भवेत् ।
अतः परं प्रवक्ष्यामि गायत्र्यक्षरचिन्तनम् ॥१८० ॥
भूर्लोकश्च[१] तु भूःकारो भुवर्लोको भुवस्तथा ।
स्वःकारः सुरलोकश्च गायत्र्या आसनं स्मृतम् ॥१८१ ॥
परस्य ब्रह्मणो रूपं तकारं त्रिगुणात्मकम् ।
त्सकारं रसतत्त्वञ्च विकारो गन्ध[२] एव च ॥१८२ ॥
एवं तत्त्वं विजानीयाद्[३] गायत्र्याः सुविनिर्णयम् ॥

देव्युवाच —

योकारश्च तथाकाशो योकारो नासिका तथा[४] ।
तुकारस्य[५] तु मे देव सदर्थं कृपया वद ॥१८३ ॥

श्रीमहादेव[६] उवाच —

त्रयोदशस्वरः[७] शक्तिर्विसर्गान्तः[८] स्वरोपरि ।
त्रयोदशस्वराक्रान्तं वायुबीजं जपेत् ततः ॥१८४ ॥
वायुबीजं जपेद्[९] विद्वान् पापोच्चाटनकर्मणि ।
यो यो[१०] वर्णद्वयं भद्रे पापस्योच्चाटनं भवेत् ॥१८५ ॥

---

१. भूलोकं च-ङ. । २. उच्यते-ग. घ. । ३. गायत्रीषु विनिर्णयम्-ङ. ।
४. यदि-ग. घ. । ५. द्वयोर्योकारयोर्देव-ग. घ. । ६. श्रीदेव-ङ. ।
७. त्रयोदशस्वरः- ग. घ. । ८. विसर्गान्तम्- ग. घ. । ९. जपेच्चैव- ग. घ. । १०. वर्णद्वये-ग. घ. ।

वकारस्य च सन्दर्भे [१] पूर्वोक्तं वीरवन्दिते ।
पञ्चशीर्षा च गायत्री षट्कुक्षा [२] पञ्चदेवता ॥१८६ ॥
सांख्यायनसगोत्रा च षट्पदा [३] परिकीर्तिता ।
अनेनैव हि गायत्र्या आसम्यक् कथ्यते यतः ॥१८७ ॥
अत आचमनः ख्यातः कथ्यते तन्त्रदर्शिभिः ।
गायत्र्याचमनं कृत्वा गायत्रीं प्रजपेत् सुधीः ॥१८८ ॥
सम्यक्प्रकारभावेन नवशक्तिमयं जलम् ।
करस्थं मन्त्रमुच्चार्य निरीक्ष्य शिवरूपिणम् ॥१८९ ॥
आचमनाद्यान्ति पापानि प्राप्नोति पुण्यमक्षयम् ।
समन्त्रं सशिवं तोयमात्मतत्त्वमितीरितम् ॥१९० ॥
गायत्रीपानमात्रेण शब्दब्रह्ममयो भवेत् ।
विना पानं हि गायत्र्या गायत्रीजपनिष्फलम् ॥१९१ ॥
पूरकैकेन पानं स्याद् द्वितीयं कुम्भकैस्तथा ।
तृतीयं रेचकैः पानं गायत्रीपाननिर्णयम् ॥१९२ ॥
आत्मविद्याशिवैस्तत्त्वैस्तदेवाचमनं भवेत् ।
जपेत् सूर्यमुखो भूत्वा नास्ति दिङ्नियमः क्वचित् ॥१९३ ॥
गायत्रीं प्रजपेन्नित्यं त्रिसन्ध्यं नात्र संशयः ।
अशौचे तु महेशानि गायत्रीं मनसा स्मरेत् ॥१९४ ॥
गायत्री बहुरूपा च त्रिसन्ध्यं ध्यानमेव च ।
क्षत्रादौ यदि देवेन्द्र शस्यते प्रणवद्वयम् ।
तन्मे कथय योगेन्द्र प्रणवस्थाननिर्णयम् ॥१९५ ॥

देव उवाच —

यत्कारान्तेषु भूरादौ प्रणवं क्षत्रवैश्ययोः ।
प्रणवैः पुटितं कृत्वा प्रतिवर्णं पृथक् पृथक् ॥१९६ ॥

---

१. कथितम्- ग.घ. । २. पञ्चकुक्षी- ग.घ. । ३. षट्पादा- ग.घ. ।

अष्टोत्तरशतं जप्त्वा सर्वपापक्षयो भवेत्।
प्रणवाद्या व्याहृतिः स्यादजपा भूर्भुवःस्वरः ॥१९७॥

आद्यन्ते प्रणवं दत्त्वा गायत्रीं प्रजपेद् द्विजः।
चतुर्वर्गप्रदा विद्या चतुर्विद्यात्मिका सदा ॥१९८॥

वामा धर्मप्रदा बिन्दुर्ज्येष्ठा अर्थप्रदा तथा।
रौद्री कामप्रदा बिन्दुः श्रीबिन्दुर्मोक्षदायिनी ॥१९९॥

महेशवदनं बिन्दुः श्रीविष्णोर्हृदयं तथा।
समनुः परमाराध्या संयुक्ता ब्रह्मबिन्दुना ॥२००॥

मोक्षदाता च श्रीबिन्दुश्चतुर्बिन्दुविनिर्णयम्।
प्रातरादित्यसङ्काशां चतुर्बाहुसमन्विताम् ॥२०१॥

हंसासनसमासीनामृग्वेदे समुदाहृताम्।
मध्याह्ने चन्द्रसङ्काशां गरुडासनसंस्थिताम् ॥२०२॥

चतुर्भुजां कृष्णवर्णां विकचोत्पलधारिणीम्।
यजुर्वेदोदितां ध्यात्वा प्रजपेत् परमाक्षरीम् ॥२०३॥

वृषासनसमासीनां चतुर्बाहुसमन्विताम्।
सायाह्ने वरदां घोरां प्रतिवक्त्रे त्रिलोचनाम् ॥२०४॥

पञ्चाशन्मातृकावर्णं[१] पञ्चाशत्स्थानसन्धिषु।
विन्यसेद् यत्नतो यस्मात् तस्मान्न्यासेति[२] कथ्यते ॥२०५॥

शोधनं पञ्चभूतानां इन्द्रियाणाञ्च शोधनम्[३]।
क्रियते यत्नतो यस्माद् भूतशुद्धिः प्रगीयते ॥२०६॥

इडया पूरयेद् वायुं शक्तिभिः षोडशैः स्वरैः।
ककारादिशिवैर्वर्णैः कुम्भकं कुण्डलीमुखे ॥२०७॥

---

१. वर्णान्- ग.। २. न्यासः प्रकथ्यते- ग. घ.। ३. तथैव च- ग. घ.।

यस्मादुत्पद्यते वायुस्तत्रैव वायुधारणम् ।
रेचके च[१] शिवार्द्धेन संत्यजेत् पिङ्गलापथे ॥२०८ ॥
विश्वासात्[२] प्राणदेवस्य प्राणायामेति [३]कथ्यते ।
शिवशक्तिमयो जीवस्तदैव सहसा भवेत् ॥२०९ ॥
वर्णभेदमविज्ञाय यदि सन्ध्यामुपास्महे[४] ।
वृथा[५] भवति सा सन्ध्या न सन्ध्या फलमाप्नुयात्[६] ॥२१० ॥
वर्णानां चिन्तनं ध्यानं सम्यक् पापप्रणाशनम् ।
त्रिसन्ध्यं कुरुते यस्मात् तस्मात् सन्ध्येति कथ्यते ॥२११ ॥
मूलादिब्रह्मरन्ध्रान्तं गीयते मननाद् यतः ।
मननात् त्राति षट्चक्रं गायत्री तेन कीर्तिता[७] ॥२१२ ॥
गायत्र्या रहितो[८] विप्रो घोरायोनिषु[९] जायते ।
यस्य भूपस्य हत्यायां सङ्ग्रामं मृगयां विना ॥२१३ ॥
जायते अधमा[१०] बुद्धिर्नरव्याघ्रः स एव हि ।
अन्ते स परमेशानि व्याघ्रशूकरयोनिषु ॥२१४ ॥
जायते नात्र सन्देहो मम वाक्यं सुनिश्चितम् ।
भुक्त्वा च विविधान् मांसान् विष्ठाश्च विविधास्तथा ॥२१५ ॥
हत्याञ्च ब्राह्मणादीनां कृत्वा पापेषु मज्जति ।
निष्कृतिर्नास्ति तस्यापि तस्मात् पापात् कदाचन ॥२१६ ॥
नरव्याघ्रस्य देशे वै योजनाभ्यन्तरे स्थिताः ।
ब्राह्मणाः कृतचण्डाला गायत्रीरहिता यथा[११] ॥२१७ ॥

---

१. रेचकन्तु- ग.घ.। २. विश्रमात्- ग.घ.। ३. प्राणायामः प्रकथ्यते- ग.घ.।
४. उपासते- ग.घ.। ५. व्यर्था- ग.घ.। ६. फलभागिनः- ग.घ.।
७. कथ्यते- ग.घ.। ८. गायत्रीरहितः- ग.घ.।
९. घोराद्यानि व्यजायत (जायते)- ख.ङ.। १०. चाधमा- ग.घ.। ११. सदा- ग.घ.।

अन्ते च ब्राह्मणास्ते वै व्याघ्रशूकरयोनिषु ।
जायन्ते नात्र सन्देहः किं तेषां धर्मकर्मणि[1] ॥२१८ ॥

नरव्याघ्रस्य यो विप्रः[2] शान्तिस्वस्त्ययनं चरेत् ।
ते विप्राः कृतचण्डालाः प्राप्नुयुस्तेऽपि तद्गतिम् ॥२१९ ॥

किं तस्य[3] ब्रह्मजापेन सन्ध्यायां किं प्रयोजनम् ।
सर्वास्तेषां वृथा देवि कृतचाण्डालवत्क्रियाः ॥२२० ॥

[4]पुराणानुयायिनं गीतं श्रुत्वा शूद्रमुखाद् द्विजः ।
तत्क्षणाद् याति शूद्रत्वं शूद्रश्चाण्डालतां व्रजेत् ॥२२१ ॥

आगमं परमं तन्त्रं पञ्चाशन्मातृकाक्षरम् ।
पञ्चाशन्मातृकाव्याख्यां यो जानाति द्विजोत्तमः ॥२२२ ॥

आचार्यः स च विज्ञेयः सर्वतन्त्रेषु निर्णयः ।
एतत्तत्त्वमविज्ञाय आचार्यः स कथं भवेत् ॥२२३ ॥

एतत्तत्त्वमविज्ञाय यथा शूद्रत्वमर्हति ।
गायत्रीरहितो विप्रस्तथैव शूद्रतां व्रजेत् ॥२२४ ॥

सन्ध्याध्यानं प्रवक्ष्यामि सावधानेन[5] संश्रृणु ।
विना ध्यानं महेशानि न सन्ध्याफलमाप्नुयात् ॥२२५ ॥

नासाग्रे लोचनं न्यस्य ध्यायेद् ब्रह्मस्वरूपिणीम् ।
प्रातरादित्यसङ्काशां मध्याह्ने शङ्खसन्निभाम् ॥२२६ ॥

सायाह्ने [6]मरकताभासां चतुर्बाहुसमन्विताम् ।
पट्टाम्बरपरीधानां शङ्खकङ्कणमण्डिताम् ॥२२७ ॥

मुक्ताहारलतोपेतां कुटिलालकभूषिताम् ।
कटाक्षविशिखोपेतां समुन्नतपयोधराम् ॥२२८ ॥

---

१. धर्मकर्मसु- ग.घ. ।   २. ये विप्राः - ग.घ. ।   ३. किं तेषां प्रजपनात्- ग.घ. ।
४. पुरानुयाजिनो - ङ. ।   ५. सावधानाऽवधारय- ग.घ. ।   ६. मरकतभासाम्- ङ ।

शरदिन्दुप्रसन्नास्यां विचित्रकबरीयुताम् ।
दिव्यगन्धप्रलिप्ताङ्गीं दिव्यमाल्यपरिष्कृताम्[१] ॥२२९ ॥

दाडिमीबीजसदृशदशनद्युतिसूज्ज्वलाम्[२] ।
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥२३० ॥

तनुदीर्घाङ्गुलीमा[३] सन्नखचन्द्रविराजिताम् ।
ब्रह्मविष्णुस्तुतां देवीं रुद्रादिपरिवन्दिताम् ॥२३१ ॥

षट्चक्रसंस्थितां दिव्यां परमानन्दरूपिणीम् ।
एवं ध्यात्वा प्रसन्नात्मा सन्ध्यां कुर्यात् फलाप्तये ॥२३२ ॥

॥ [४]इति आगमसन्दर्भे ज्ञानदर्पणे[५] देवदेवीसंवादे गायत्रीतन्त्रस्य
प्रथमः परिच्छेदो ब्राह्मणः पटलः ॥



१. परिच्छदाम्- ग. घ. । २. शोभिताम्- ग. घ. । ३. भासाम् भास्वन्-ग. घ. ।

४. इत्युत्तराम्नाये पादोनलक्षग्रन्थे गुरुतन्त्रे ज्ञानदीपिनीतन्त्रान्तर्गतगायत्रीतन्त्रे देवदेवीसंवादे प्रथमः पटलः - ग. घ. ।

५. ज्ञानदर्शने-ग. घ. ।

## ॥अथ द्वितीयः पटलः ॥

श्रीदेव उवाच —

भूःकारश्चैव[1] तु भूर्लोको भुवर्लोको भुवस्तथा।
स्वःकारः सुरलोकश्च गायत्र्याः स्थाननिर्णयः ॥१ ॥

इच्छाशक्तिश्च भूःकारः क्रियाशक्तिर्भुवस्तथा।
स्वःकारो ज्ञानशक्तिश्च भूर्भुवःस्वःस्वरूपकः ॥२ ॥

परत्रयात्मकं भद्रे वर्णत्रयमिदं सदा।
मूलपद्मञ्च भूर्लोको विशुद्धञ्च भुवस्तथा ॥३ ॥

सुरलोकः सहस्रारो [2]गायत्रीस्थाननिर्णयम् ॥

श्रीदेव्युवाच —

नित्यं जपति आत्मीयं[3] जीवात्मा[4] ब्राह्मणः प्रभो।
कथमावाहनं तस्याः समर्पणमथापि वा ॥४ ॥

विसर्जनं कथं तस्याः कृपया कथय प्रभो।
गायत्री या महादेव सैव स्याद् ब्राह्मणः स्वयम् ॥५ ॥

तस्या विसर्जने[5] विप्रस्तत्क्षणात् शूद्रतां व्रजेत्।
रूप्याद्यात्मकजीवात्मा गायत्रीतत्त्वमेव तत् ॥६ ॥

अतोऽत्र कथ्यते आत्मा मुनिभिस्तत्त्वदर्शिभिः।
गायत्र्यास्तुल्यमाचारं नित्यं जीवस्य आत्मनः ॥७ ॥

कथ्यते तेन आत्मीयमात्मनस्तत्त्वदर्शिभिः।
[6]महेश्वरमुखोद्भूता विष्णोर्हृदयसम्भवा ॥८ ॥

---

१. भूःकारञ्चैव- ग. घ.। २. स्थाननिर्णयम्- क.। ३. आत्मानम्- ग. घ.।

४. आत्मना- ग. घ.। ५. विसर्जनादेव ब्राह्मण्यादेव हीयते- ग. घ.।

६. महेश्वरवदनोद्भूता- ग. घ.।

[१] आत्मन्यवस्थितिस्तस्याः कथं तस्या विसर्जनम् ।
गायत्र्या सह योगेन आत्मा[२] जीवोऽपि ब्राह्मणः ॥९ ॥

तस्या विसर्जनं देव यदि न दीयते द्विजैः[३] ।
अङ्गहीना[४] तदा सन्ध्या न सन्ध्याफलमाप्नुयात् ॥१० ॥

[५] आवाहनं यथा अङ्गं ध्यानञ्च स्मरणं यथा ।
तथा अङ्गं महादेव समर्पणविसर्जनम् ॥११ ॥

पञ्चाङ्गं सर्वविद्यायाः सर्वशास्त्रे प्रतिष्ठितम्[५] ।
पञ्चाङ्गोपासिता विद्या गायत्री ब्रह्मपूजिता ॥१२ ॥

पञ्चाङ्गोपासनेनैव गायत्रीं न जपेद् यदि ।
दिनकृत्यं भवेत्तस्य शूद्रवद् वृषभध्वज ॥१३ ॥

आवाहनं यत्र यत्र तत्र तत्र विसर्जनम् ।
यदि न विसर्जनं तस्या ध्यानं तस्या भवेद् वृथा ॥१४ ॥

जायते नाम सन्देहो महेशसूत्रसम्मतम् ।
त्वमेव संशयच्छेत्ता संशयं छिन्धि मे प्रभो ॥१५ ॥

श्रीदेव उवाच —

यस्मादागमनं तस्यास्तत्रैव गमनं प्रिये ।
यत्र तिष्ठति गायत्री तत्रैव आत्मनः स्थितिः ॥१६ ॥

यथा विष्णुस्तथा आत्मा गायत्रीसहिता तथा[६] ।
यथात्मा च तथा रुद्र आत्मा ब्रह्मसमन्विता[७] ॥१७ ॥

ब्राह्मणानां त्रयो नित्यं प्रणवं भूर्भुवःस्वरः ।
प्रजपेद् यदि विप्रात्मा गायत्र्याः फलमाप्नुयात् ॥१८ ॥

---

१. आत्मन्येव स्थितिः- ग. । २. आत्म- ग. । ३. प्रभो- ग. ।
४. प्रतिष्ठिता- ङ. । ५. आवाहनमित्यारभ्य छिन्धि मे प्रभो इत्यन्तं- ग. नास्ति ।
६. सदा- ग. । ७. सनातनः- ग. ।

स्त्री[1] चैव पुरुषस्याङ्गं स्त्रियश्चाङ्गं[2] पुमान् सदा ।
अजपासहिता[3] आत्मा स्त्रीणाञ्चैव विशेषतः ॥१९ ॥

अजपा ब्राह्मणी तत्र गायत्री ब्राह्मणः[4] स्वयम् ।
यदि शक्तिश्च गायत्री तत्रापि ब्राह्मणः शिवः ॥२० ॥

वर्णव्याप्तिस्थितो ब्रह्मा शिवः परमकारणः ।
गायत्र्या धारणाशक्तिर्ब्रह्माणी[5] भूर्भुवःस्वरः ॥२१ ॥

[6]पुरुषस्तत्र गायत्री शिवः परमकारणम् ।
[7]शेते निरञ्जनो देवः पञ्चाशन्मातृकापुरे ॥२२ ॥

अन्तर्यामी जगत्स्वामी पुरुषस्तेन कथ्यते ।
प्रकृष्टवचनं प्रश्च सृष्टिश्च कृतिरुच्यते ॥२३ ॥

प्रकृतिः कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः ।
प्रकृत्या सह योगेन ब्रह्माण्डं कोटिकोटिशः ॥२४ ॥

शक्तो भवति सर्वत्र शक्तिस्तेनैव कथ्यते ।
सम्पूज्य पार्थिवं लिङ्गं नित्यं भक्तियुतो नरः ॥२५ ॥

शक्तिञ्च पूजयेत्तस्मिन्नावाह्य विधिपूर्वकम् ।
पूजनात् फलमाप्नोति अधिकं अधिकं यथा[8] ॥२६ ॥

एवं स्त्रीसंसर्गतो विप्रो गायत्र्याः फलमाप्नुयात् ।
इति भेदं महेशानि षट्चक्रे परिचिन्तयेत् ॥२७ ॥

विशेषञ्चात्र वक्ष्यामि अतिगुह्यं शृणु प्रिये ।
कृते त्रेतायुगे भद्रे द्वापरे प्रणवत्रयम् ॥२८ ॥

---

१. स्त्रियश्च- ग. । २. स्त्रिया अङ्गं- ख. ग. ङ. । ३. अजपासहितो ह्यात्मा- ग. ।
४. सदा- ग. घ. । ५. ब्राह्मणी- ख. ग. । ६. ब्राह्मणस्तत्र- ग. ।
७. शेत इत्यारभ्य कथ्यत इत्यन्तं- ग. नास्ति । ८. अधिकञ्चाधिकं यथा- ग. घ. ।

अशुद्धाः[१] शूद्रकर्माणो[२] ब्राह्मणाः कलिसम्भवाः ।
प्रणवैः पुटितं कृत्वा प्रतिवर्णं पृथक्पृथक् ॥२९ ॥

अष्टोत्तरशतं जप्त्वा एकधा वापि सुन्दरि ।
प्रणवत्रयसंयुक्तां गायत्रीं प्रजपेत्ततः[३] ॥३० ॥

गायत्र्याः फलमाप्नोति अन्यथारण्यरोदनम् ।
युगे युगे तथा राजा वैश्यश्चैव युगे युगे ॥३१ ॥

प्रणवद्वयसंयुक्तमष्टोत्तरशतं जपेत् ।
ब्राह्मणे क्षत्रिये वैश्ये विशेषमिति निश्चयम्[४] ॥३२ ॥

गायत्री च यथा देवि महाविद्या तथा प्रिये ।
[५]विद्यां वा उपविद्यां वा प्रणवैः पुटितां कलौ ॥३३ ॥

जप्त्वा सिद्धिमवाप्नोति तदृते विफलं भवेत् ।
[६]परं ब्रह्ममयं क्षेत्रं रेतःशोणितसंयुतम् ॥३४ ॥

निरीक्ष्य प्रविशेदात्मा राजते क्षेत्रमध्यतः ।
अतोऽत्र कथ्यते राजा क्षत्रियस्तेन कथ्यते ॥३५ ॥

एवं निरीक्ष्य जीवात्मा क्षेत्रमध्ये विशेद् यतः[७] ।
ज्ञानात्मरहितो यस्माद्वैश्यस्तेनैव कथ्यते ॥३६ ॥

रेतःशोणितनिर्माणं शूद्राण्या गर्भपञ्जरे ।
दुर्गत्या प्रविशेदात्मा गायत्रीरहितस्थले ॥३७ ॥

ज्ञानात्मरहितो यस्मात् शूद्रस्तेनैव कथ्यते ।
ब्राह्मणक्षत्रवैश्यानां क्षेत्रं ब्रह्ममयं सदा ॥३८ ॥

---

१. अशूद्राः- ग. घ. । २. वैश्यकर्माणो- ग. घ. । ३. प्रजपेत्तु यः- ग. घ. ।
४. विशेष इति निश्चितम्- ग. घ. । ५. विद्या वा उपविद्या वा प्रणवैः पुटितं कलौ- ग. घ. ।
६. एवम्- ग. घ. । ७. विशेषतः- ग. ।

गायत्री परमं ब्रह्म सततं शूद्रवर्जितम् ।
[१]कृते त्रेतायुगे भद्रे द्वापरे च तथैव च ॥३९ ॥

ब्राह्मणक्षत्रवैश्यानां निकटे नापि तत्स्थितिः ।
स च शूद्रमयो विप्रः कलिकाले च भारते ॥४० ॥

ब्राह्मणाः शूद्रकर्माण अत एव कलौ युगे ।
नापितोऽपि द्विजं त्यक्त्वा नानाजातिमुपासते[२] ॥४१ ॥

॥ इत्यागमसन्दर्भे ज्ञानदर्पणे ब्राह्मणोल्लासे गायत्रीतन्त्रस्य
द्वितीयो ब्राह्मणपटलः ॥



१. अत्रैव पटलसमाप्तिः- ग. घ. दृश्यते ।     २. उपास्महे- ख. ङ. ।

## ॥अथ तृतीयः पटलः ॥

[१]श्रीदेव्युवाच —

याज्ञवल्क्ये महादेव प्रणवद्वयमीरितम् ।
इति मे संशयं छिन्धि कृपया परमेश्वर ॥१ ॥

श्रीदेव उवाच —

प्रणवादिव्याहृतिः स्यादजपा भूर्भुवःस्वरः ।
तकारादावकारान्ते प्रणवं त्रिगुणं ततः ॥२ ॥

गायत्री प्रणवश्चान्ते तकारेणानुकृष्यते ।
आद्यन्ते प्रणवं व्यक्तं याज्ञवल्क्यस्य सम्मतम् ॥३ ॥

प्रशस्तं क्षत्रवैश्येषु न च विप्रे कदाचन ।
प्रशस्तं ब्राह्मणे नित्यं प्रणवत्रयसंयुतम् ॥४ ॥

मध्ये च प्रणवं गुप्तं चकारानुमतं प्रिये ।
चकारेण च इत्यस्य कृष्यते प्रणवत्रयम् ॥५ ॥

श्रीदेव्युवाच —

प्रणवव्याहृतिभ्याञ्च गायत्र्या त्रितयेन च ।
प्रणवैकं स्मृतिमतं तत् कथं प्रणवद्वयम् ॥६ ॥

प्रणवादिव्याहृतिः स्यादजपा भूर्भुवःस्वरः ।
प्रणवोक्त्या द्वयोक्त्या च निर्णयं प्रणवत्रयम् ॥७ ॥

एका[२] दण्डी ब्राह्मणी शक्तिर्द्वितीयं शिवमेव च ।
प्रथमं प्रणवे सूत्रे वह्निशक्तिर्द्वितीयके ॥८ ॥

तृतीये भास्करशक्तिः सोमशक्तिश्चतुर्थके ।
पितृदेवः पञ्चमे सूत्रे षष्ठसूत्रे प्रजापतिः ॥९ ॥

---

१. देव्युवाचेत्यारभ्य विनिर्णयमित्यन्तं- ग.घ.नास्ति । २. एकदण्डी- ख. ।

वासुदेवः सप्तमे सूत्रे नीलकण्ठोऽष्टमे तथा ।
नवमे सर्वदेवस्तु नवसूत्रविनिर्णयम् ॥१० ॥
नित्यं नवगुणं सूत्रं प्रणवत्रयसंयुतम् ।
प्रणवद्वयसंयोगे कथं नवगुणं भवेत् ॥११ ॥

[१]श्रीदेव उवाच —

प्रणवत्रयमित्युक्त्वा ग्रन्थिं दत्त्वा द्विजोत्तमः ।
दद्यात् क्षत्रियवैश्येषु तदा नवगुणं भवेत् ॥१२ ॥
वामकाये ब्राह्मणस्य सदा नवगुणस्थितिः ॥

श्रीदेव्युवाच —

तत् कथं क्षत्रिये वैश्ये सूत्रं नवगुणं भवेत् ।
वामकायेऽथ[२] विप्राणां क्षत्रवैश्ये तथैव हि ॥१३ ॥
वामकाये सदा शक्तिर्विद्यते न च दक्षिणे ।
त्रिदण्डेन[३] च संयुक्तं यज्ञसूत्रं यथा तथा ॥१४ ॥
ब्राह्मणी एकदण्डी च द्वितीयं ब्राह्मणः स्मृतः ।
ब्रह्मादिदेवतावृन्दैर्यज्ञसूत्रं[४] यथा प्रिये ॥१५ ॥
सम्पूज्य संस्थिता तत्र अनिशं सुरपूजिते[५] ।
[६]यज्ञोपवीतं परमं नित्यं दर्भसमन्वितम् ॥१६ ॥
[७]कुण्डलिनी महाबिन्दुः हंसोपरि सुशोभनम् ।
हंसं तुरीयं चार्वङ्गि निर्विकारं निरञ्जनम् ॥१७ ॥

---

१. वामकाये ब्राह्मणस्य सदा नवगुणस्थितिः ।
वामकाये तेन विप्रः कथ्यते तत्त्वदर्शिभिः ॥— ग.घ. अधिकः पाठः ।

२. वामकाये यथा विप्रः क्षत्रो वैश्यस्तथैव हि- ग.घ. अधि. पाठः । ३. त्रिदण्डी द्वय- ग.घ. ।

४. सूत्रं नवगुणात्मकम्- ग.घ. । ५. सुरवन्दिते- ग.घ. ।

६. यज्ञोपवीतं परमं पवित्रं तेन कथ्यते- ग.घ. अधिकः पाठः ।

७. या कुण्डलिनी बिन्दुर्ब्रह्मयोनि हंसोपरि बिन्दुनावाहनं तस्यां शेषबिन्दौ समर्पणं मध्यबिन्दौ बिन्दुमध्ये सुभावना- ग.घ. अधि. पाठः ।

शिवरूपो हकारस्तु शक्तिः स परिकीर्तितः ।
हकारस्थोऽपि यो बिन्दुर्बिन्दुना जायते स च ॥१८ ॥
बिन्दुना जायते बिन्दुर्गायत्री बिन्दुना भवेत् ।
गायत्र्या जायते सर्वं ब्रह्माण्डं कोटिकोटिशः ॥१९ ॥
हंसं तुरीयं मनसि विभाव्य प्रजपेन्मनुम् ।
हंसे तुरीये चार्वङ्गि न च आवाहनादिका[1] ॥२० ॥
गायत्र्यात्मकप्रणवे बिन्दौ कुर्यादावाहनादिकाम् ।
निकारान्ते वायुबीजे अनुस्वारेषु भावना ॥२१ ॥
परमाणुः सूक्ष्मतनुः सर्वव्यापी शिवो विभुः ।
प्रकृतिः कुण्डलीस्वारः सर्वव्यापीति चाम्बिका ॥२२ ॥
अनुसूक्ष्मा स्वारसूता स्वारसूक्ष्मा गता सदा ।
अनुस्वारः कथ्यते [2]तैर्मुनिभिस्तन्त्रदर्शिभिः ॥२३ ॥
सर्वं बिन्दुगतं ह्येतद् ब्रह्माण्डं कोटिकोटिशः ।
व्यापकत्वादितत्त्वाच्च बिन्दुस्तेनैव कथ्यते ॥२४ ॥
ज्येष्ठा रौद्री स्थितिकृती बिन्दुद्वयविनिर्मितम् ।
नित्यं हि विगतः सर्गः सर्गश्च सृष्टिवाचकः ॥२५ ॥
अष्टकालात्मको नित्यतमः सत्त्वात्मको विभुः ।
या नित्या प्रकृतिर्बिन्दुरनन्यस्त्रयनिर्णयः ॥२६ ॥
नास्ति बिन्दोः परं तत्र तत्त्वं तेन तदीरितम् ।
अत एव हि सर्वत्र विसर्गेत्यभिधीयते ॥२७ ॥
अन इत्यक्षरं ब्रह्म शब्दः प्रकृतिकुण्डली ।
न्यकारः प्रत्ययाकारा नित्या श्रीपरकुण्डली ॥२८ ॥
अनन्यशक्तिमासाद्य आविरासीत् शिवो विभुः ।
अनन्यकुण्डली शक्तिः परस्य ब्रह्मणो गतिः ॥२९ ॥

---

१. आवाहनादिकाः- ख.। २. ते- ङ.।

कुण्डल्याः परमब्रह्म गतिर्वेदेषु निर्णयः ।
अन्तर्यामी जगत्स्वामी सर्वव्यापी शिवो विभुः ॥३० ॥
शरीरं परमं ब्रह्म शरीरं तस्य कुण्डली ।
अनन्यं हि विना ब्रह्म कुत्रापि नास्ति सुन्दरि ॥३१ ॥
अनन्यपूजनाद् ध्यानादाविरासीत् सनातनः ।
अन्योऽन्य आश्रयाद् वेदे अनन्यमिति कथ्यते ॥३२ ॥
पुनः पुनः पटोक्त्या च आगमे नास्ति दूषणम् ।
बिन्दुनावाहनं तस्याः शेषबिन्दौ विसर्जनम् ॥३३ ॥
समर्पणं मध्यबिन्दौ बिन्दुमध्येषु भावना[१] ।
ध्यानञ्च भावना बिन्दौ इति पञ्चाङ्गनिर्णयम् ॥३४ ॥
निकारान्ते स्थिता घोरा अनुस्वारसमन्विता ।
भावना बिन्दुमध्येषु नास्ति किञ्चिद् विचारणा ॥३५ ॥
महामरकताभासा वायुबीजमितीरिता ।
घोरचन्द्रप्रतीकाशा शमनाकारनिर्णयम् ॥३६ ॥
निकारान्ते वायुबीजस्वरूपा पुष्पशोभिता ।
प्रथमप्रणवे वामा ज्येष्ठा[२] मध्ये च वैष्णवी ॥३७ ॥
तथैव शेषप्रणवे रौद्री संहारकारिणी ।
गायत्री परमब्रह्म दशबिन्द्वात्मिका[३] सदा ॥३८ ॥
वायुबीजे[४] समारूढा श्रीबिन्दौ भावना सदा ।
अत एव हि गायत्री सृष्टिस्थितिलयं[५] क्रमात्[६] ॥३९ ॥

---

१. सुभावना- ग. घ. ।  २. ज्येष्ठ-ग. ।  ३. चतुर्बिन्द्वात्मिका- ग. ।
४. विसर्गान्तस्वरारूढं- ग. ।  ५. सृष्टिस्थितिलयात्मिका- ग. ।
६. प्रथमा त्र्यक्षरा सृष्टिर्द्वितीया स्थितिरेव च ।
तृतीया प्रलयकाले सृष्टिस्थितिलयक्रमात् ॥ ग. अधिकःपाठः ।

रेतःशोणितसंयोगे[१] यदा देहः प्रजायते ।
कश्चिदात्मा तदा तस्मिन् जीवभावः प्रपद्यते ॥४० ॥
शरीरं प्रकृतेस्तत्त्वं गायत्र्यक्षरनिर्मितम् ।
अत आहुर्ब्रह्मकलां प्रतिसेतुं यथा तथा ॥४१ ॥
अत आत्मेति जीवेति शरीरीति च कथ्यते ।
त्वक्श्मश्रुरोमसंयुक्तं मज्जाशुक्रास्थिसंयुतम् ॥४२ ॥
पुरीषमूत्रविड्युक्तं कफपित्तयुतं तथा ।
इदं नश्वरदेहः स्यात्[२] शरीराद् भिन्नमुच्यते ॥४३ ॥
शरीराभ्यन्तरे मूले त्रिकोणं तेजसां निधिः[३] ।
स ब्रह्मा स शिवः सूर्यः स चाग्निः स च चन्द्रमाः ॥४४ ॥
स एव विष्णुः स गुरुरन्तरात्मा स उच्यते ।
सार्द्धत्रिवलयाकारा बिसतन्तुसमाकृतिः ॥४५ ॥
त्रिकोणाभ्यन्तरे शून्ये कोटिचन्द्रप्रदीपिते ।
कोटिविद्युल्लताकारा कुण्डली परदेवता ॥४६ ॥
अत एव हि सर्वत्र परमात्मा प्रकीर्तितः ।
परमात्मा समं ज्ञानं निर्विकारं निरञ्जनम् ॥४७ ॥
अगम्यं सर्वदेवानां सूक्ष्मं ज्योतिर्मयं विभुम् ।
अनेककोटिसानन्दपञ्चाशन्मातृकाक्षरम् ॥४८ ॥
निर्मलं परमं ब्रह्म शिवं परमकारणम् ।
सर्वगं सर्वदं शान्तम् अस्वरे चन्द्रमा यथा ॥४९ ॥
ज्ञानात्मा कथ्यते तेन मुनिभिस्तन्त्रकोविदैः ।
त्रिविधो जायते देहः स्त्रीपुंनपुंसकं तथा ॥५० ॥

---

१. शुद्धसत्त्वात्मको जीवो हंस इत्यक्षरात्मकः ।
हंसो बिन्द्वात्मको नित्यं नान्यथा परिचिन्तयेत् ॥ ग. अधिकः पाठः ।
२. शरीरादि भिन्नमुच्यते- ख. । ३. निधिम्- ख. ।

रजोऽधिका भवेन्नारी भवेद्रेतोऽधिकः पुमान्।
तथा नपुंसको देहः समानो[१] रेतःशोणितैः ॥५१॥

शुद्धसत्त्वात्मको जीवः सह इत्यक्षरात्मकः।
हसौ बिन्द्वात्मकौ नित्यं नान्यथा परिचिन्तय[२] ॥५२॥

रेतःशोणितसंयोगं[३] यदा गर्भे प्रजायते।
किञ्चिदात्मा यदा तस्मिन् जीवभावः प्रपद्यते ॥५३॥

तत्क्षणाच्चैव गायत्री जीवात्मना[४] सह जायते।
जीवव्यक्तिस्तत्र आत्मा कला श्रीरन्तरात्मनः ॥५४॥

गायत्री परमा विद्या तत्र एकत्र तिष्ठति।
गायत्री ब्राह्मणस्तत्र कला श्रीः परमात्मनः ॥५५॥

जीवात्मा तत्र [५]संप्राप्य गायत्रीं [६]तत्त्वरूपिणीम्।
जीवात्मा चैव गायत्री एकत्र तत्र तिष्ठति ॥५६॥

परस्य ब्रह्मणो देवि तत्रैव ह्यनिशं स्थितिः।
ब्रह्मविद्यामयो[७] जीवो ज्ञानात्मसहितः सदा ॥५७॥

ब्राह्मणः कथ्यते तेन मुनिभिस्तन्त्रकोविदैः।
एवं तत्त्वमयो भद्रे क्षत्रियो वैश्य एव च ॥५८॥

न शूद्रे विद्यते तत्त्वं गायत्र्यक्षरसंयुतम्।
रूपादितत्त्वसंयुक्तं गायत्र्यक्षरवर्जितम् ॥५९॥

प्रजपेद् यत्नतो विद्वान् गायत्रीं बिन्दुमण्डले।
तदैव सहसा भद्रे आत्मन्येव समर्पणम् ॥६०॥

यथा मनस्तथैवात्मा [८]गच्छेत मनसेच्छया।
तथेच्छया[९] पदे भद्रे प्रययौ बिन्दुमण्डलम् ॥६१॥

---

१. समानम्-ख.। २. परिचिन्तयेत्-ग.। ३. संयोगो- ग.। ४. सहयोगो प्रजायते- ग. घ.। ५. संस्थाप्य- ख. ग. घ.। ६. ब्रह्मसम्पुटाम्- ग. घ.। ७. ब्रह्मज्ञानमयो- ग. घ.। ८. महत्त्वं- ग. घ.। ९. यथेच्छया- ख. ग. घ.।

आयाहि वरदे ध्याने आगतो बिन्दुमण्डलात् ।
एकधा स्मरणे भद्रे बिन्दुमध्ये समर्पणम् ॥६२ ॥

प्रातःकाले जपेन्मन्त्रं यत्नतः सूर्यमण्डले ।
मध्याह्ने प्रजपेद् देवीं[1] यत्नतो वह्निमण्डले ॥६३ ॥

सायाह्ने प्रजपेद् देवीं[2] यत्नतश्चन्द्रमण्डले ।
नकारान्ते विसर्गो यो बिन्दुद्वयविनिर्मितः ॥६४ ॥

ईश्वरस्तु अधोबिन्दुरूर्ध्वबिन्दुः सदाशिवः ।
प्रातःकाले ह्यधोबिन्दौ मध्याह्ने ऊर्ध्वबिन्दुषु ॥६५ ॥

सायाह्ने चैव श्रीबिन्दौ भावना परमे शिवे ।
रसबिन्द्वात्मको मन्त्र इति वा तन्त्रकल्पना ॥६६ ॥

[3]वायुबीजे समारूढः श्रीबिन्दुर्वरवर्णिनि ।
संयुक्तश्चन्द्रसूर्याग्निमण्डलेन ह्यहर्निशम् ॥६७ ॥

अत एव वरारोहे श्रीबिन्दौ ब्रह्मभावना ।

श्रीदेव्युवाच[4] —

एवमात्मपरिच्छिन्नो निर्विकारः शिवोपमः ।
तत् कथं त्वमहं ज्ञानं जीवात्मनः प्रजायते ॥६८ ॥

आत्मशक्तिधरस्त्वं हि संशयं छिन्धि मे प्रभो ।

श्रीदेव उवाच —

वामपार्श्वे स्थितं पापपुरुषं कज्जलप्रभम् ।
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः[5] ॥६९ ॥

कामक्रोधादिभिर्युक्तमज्ञानतिमिरावृतम् ।
अजीवं तच्च विज्ञेयमात्मना भिन्नमुच्यते ॥७० ॥

---

१. मन्त्रं- ग. घ. । २. मन्त्रं-ग. घ. । ३. विसर्गान्तस्वरारूढं- ग. घ. ।
४. श्रीदेव्युवाचेत्यारभ्य आत्मना तथेत्यन्तं- ग. घ. नास्ति । ५. गुर्वङ्गनादिकम्-ङ. ।

अजीवाज्जायते पापं पुण्यं जीवात् प्रजायते ।
पापं वा यदि वा पुण्यं उभयोः कारणं मनः ॥७१ ॥

द्विविधा प्रकृतिर्ज्ञेया उत्तमा अधमा तथा ।
अधमा विकृतिर्ज्ञेया उत्तमा प्रकृतिः स्मृता ॥७२ ॥

कारणं अश्वमेधादेः प्रकृतिः परमेश्वरी ।
विकृतिः प्रकृतेरन्या क्रियते पापसञ्चयम् ॥७३ ॥

मनसा विस्मृतो भूत्वा त्यक्त्वात्मानं यदा तदा ।
अजीवः क्रियते पापं मनसा सह सुन्दरि ॥७४ ॥

अत एव हि सर्वत्र कथ्यते आत्मविस्मृतिः ।
अनात्मस्मरणे पापं पुण्यं हि आत्मना तथा ॥७५ ॥

अतः परं प्रवक्ष्यामि उद्धारं ब्रह्मविग्रहम् ।
[१]प्रणवं प्रथमं ह्युक्त्वा [२]भूःकारं तदनन्तरम् ॥७६ ॥

भुवःकारं ततो देवि स्वःकारं तदनन्तरम् ।
अजपेयं महाविद्या ब्राह्मणी ब्राह्मणीं प्रति ॥७७ ॥

रेतःशोणितसंयोगे ब्राह्मणस्य स्थितिर्यथा ।
एवं सर्वत्र चार्वङ्गि ब्राह्मण्याः स्थितिरुच्यते ॥७८ ॥

उद्वाहे ब्राह्मणस्त्रीणां [३]ह्यजपास्मरणं गुरोः ।
ॐ भूर्भुवःस्वःपरित्यागे शक्तिहीनो भवेद् द्विजः ॥७९ ॥

एवं हि ब्राह्मणस्त्रीणां क्षत्रादीनां तथैव च ।
पुंस्त्रीनपुंसके भद्रे आत्मा जीवस्य संस्थितिः ॥८० ॥

[४]वकारान्ते विसर्गो यो रौद्रीज्येष्ठासमन्वितः ।
[५]स्वकारान्ते तथा भद्रे रौद्री ज्येष्ठा तथैव हि ॥८१ ॥

---

१. प्रणवं पूर्वमुद्धृत्य- ग.घ.।    २. भूकारं- ग.घ.।    ३. अजपाश्रयणं- ग.घ.।
४. वःकारान्ते- ख.।    ५. स्वःकारान्ते- ख.।

प्रथमे प्रहरे रात्रौ द्वितीये च तृतीयके ।
चतुर्थे प्रहरे चैव दशधा दशधा जपेत् ॥८२ ॥
बिन्दुमध्ये जपेन्मन्त्रं चतुर्बिन्दुं यथाक्रमम् ।
प्रथमप्रहरे रात्रौ दशधा दशधाऽथवा[1] ॥८३ ॥
पठित्वा कवचान् जप्त्वा[2] प्राप्यते रजनीफलम् ।
अन्यथा विफलं सन्ध्या या कृता दिवसे द्विजैः ॥८४ ॥
दशबिन्द्वात्मिका विद्या गायत्री तन्त्रसम्मता ।
यः पुमान् पिङ्गलः खर्व ईषत्ताम्रमुखच्छविः ॥८५ ॥
रक्तकेशः [3]श्यावदन्तो दन्तमध्ये विराजते ।
स क्रूरः कथ्यते वेदे महापातकसंयुतः ॥८६ ॥
[4]दिनकृत्यं वृथा तस्य मूर्तिमान् पातकः स च ।
यथा तस्य वृथा पूजा गायत्रीरहितस्तथा ॥८७ ॥
निगद्य ब्राह्मणीं भद्रे ब्राह्मणं कथयामि ते ।
ओंकारं पूर्वमुद्धृत्य ब्रह्मविष्णुशिवात्मकम् ॥८८ ॥
तकारं रूपतत्त्वञ्च रूपसिद्धिप्रदायकम् ।
त्सकारं रसतत्त्वञ्च [5]रससिद्धिप्रदायकम् ॥८९ ॥
विकारं गन्धतत्त्वञ्च गन्धसिद्धिप्रदायकम् ।
तुकारं स्पर्शतत्त्वञ्च स्पर्शसिद्धिप्रदायकम् ॥९० ॥
वकारं शब्दतत्त्वञ्च शब्दसिद्धिप्रदायकम् ।
तत्त्वमेतन्महागुह्यं गायत्र्याः शीर्षमुच्यते ॥९१ ॥
रेकारं त्वक्तत्त्वञ्च त्वक्सिद्धिप्रदायकम् ।
ण्यकारं[6] घ्राणतत्त्वञ्च घ्राणसिद्धिप्रदायकम् ॥९२ ॥

---

१. दशधा तथा- ख.। २. जप्ता-ङ.। ३. श्यामदन्तो- ख.।
४. दिनकृत्यमित्यारभ्य गायत्रीरहितस्तथेत्यन्तं- ग. घ. नास्ति। ५. रसात्-ख. ङ.।
६. णिकारञ्च- ख. ग. घ.।

[१]वायुबीजं ततो भद्रे बिन्दुना सहितं प्रिये।
जिह्वातत्त्वमिदं प्रोक्तं रसनासिद्धिदायकम् ॥९३॥

वायुबीजद्वयं भद्रे गायत्रीषु प्रतिष्ठितम्।
निराकान्ते स्थितं बीजं विसर्गान्तःस्वरोपमम् ॥९४॥

मकारमक्षितत्त्वञ्च अक्षिसिद्धिप्रदायकम्।
गोङ्कारं श्रोत्रतत्त्वञ्च श्रोत्रसिद्धिप्रदायकम् ॥९५॥

तत्त्वमेतन्महागुह्यं गायत्र्याः कुक्षिरुच्यते।
देकारं वाक्यतत्त्वञ्च वाक्यसिद्धिप्रदायकम् ॥९६॥

वकारं पाणितत्त्वञ्च हस्तसिद्धिप्रदायकम्।
स्यकारं पादतत्त्वञ्च पादसिद्धिप्रदायकम् ॥९७॥

तत्त्वमेतन्महागुह्यं गायत्र्या गोत्रमुच्यते।
वर्णत्रयं चतुर्वेदशाखापल्लवसंयुतम् ॥९८॥

धीकारं लिङ्गतत्त्वञ्च लिङ्गसिद्धिप्रदायकम्।
मकारं पृथिवीतत्त्वं पृथिवीसिद्धिदायकम्[२] ॥९९॥

हिकारं जलतत्त्वञ्च जलसिद्धिप्रदायकम्।
धिकारं वह्नितत्त्वञ्च वह्निसिद्धिप्रदायकम् ॥१००॥

योकारं शून्यतत्त्वञ्च शून्यसिद्धिप्रदायकम्।
तत्त्वमेतन्महागुह्यं गायत्र्या देवता स्मृता ॥१०१॥

योकारं वायुतत्त्वञ्च वायुसिद्धिप्रदायकम्।
नकारं पृथिवीतत्त्वं सर्वसिद्धिप्रदायकम् ॥१०२॥

आत्मा ब्रह्मकला जीवो गायत्री ब्रह्मनिश्चयम्।
नान्ते बिन्दुद्वयं भद्रे श्यामलं[३] अरुणं सदा ॥१०३॥

---

१. विसर्गान्तं स्वरं भद्रे बिन्दुना सहितं ततः- ग.घ।
२. प्रदायकम्-ङ.।
३. श्यामलं चारुणं- ग.घ.।

प्रकारं मनसस्तत्त्वं मनःसिद्धिप्रदायकम् ।
चोकारं बुद्धितत्त्वञ्च बुद्धिसिद्धिप्रदायकम् ॥१०४ ॥
[१] अहंतत्त्वं दकारञ्च अहंसिद्धिप्रदायकम् ।
यात्कारं चित्ततत्त्वञ्च चित्तसिद्धिप्रदायकम् ॥१०५ ॥

तत्त्वमेतन्महागुह्यं गायत्र्याः पादमुच्यते ।
[२] प्रथमे परमेशानि तकारं खण्डमेव यत् ॥१०६ ॥

सकारान्तर्गतो भूत्वा क्रियते पापमोचनम् ।
आकारान्तर्गतं खण्डं शेषस्य वरवर्णिनि ॥१०७ ॥

खण्डशेषे तकारञ्च ब्रह्महत्याप्रमोचनम् ।
रेतःशोणितनिर्माणं शरीरं सर्वदेहिनाम् ॥१०८ ॥

शरीरं ब्राह्मणं भद्रे गायत्र्यक्षरसंयुतम् ।
तत्र आत्मा ब्रह्मकला शरीरे लयमाप्नुयात् [३] ॥१०९ ॥

ब्राह्मणक्षत्रवैश्यानां चतुर्विंशाक्षरैर्युतम् ।
शरीरं न तु शूद्रादेर्निश्चयं [४] कथितं प्रिये ॥११० ॥

रेकारं प्रथमे देवि तकारं तदनन्तरम् ।
शोकारञ्च णिकारञ्च तकारञ्च तथैव च ॥१११ ॥

गायत्र्याः परमेशानि इति अक्षरनिर्णयम् ।
शूद्रादौ परमेशानि इति अक्षरचिन्तनम् ॥११२ ॥

न जपे अधिकारोऽस्ति शूद्रादीनां कदाचन ।
अतो जगच्छक्तिमयं शैवेन वैष्णवेन किम् ॥११३ ॥

एकधा श्रवणे स्त्रीणां जपो भवति सर्वदा ।
अजपा कथ्यते तेन मुनिभिस्तन्त्रकोविदैः ॥११४ ॥

---

१. अहङ्कारम्- ग. घ. । २. प्रथम इत्यारभ्य प्रमोचनमित्यन्तं- ग. घ. नास्ति ।
३. लयमागतः - ग. । ४. निश्चितम्- ग. ।

प्रत्यहं प्रजपेद् या स्त्री सा साक्षाद् ब्राह्मणीश्वरी ।
[१]सा विष्णुः सा शिवो ज्ञेया जनशक्तिरितीरिता[२] ॥११५ ॥

सशक्तिज्ञानयुगलं [३]अहन्तेन प्रकीर्तितम् ।
न जप्त्वा अजपाविद्यां ब्राह्मणी शूद्रिणी [४]यथा ॥११६ ॥

[५]शूद्रिण्या सह योगेन ब्राह्मणः शूद्रतां व्रजेत् ।
यथाऽधमस्य संयोगाद् उत्तमा ब्राह्मणाधमाः ॥११७ ॥

त्रिविधा ब्राह्मणाः प्रोक्ता उत्तमाधममध्यमाः ।
गायत्रीषु च सन्ध्यायां तथा वर्णनिरीक्षणे ॥११८ ॥

वर्णानां गुणविज्ञानैः सदर्थे च सुलोचने ।
अनिशं जायते तस्य मनोबुद्धिर्वरानने ॥११९ ॥

ब्राह्मणक्षत्रवैश्यानां सच्छूद्राणां गृहे तथा ।
भिक्षां कृत्वा तु यो विप्र उदरं परिपूरयेत् ॥१२० ॥

उत्तमः स च विज्ञेयो मध्यमं निगदामि ते ।
गायत्रीषु च सन्ध्यायां सदा यस्य मनो भवेत् ॥१२१ ॥

कृषिकर्मरतो भूत्वा करोति शूद्रयाजनम् ।
मध्यमः स च विज्ञेयः अधमं निगदामि ते ॥१२२ ॥

लाक्षालौहविक्रयणाद् यथा स्याद् ब्राह्मणोऽधमः ।
किं तस्य ब्रह्मविद्यायां नाधिकारः कदाचन ॥१२३ ॥

वरं यवनसंसर्गं कुर्यान्मध्यमब्राह्मणः ।
वरं हड्डियसंसर्गं संत्यजेद् ब्राह्मणाधमम् ॥१२४ ॥

सदर्थं सर्ववर्णानामज्ञात्वा ब्राह्मणाधमाः ।
इति ते ब्राह्मणस्त्रीणां [६]संस्कारं तन्त्रसम्मतम् ॥१२५ ॥

---

१. सा विष्णुरित्यारभ्य शूद्रतां व्रजेदित्यन्तं- ग. घ. नास्ति । २. ज्ञानशक्तिरितीरिता- ख. ।
३. अहस्तेन- ङ. । ४. यदा- ख. । ५. तस्यास्तु- ग. घ. । ६. संस्कारस्तन्त्रसम्मतः- ग. घ. ।

[१]कथितं अतिगोप्यञ्च निश्चयं वर्णदर्शने ।
[२]व्याहृतिर्या महेशानि सावित्री सैव ब्राह्मणी ॥१२६ ॥

न जपे दूषणं तन्त्रे[३] ब्राह्मणीनां कदापि[४] च ।
क्षत्राणी वैश्यदारा च शक्तिरूपा नियन्त्रिता[५] ॥१२७ ॥

[६]शक्त्या च पूजयेत् शक्तिं किमत्र दूषणं प्रिये ।
[७]शृणु ध्यानं प्रवक्ष्यामि व्याहृत्या वरवर्णिनि ।
चतुर्भुजां त्रिनयनां प्रतप्तकनकप्रभाम् ॥१२८ ॥

शुक्लपद्मसमासीनां शुक्लवस्त्रपरिच्छदाम् ।
दाडिमीबीजसदृशदशनद्युतिसूज्ज्वलाम् ॥१२९ ॥

सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ।
ध्यानमेतद्वरारोहे स्त्रियः प्रति यथोचितम् ॥१३० ॥

पुरातनी पूर्णविद्या पञ्चाशद्वर्णकुण्डली ।
परस्य ब्रह्मभजने कारणं परकुण्डली ॥१३१ ॥

अन्यथा शववत् सर्वं ब्रह्माण्डं कोटिकोटिशः ।
कुण्डलीशक्तिरहितः शिवोऽपि शववत् सदा ॥१३२ ॥

कुण्डली प्रकृतिर्या सा पञ्चाशद्वर्णविग्रहा ।
अनुस्वारस्वरूपा सा बिन्दुरूपा चिदाकृतिः ॥१३३ ॥

जीवस्य वामकायेषु विप्रस्य अनिशं यतः ।
अतोऽत्र कथ्यते वेदे वामकायः सदा द्विजः ॥१३४ ॥

---

१. कथितोऽप्यतिगोप्यस्तन्निर्णयो वर्णदर्पणे- ग.घ.। २. गायत्री या- ग.घ.।
३. मदे- ग.घ.। ४. कदाचन- ग.घ.। ५. यतः स्त्रियः- ग.घ.।
६. शक्त्या तु पूज्यते शक्तिः किमत्र दूषणं भवेत्- ग.घ.।
७. श्रृणु इत्यारभ्य सदा द्विज भूषणमित्यन्तं नास्ति- ग.घ.।

वामकाये स्थिता नित्या गायत्री ब्राह्मणस्य च ।
दक्षकाये स्थिता नित्या विद्या जीवात्मिका सदा ॥१३५ ॥
[१]वामकायः कथ्यते वै ब्राह्मणस्तेन कथ्यते ।
[२]परब्रह्मणि जीवोऽयं प्राप्यैव च विजृम्भते ॥१३६ ॥
ब्राह्मणः कथ्यते तेन मुनिभिस्तन्त्रसम्मतैः ।
देवासुरैः सदा पूज्यो वामकायो[३] हि ब्राह्मणः ॥१३७ ॥
भिक्षावृत्तिर्भवेद् यस्य[४] नान्यचेष्टा कदाचन ।
ब्राह्मणेभ्यो नमो नित्यं येषां भैक्ष्येण जीविका ॥१३८ ॥
अष्टोत्तरसहस्राणि यज्ञाश्च[५] विविधाश्च ये[६] ।
प्रत्येकमक्षरे भद्रे गायत्रीष्वपि विद्यते ॥१३९ ॥
एकाक्षरेऽपि विप्रस्य गायत्र्या अपि पार्वति ।
मनो[७] भवति लीनञ्च स मुक्तः सर्वदा द्विजः ॥१४० ॥
स[८] पूज्य(:) सर्वदेवानां मम पूज्यो न संशयः ।
[९]सङ्केतमागमं शास्त्रं परब्रह्मनिरूपणम् ॥१४१ ॥
पञ्चाशन्मातृकावर्णमागमं प्रकृतिः स्वयम् ।
या नित्या ब्रह्मगायत्री सैव गङ्गा न संशयः ॥१४२ ॥
सर्वतीर्थमयी गङ्गा तेन गङ्गा प्रकीर्तिता ।
सर्वशास्त्रमयी गीता गायत्री सैव निश्चिता ॥१४३ ॥
गयातीर्थञ्च गोलोकं गायत्रीरूपमद्भुतम् ।
बहुना किमिहोक्तेन ब्रह्माण्डं कोटिकोटिशः ॥१४४ ॥

---

१. वामकायो ह्यतो विप्रो ....- ग.घ. । २. परब्रह्मण्येतदारभ्य तन्त्रसम्मतैरित्यन्तं- ग.घ. नास्ति ।
३. वामकायोऽपि- ख.ग.घ. । ४. तस्य- ग.घ. । ५. यज्ञानि विविधानि च - ख.ङ. ।
६. तिस्रः कोट्यः सहस्राणि यज्ञानि विविधानि च- ग.घ. अधिकः पाठः ।
७. मनो भवति लीनञ्च- ख., नभो भवति नीलञ्च-ङ. ।
८. सम्पूज्य- ग.ङ. । ९. संकेतमागममित्यारभ्य ज्ञानमालेति कीर्तितेत्यन्तं- ग.घ. नास्ति ।

ब्रह्मविद्यामयं सर्वं नान्यथा वचनं मम ।
गायत्रीरहितो विप्रः स एव पूर्वकुक्कुरः ॥१४५ ॥

शतजन्मन्यसृग् भुक्त्वा प्रतिजन्मनि ब्राह्मणः ।
शतान्ते ब्राह्मणो भूत्वा पूतिगन्धमयं मुखम् ॥१४६ ॥

कुक्कुरत्वं परित्यज्य द्विजत्वं जायते ततः ।
गायत्रीष्वपि चार्वङ्गि अधिकारी भवेत्ततः ॥१४७ ॥

प्रकृष्टवाचकः प्रश्च कुण्डली बिन्दुरूपिणी ।
सृष्टिस्तत्र कृतिर्नाम विद्या सङ्केतकुण्डली ॥१४८ ॥

सृष्टौ प्रकृष्टा सा विद्या प्रकृतिस्तेन कीर्तिता ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥१४९ ॥

ततः परशिवज्योतिः कुण्डली सङ्गता सदा ।
सङ्केतं कथ्यते तेन मुनिभिस्तन्त्रकोविदैः ॥१५० ॥

[१]ककारः कुण्डली साक्षात् पञ्चाशन्मातृकात्मिका ।
सङ्केतविद्या गायत्री परं ब्रह्म निरूपणे ॥१५१ ॥

कुण्डली ब्रह्मसङ्केतः सङ्केतात् प्राप्यते परम् ।
पञ्चाशन्मातृकाशक्तिर्ज्ञानमालेति कीर्तिता ॥१५२ ॥

गायत्री विस्मृतिर्यस्य सम्पूर्णमेकमक्षरम् ।
सहजानन्दमन्दिरे प्रभवेदात्मनः स्थितिः ॥१५३ ॥

शुद्धसत्त्वात्मकः सैव कला श्री (?) अन्तरात्मनः ।
एवमात्मा परिच्छिन्नः प्रजपेदनिशं मनुम् ॥१५४ ॥

वित्तस्य लालसां कृत्वा कर्णपूरे न्यसेन्मनुम् ।
स यथा नरकं याति शिष्येण सह रौरवम् ॥१५५ ॥

---

१. कःकारः-ख. ।

गायत्रीरहितो विप्रस्तथैव नरकं व्रजेत् ।
यदन्नं ब्राह्मणोद्देशे पच्यते च द्विजातिभिः ॥१५६ ॥

शूद्राणां यदि तत्रान्ने जायते वरवर्णिनि ।
शूद्रोच्छिष्टं भवेदन्नं विष्णवे न निवेदयेत् ॥१५७ ॥

तदन्नं विष्णवे दत्त्वा शूद्रेण सह रौरवम् ।
यथा स नरकं याति गायत्रीरहितस्तथा ॥१५८ ॥

विष्णोर्निवेदितमन्नमज्ञानात् शूद्रजातिषु ।
दत्त्वा नरकमाप्नोति गायत्रीरहितस्तथा ॥१५९ ॥

सर्वं तस्य वृथा देवि कृष्णपूजादिकाः क्रियाः ।
गायत्र्यात्मकजीवात्मा पूजको नान्य एव हि ॥१६० ॥

पूजकस्य तथा पूज्याः शक्तिविष्णुशिवादयः ।
गायत्रीरहितो विप्रो न स्पृशेत् तुलसीदलम् ॥१६१ ॥

हरेर्नाम न गृह्णीयाद् गायत्रीरहितो द्विजः ।
महाचाण्डालसदृशः किं तस्य कृष्णपूजने ॥१६२ ॥

[१]मन्त्रत्यागी गुरुत्यागी देवत्यागी तथैव च ।
[२]दुरदृष्टवशाद् दैवाद् यस्य वंशे प्रजायते ॥१६३ ॥

सगोत्रबान्धवस्तस्य प्रायश्चित्तं समाचरेत् ।
कुशपत्रशतैः सार्द्धैर्निर्माय कुशपुत्तलीम् ॥१६४ ॥

वेदोक्तविधिना तस्य अग्निदाहं समाचरेत् ।
अन्यथा तस्य यत् पापं स गोत्रेषु विशेद् द्रुतम् ॥१६५ ॥

तत्संसर्गिणो (ये) लोकास्तेऽपि तद्दोषभागिनः ।
स पापी वर्धते नित्यं कलिकाले विशेषतः ॥१६६ ॥

---

१. मन्त्रत्यागीत्यारभ्य सुनिश्चितेत्यन्तं- ग. घ. नास्ति ।

२. दुर्दृष्टि- ख. ।

स गोत्रस्तस्य संसर्गी महादरिद्रतां व्रजेत् ।
परे च नरकं गत्वा कुरुते पापसञ्चयम् ॥१६७ ॥

पञ्चपातकसंयुक्तः स यथा ब्राह्मण्याद् गतः ।
गायत्रीरहितस्यापि इयमेव सुनिश्चिता ॥१६८ ॥

अशौचान्तदिने विप्रो गत्वा शूद्रगृहं यदि ।
भुक्त्वा गृहीत्वा तद्द्रव्यं तत्क्षणाद् याति शूद्रताम् ॥१६९ ॥

प्रेतोद्देशे च यद्द्रव्यं तत्र यस्य स्पृहा भवेत् ।
तद्दिने स भवेच्छूद्रो गायत्रीरहितो यथा ॥१७० ॥

तद्दिने तद्गृहं गत्वा यदि गङ्गोदकं पिबेत् ।
तथापि स भवेत् शूद्रो गायत्रीरहितो यथा ॥१७१ ॥

यथा दर्दूरिकः कुष्ठी सर्वशास्त्रबहिर्मुखः ।
गायत्रीरहितो विप्रस्तथा धर्मबहिर्मुखः ॥१७२ ॥

वरं पूजा प्रकर्तव्या ब्राह्मणे व्यक्तनास्तिके ।
नित्यं दर्दूरिको विप्रः सर्वपूजाबहिर्मुखः ॥१७३ ॥

गायत्रीमयुतं जप्त्वा तद्धनं वेदपारगे ।
दत्त्वा शुद्धिमवाप्नोति अन्यथा शूद्रवत् सदा ॥१७४ ॥

[१]तत्त्वमेतन्महागुह्यं पूर्वाद्याम्नायसंयुतम् ।
ऊर्ध्वाम्नाययुतं तन्त्रं [२]दक्षिणाम्नायसंयुतम् ॥१७५ ॥

श्रुत्वा शूद्रमुखाद् व्याख्यां शूद्रस्थाने पठेद् द्विजः ।
तत्क्षणात् स भवेत् शूद्रो गायत्रीरहितो यथा ॥१७६ ॥

स शूद्रः कृतचाण्डाल इह जन्मनि निश्चयः ।
कुलविंशतिमादाय अन्ते स नरकं व्रजेत् ॥१७७ ॥

---

१. तन्त्रमेत- ग. घ. । २. मध्यमाम्नायसंयुतम्- ग. घ. ।

यस्तु अध्यापकः शूद्रः स कथं धर्मतत्परः ।
तस्य सर्वं भवेद् व्यर्थं हरिनामादिकञ्च यत् ॥१७८ ॥

स सर्वयातनाभोगी [१]यावदाभूतसंप्लवम् ।
पञ्चपातकसंयुक्तः कृतघ्नश्चैव निश्चितः ॥१७९ ॥

यस्तीर्थे मूत्रविट् कृत्वा यदि दैवाच्च एकदा ।
तत्क्षणात् तत्फलं त्यक्त्वा स यथा पितृभिः सह ॥१८० ॥

स यथा रौरवं याति गायत्रीरहितस्तथा ।
ये तीर्थवासिनो लोकास्तीर्थे मूत्रं प्रकुर्वते ॥१८१ ॥

स्नानपूजाफलं त्यक्त्वा स यथा नरकं व्रजेत् ।
गायत्रीरहितो विप्रस्तथैव नरकं व्रजेत् ॥
पतङ्गादेर्यथारामस्तथैव तीर्थवासिनः ॥१८२ ॥

॥ इत्यागमसन्दर्भे ज्ञानदर्शने देवदेवीसंवादे गायत्रीतन्त्रे
तृतीयो ब्राह्मणपटलः [२] ॥

---

१. यावदाहूतसंप्लवम्- ख.ङ. ।  २. तृतीयब्राह्मणपटलः- ख.ग. ।

## ॥अथ चतुर्थः पटलः ॥

श्रीदेव उवाच —

ह्रीं आगच्छ वरदे नित्ये परागधूलिधूसरे ।
मकरन्दरसामोदे परंब्रह्मसुखास्पदे ॥१ ॥

चन्द्रमण्डलमध्यस्थे[1] शिवपर्यङ्कशायिनि ।
ब्रह्मविष्णुशिवान्तःस्थे सुषुम्नामध्यवर्तिनि ॥२ ॥

पञ्चाशद्युवतीसङ्गे महाबिन्दुस्वरूपिणि ।
आगच्छ त्वरितं मातस्त्वं बिन्दुचन्द्रमण्डलात् ॥३ ॥

आगत्य हृदयस्थानं विद्यासिद्धिं प्रयच्छ मे ।
[2]ह्रीं । ध्यात्वा विद्यां महेशानि ध्यायेद् यत्नेन देवताम् ॥४ ॥

प्रथमस्य च बीजस्य मन्त्राणां ध्यानमेव च ।
ततस्तु पूजयेद् विद्यां यावद् वर्णानि तानि च ॥५ ॥

आद्यन्ते प्रणवं दत्त्वा प्रतिवर्णं पृथक् पृथक् ।
चतुर्थ्यन्तं नमोऽन्ते[3] च जपादौ पूजयेत् सुधीः ॥ ६ ॥

ततस्तु पूजयेद् विद्वान् जप्त्वा विसर्जनं ततः ।
'ह्रीं' । गच्छ देवि महामाये महाबिन्दुस्वरूपिणि ॥ ७ ॥

गच्छ देवि फलं दत्त्वा त्वं [4]विष्णुश्चन्द्रमण्डलात् ।
जीवात्मनि सदा तिष्ठ तिष्ठ त्वं सुस्थिरा भव ॥ ८ ॥

'ह्रीं' । ततः समर्पयेन्मन्त्रं पूर्वोक्तपटले यथा ।
[5]पूजितासि सदा विद्ये [6]जीवात्मपूजितेऽक्षरे ॥९ ॥

परंब्रह्मपूजितासि जीवात्मनि स्थिरा भव ।
'ह्रीं' । शाक्ते शैवे वैष्णवे च सौरे गाणपतेषु च ॥१० ॥

---

१. मध्यस्थ-ङ. । २. ख.ग.घ. नास्ति । ३. नमोऽन्तं च-ग.घ. । ४. बिन्दुश्चन्द्रमण्डलम्-ख.ग.घ. । ५. पूजितानि - ख.ङ. । ६. जीवात्मापूजितेऽक्षरे- ङ. ।

सर्वमन्त्रेषु विद्यासु शस्यते नान्यथा भवेत् ।
एतद्रहस्यं परममज्ञात्वा विफलो[१] जपः[२] ॥११ ॥

चन्द्राग्रे वसते जीवः सुस्थिरो मनसा सह ।
सदाशिवपुराद् विद्या आगता ऐश्वरं पुरम् ॥१२ ॥

तस्यैवावाहनं[३] भद्रे कथ्यते तन्त्रकोविदैः ।
ईश्वराद् याति सा विद्या पुनः शिवपुरं प्रति ॥१३ ॥

तदा विसर्जनं भद्रे कथ्यते मुनिपुङ्गवैः ।
मन्त्राक्षराणि यावन्ति आत्मन्येवार्पणं भवेत् ॥१४ ॥

समर्पणं कथ्यते तैर्मुनिभिस्तन्त्रकोविदैः ।
सम्यक्प्रकारभावेन अर्पणं यत् समर्पणम् ॥१५ ॥

तदैवात्मनि निर्णीतमिति वेदेषु निर्णयः ।
आधाराच्चन्द्रपर्यन्तं सुषुम्नावर्त्मनाऽनिशम् ॥१६ ॥

आयाति याति सा विद्या इति वेदेषु निश्चिता[४] ।
मन्त्राणां चिन्तनाद् देवि स मनुर्देवता स्वयम् ॥१७ ॥

ध्यानेन दर्शनं दत्त्वा पुनर्मन्त्रेषु लीयते ।
एवं पुनः पुनर्मन्त्रं देवता च पुनः पुनः ॥१८ ॥

आविर्भावतिरोभावौ[५] जायेते स मनुः स्वयम् ।
ध्यानस्यान्तर्गतं मन्त्रं ध्यानकाले विशेषतः ॥१९ ॥

मनश्चान्तर्गतं मन्त्रं जपकाले तथैव च ।
मनसा चिन्तनं ध्यानं तेन ध्यानं प्रकीर्तितम् ॥२० ॥

[६]चिन्तनं देवतारूपं त्रिगुणं प्रति अक्षरम् ।
ब्राह्मणक्षत्रवैश्याश्च शूद्राद्यावरजातयः ॥२१ ॥

---

१. विफलम् - ख.ङ. । २. जपम् - ख.ङ. । ३. तदेवावाहनं- ग.घ. । ४. निश्चितम्- ग.घ. ।
५. आविर्भावं तिरोभावं- ग.घ. । ६. चिन्तनमित्यारभ्य विदुरित्यन्तं ग.घ. नास्ति ।

स्त्रियश्च सकलास्तेषां शान्तरूपाः सदा शुचिः ।
एषां मध्ये च या काचिदागत्य गुरुसन्निधिम् ॥२२ ॥
प्रणम्य प्रार्थयेज्ज्ञानं धर्मार्थकाममोक्षदम् ।
यदि न दीयते तस्य ज्ञानं ज्ञानविशारदैः ॥२३ ॥
ते यथा नरकं यान्ति गायत्रीरहितास्तथा ।
ब्रह्मज्ञानमयं ह्येतन्नास्ति जातिविचारणा ॥२४ ॥
ज्ञानिने दीयते ज्ञानं ज्ञानिने कमलेक्षणे ।
पञ्चाशन्मातृकावर्णज्ञानं ज्ञानविदो विदुः ॥२५ ॥

श्रीदेव्युवाच[१] —

कन्या च कर्तयेत् सूत्रं पतिपुत्रवती तथा ।
विधवा सधवा वापि पुत्रहीनापि ब्राह्मणी ॥२६ ॥
क्षत्राणी वैश्यदारा च कर्तयेन्न च शूद्रिणी ।
दीक्षिता यदि सा भद्रे शूद्रिणी[२] न च निन्दिता ॥२७ ॥
सच्छूद्रा यदि सा भद्रे शुद्धा सा सूत्रकर्तने ।
असच्छूद्रा महेशानि निन्दिता सूत्रकर्तने ॥२८ ॥
कार्पाससम्भवैः सूत्रैर्यज्ञसूत्रं विनिर्मितम् ।
सूक्ष्मातिसूक्ष्मं परमं [३]जम्बुद्वीपे विशेषतः ॥२९ ॥
ग्रन्थिकाले स्मरेद् विप्रान् [४]सूत्रं भवति मूर्तिमत् ।
ब्रह्मा च कश्यपो विप्रः सनकोऽथ सनन्दनः ॥३० ॥
[५]सनत्सनातनो विप्रो नारदः कपिलस्तथा ।
मरीचिरत्रिः पुलहः पुलस्त्यो गौतमः क्रतुः ॥३१ ॥

---

१. श्रीमहादेव उवाच- घ., श्रीदेव उवाच- ग.। २. शूद्रा कर्तने- ग.घ.।
३. सर्वदेवमयं तथा- ग.घ.। ४. सूत्रो भवति मूर्तिमान्- ग.घ.। ५. सनात्- ग.घ.।

भृगुर्दक्षः प्रचेताश्च वशिष्ठो वाल्मीकिस्तथा ।
द्वैपायनो भरद्वाजः शुको जैमिनिरेव च ॥३२ ॥

[१]विदूरश्च शुनःशेपो जातूकर्णश्च रौरवः ।
और्वः संवर्तकः शुक्रश्च्यवनोऽथ[२] बृहस्पतिः ॥३३ ॥

चन्द्रः सूर्यो बुधः श्रीमान् यज्ञसूत्रस्य ग्रन्थिषु ।
तिष्ठन्तु मम वामांशे वामस्कन्धे ह्यहर्निशम् ॥३४ ॥

गायत्री अजपारूपा रूपादितत्त्वरूपिणी ।
तिष्ठतु मम वामांशे वामस्कन्धे ह्यहर्निशम् ॥३५ ॥

अत्र देवस्य सूत्रस्य देवाचार्यो बृहस्पतिः ।
ब्रह्माद्या देवताः सर्वे यज्ञसूत्रस्य देवताः ॥३६ ॥

संमार्ज्य दधिदुग्धेन घृतेन बहुयत्नतः[३] ।
घृताद्यभावे चार्वङ्गि मार्जयेत् तण्डुलपिण्डजैः ॥३७ ॥

तदभावे सार्षपेण तिलतैलं परित्यजेत् ।
बिल्वस्य फलनिर्यासैर्मार्जयेत् सततं द्विजः ॥३८ ॥

वामस्कन्धात् [४]समुत्तार्य वामाङ्गुष्ठे नियोजयेत् ।
वामाङ्गुष्ठं वामस्कन्धमेकस्य न चान्यथा ॥३९ ॥

वामाङ्गुष्ठयुतं सूत्रं कृत्वा सम्मार्जयेद् द्विजः ।
कण्ठे [५]शिरे दक्षकरे कृत्वा शूद्रत्वमर्हति ॥४० ॥

[६]गायत्रीमयुतं जप्त्वा तस्मात् पापात् प्रमुच्यते ।
[७]शुद्धसत्त्वात्मकं सूत्रं तदा भवति प्रत्यहम् ॥४१ ॥

---

१. विदूरथः- ग.घ.। २. सुराचार्यो- ग.घ.। ३. पिष्टजैः खपिण्डजैः- ङ.।
४. समुत्तीर्य- ङ.। ५. शीर्षे- ग.। ६. गायत्र्या- ग.।
७. शुद्धसत्त्वात्मकमित्यारभ्य परं मनुरित्यन्तं ग. नास्ति ।

शुद्धसत्त्वात्मकं सूत्रं ब्राह्मणेषु प्रशस्यते।
लोहितं क्षत्रिये शस्तं वैश्ये पीतं प्रशस्यते ॥४२॥

वर्णविप्रे तथा भद्रे मार्जनं रहितं सदा।
धारणं यज्ञसूत्रस्य जातिभेदे पृथक् पृथक् ॥४३॥

रक्तचन्दनतोयेन मार्जयेत् क्षत्रजातयः।
हरिद्रया मार्जयेद् वैश्य इति सूत्रविनिर्णयः ॥४४॥

वर्णविप्रे तथा भट्टे विशेषं निगदामि ते।
प्रथमाष्टाक्षरं भद्रे व्याहृत्याः प्रथमाक्षरम् ॥४५॥

त्रिसन्ध्यं प्रजपेद् भट्टो वर्णं विप्रस्तथैव हि।
आद्यन्ते प्रणवं त्यक्त्वा प्रजपेत् सततं यदि।
स्वजात्युक्तफलं प्राप्य गायत्र्याः फलमाप्नुयात् ॥४६॥

श्रीदेव्युवाच —

प्रजपेदनिशमात्मा तुरीयां ब्रह्मसम्पदम्।
प्रजपेदनिशमात्मा आत्मीयं ब्राह्मणः प्रभो ॥४७॥

गायत्री या महादेव तुरीया सैव नान्यथा।
तुरीया सैव गायत्री नित्यमेकत्र संस्थितिः ॥४८॥

उभयोरैक्ययोगेन प्रजपेदथवा पृथक्।
इति मे संशयं देव भञ्जनं कुरु यत्नतः ॥४९॥

श्रीदेव उवाच —

बिन्दुमध्यगता नित्या गायत्री परदेवता।
चतुर्बिन्द्वात्मकं हंसं गायत्रीषु प्रतिष्ठितम् ॥५०॥

नकारान्ते स्थितं शून्यं ज्योत्स्नाशक्तिसमन्वितम्।
सकारान्ते स्थिता शक्तिः पिनाकिसहिता सदा ॥५१॥

वकारान्ते द्वयं बिन्दुः स्वकारान्ते द्वयं तथा।
शिवशक्त्यात्मकं हंसं गायत्री स्त्रीपुरुषात्मिका ।।५२ ।।

व्याहृतिः शोभिता तस्य बिन्दुना वरवर्णिनि।
जपकाले महेशानि जायते श्वासबन्धनम् ।।५३ ।।

यत्र तत्र विनिर्दिष्टं विद्यामन्त्रं प्रसन्नधीः।
सर्वं हंसमयं भद्रे नास्ति हंसात् परं मनुः ।।५४ ।।

जीवन्यासं प्रवक्ष्यामि यज्ञसूत्रस्य संश्रृणु।
यज्ञसूत्रं करे धृत्वा दक्षिणे द्विजसत्तमः ।।५५ ।।

गायत्रीं प्रथमे उक्त्वा प्रणवं प्रजपेत् शतम्।
ह्रीं ह्रीं इतिं उच्चार्य प्रणवादीनुच्चरेत् ततः ।।५६ ।।

यज्ञसूत्रस्य वाङ्मनो नयनं तदनन्तरम्।
गायत्रीं पुनरुक्त्वा च वामस्कन्धे निधापयेत् ।।५७ ।।

जीवन्यासं विना देवि यज्ञसूत्रञ्च सूत्रवत्।
[१]शिवपूजनमत्याज्यं जातके मृतके तथा ।।५८ ।।

ब्रह्मविद्या च अत्याज्या गायत्री मृतसूतके।
कारागारान्विते ग्रामे यः पूजयति शङ्करम् ।।५९ ।।

शङ्करं त्रिदशाराध्यमम्बिकां सुरपूजिताम्।
यथा तस्य वृथा पूजा यज्ञसूत्रं तथैव च ।।६० ।।

पञ्चाधिका यत्र लोका बद्धास्तिष्ठन्ति वै गृहे।
कारागारः स विज्ञेयस्तत्र पूजां परित्यजेत् ।।६१ ।।

यदि नो दीयते पिण्डं पित्रादीनां मृताहनि।
निषेधं कुरुते यस्तु स बौद्धो वरमूढधीः ।।६२ ।।

---

१. शिवपूजनमत्याज्यमित्यारभ्य वरानन इत्यन्तं- ग. नास्ति।

मूत्रविट्शोणितैर्युक्ता तस्य जिह्वा यथा तथा ।
गायत्रीरहितस्यापि तस्य जिह्वा च निन्दिता ॥६३ ॥

न विष्णुस्मरणं तस्य जिह्वयापि कदाचन ।
तस्य जिह्वा छूरिकया कर्तनं पापमोचनम् ॥६४ ॥

श्रीदेव्युवाच —

देवदेव महादेव परमेश तपोधन ।
गायत्रीं परमाराध्यामशौचेन जपेद् यदि ।
तदाऽशुचिर्द्विजश्रेष्ठः सहसा याति शूद्रताम् ॥६५ ॥

श्रीदेव उवाच —

अत्याज्या तान्त्रिकी सन्ध्या जनने मरणे तथा ।
त्याज्या च वैदिकी सन्ध्या जनने मरणे सदा ॥६६ ॥

प्रशस्तं तान्त्रिकं स्नानं गायत्रीतन्त्रसम्मतम् ।
तान्त्रिकाचमनं कृत्वा ततः सन्ध्या च तान्त्रिकी ॥६७ ॥

गायत्रीं तान्त्रिकीं [१]जप्त्वा सूर्यायार्घ्यञ्च तान्त्रिकम् ।
प्रजपेद् वैदिकीं नित्यां गायत्रीं परमाक्षरीम्[२] ॥६८ ॥

पूजयेत् पार्थिवं लिङ्गं शिवं परमकारणम् ।
शक्तिमन्त्रं जपेदिष्टं प्रशस्यं शक्तिपूजनम् ॥६९ ॥

नाशौचं शक्तिमन्त्रेषु शिवमन्त्रे नगात्मजे ।
श्रीविष्णोस्तान्त्रिके मन्त्रे नाशौचं बाधते प्रिये ॥ ७० ॥

इति ते कथितं भेदं गायत्रीतन्त्रसम्मतम् ।
प्रशस्यं तान्त्रिकं कृत्यं वैदिकं वर्जयेत् कलौ ॥ ७१ ॥

तान्त्रिकी वैदिकी सन्ध्या अन्तःसन्ध्या त्रिधा मता ।
अशौचं वैदिके शस्तं तान्त्रिके न कदाचन ॥ ७२ ॥

---

१. जप्ता- ग. ।　　　　　२. परमाक्षराम्- ख. ।

शौचे वापि अशौचे वा अन्तःसन्ध्या प्रतिष्ठिता।
तान्त्रिकी वैदिकी सन्ध्या अन्तःसन्ध्यां विना वृथा ॥७३ ॥

या नित्या ब्रह्मगायत्री सर्वदेवेषु सम्मता।
स्मृतिशास्त्रे संहितायां पुराणेषु प्रतिष्ठिता ॥७४ ॥

अतः सर्वं परित्यज्य जपेत् तन्त्रमतं कलौ।
तान्त्रिकी यदि गायत्री तन्त्रापि वैदिकी भवेत् ॥७५ ॥

आत्माभिलषितं पिण्डं चतुर्वर्गप्रदायकम्।
न कुर्याद् यदि देवेशि तत् फलं प्रवदामि ते ॥७६ ॥

अपि दैवाद्धि चार्वङ्गि आत्महत्याशतोपमा।
परं ब्रह्ममयी हत्या आत्महत्या वरानने ॥७७ ॥

अनेनैव विधानेन यज्ञसूत्रं द्विजातये।
यो ददाति नरो मर्त्यः सोऽश्वमेधफलं लभेत् ॥७८ ॥

संस्थाप्य ताम्रपात्रेषु दिव्यवस्त्रसमन्वितम्।
हिरण्यं मुद्गतुल्यञ्च दक्षिणासहितं च तत्[1] ॥७९

यो ददाति नरो भक्त्या ब्राह्मणे[2] वेदपारगे।
भुक्त्वा स्वर्गं विप्रयोनौ जायते स[3] नरः पुनः ॥८० ॥

द्विजत्वं प्राप्यासौ मर्त्यः परं ब्रह्माधिगच्छति।
वामहस्तस्य मूलादि दक्षिणस्य करस्य च ॥८१ ॥

अङ्गुष्ठान्तं भवेत् सूत्रं त्रिगुणं त्रिगुणात्मकम्।
सप्रमाणं तदा सूत्रं चतुर्वेदसमन्वितम् ॥८२ ॥

स्वगोत्रप्रवरैर्युक्तं शाखापल्लवसंयुतम्।
नागपाशयुतं ग्रन्थिं ब्रह्मविष्णुशिवात्मकम् ॥८३ ॥

---

१. यत्- ग.।       २. विप्राय- ग.।       ३. पुनः- ग।

द्व्यङ्गुलान्तरिते सूत्रे वामावर्तक्रमेण च।
तिष्ठन्ति सर्वतन्त्राणि रूपादीनि वरानने ॥८४॥

परस्य ब्रह्मणो दण्डं यत् सूत्रं त्रिगुणात्मकम्।
यत्र श्रीकुण्डली शक्तिश्छत्रं दण्डश्च ब्रह्मणः ॥८५॥

अतस्त्रिदण्डी देवेशि कथ्यते तत्त्वदर्शिभिः।
गायत्रीं प्रथमे भद्रे गोत्रञ्च तदनन्तरम् ॥८६॥

गायत्रीं प्रपठित्वा वै ग्रन्थिं दद्याद् द्विजोत्तमः।
प्रतिपाके पठेद् विप्रो गायत्रीं ब्रह्मसंमिताम् ॥८७॥

हस्ताकर्षणमात्रेण गायत्रीं प्रपठेद् द्विजः।
एतत् ते कथितं सर्वं यज्ञसूत्रस्य निर्णयम् ॥८८॥

ॐ अस्य यज्ञोपवीतस्य अधिष्ठातृदेवता
ब्रह्मविष्णुरुद्रेश्वरसदाशिवा मम वामस्कन्धनिवासे विनियोगः।

गायत्रीं प्रपठित्वा वै वामस्कन्धे निधापयेत्।
विशेषमत्र वक्ष्यामि रहस्यसदृशं पुरम् ॥८९॥

अत्यन्तगोपनं भद्रे नाम्ना मृत्युञ्जयं श्रृणु।
गायत्री प्रथमं भद्रे अमृतं सिद्धिदायकम् ॥९०॥

द्वितीयमजपा विद्या तृतीयममृतं स्मृतम्।
[१]अमृतत्रयसंयुक्तं यदा सिद्धिर्न जायते ॥९१॥

स कालः परमब्रह्म तत्र पूजां समाचरेत्।
रहस्यातिरहस्यञ्च सारमेतत् प्रकीर्तितम् ॥९२॥

॥ इत्यागमसन्दर्भे देवदेवीसंवादे गायत्रीतन्त्रस्य
चतुर्थः पटलः ॥

---

१. अमृतत्रयसंयोगं यदा मनसि जायते- ख.।

## ॥अथ पञ्चमः पटलः ॥

श्रीदेव उवाच —

सन्ध्यादौ स्मरणं कृत्वा [१] पञ्चत्रिंशद्द्विजोत्तमान् ।
दीपिनीं दशधा जप्त्वा दशधा प्रणवं जपेत् ॥१ ॥
गायत्रीं दशधा जप्त्वा सन्ध्याध्यानं ततः परम् ।
सन्ध्याध्यानं ततः कृत्वा ततः सन्ध्यामुपास्महे ॥२ ॥
गायत्रीं दशधा जप्त्वा पुनः सन्ध्यां समापयेत् ।
रहस्यं सप्तसन्ध्याया ज्ञात्वा सन्ध्यां करोति यः ॥३ ॥
स सन्ध्याफलमाप्नोति अन्यथा शूद्रवत् प्रिये ।
गायत्रीदीपिन्यां प्रथमं ब्राह्मणस्मरणं
ब्रह्मदीपिनीं सप्रणवगायत्रीं दशधा दशधा
दशधा त्रिसन्ध्यञ्च सन्ध्याध्यानं कृत्वा सन्ध्यागायत्रीमुपास्महे ।
गायत्रीं दशधा जप्त्वा पुनः सन्ध्यां समापयेत् ॥४ ॥
चन्द्रसूर्योपरागे च शूद्रश्राद्धे पुरोहितः ।
कृतचाण्डालवद् विप्रस्तत्क्षणाद् याति निश्चयम् ॥५ ॥
हयदानं यथा दूष्यं शूद्रश्राद्धं तथैव च ।
न दूष्यं मन्त्रदानं स्यात् शूद्रेष्वपि कदाचन ॥६ ॥
यदन्नं ग्रहणे श्राद्धे दीयते शूद्रजातिभिः ।
शूद्रान्नं तद्धि चार्वङ्गि कथ्यते तन्त्रकोविदैः ॥७ ॥
अन्यस्य दिवसस्यान्नं श्राद्धस्य वरवर्णिनि ।
आमान्नं तच्च सर्वत्र शूद्रान्नं न च कुत्रचित् ॥८ ॥
शूद्रान्नपदमात्रेण सिद्धान्नं कथ्यते बुधैः ।
आदाय शूद्रसिद्धान्नं यथा विप्रः पराभवम् ॥९ ॥

---

१. चतुर्विंशद्- ग.।

गायत्रीरहितो विप्रस्तथा पराभवं सदा।
आद्यन्ते यज्जपं भद्रे गायत्र्या दशधा दश ॥१० ॥

आद्यन्ते दशधा यद् यत् [१] सन्ध्याया अङ्गमेव तत्।
न नित्यं तज्जपं भद्रे न च कार्यं कदाचन ॥११ ॥

कुशासने समासीनः प्राङ्मुखो वाप्युदङ्मुखः।
गायत्रीं प्रजपेद् धीमान् अष्टोत्तरशतं गृहे ॥१२ ॥

जले यदि जपेद् विद्यां न दोषस्तत्र जायते।
जलशायी यदा विष्णुर्गायत्रीं प्रजपेज्जले ॥१३ ॥

दशधा एकधा [२] वापि गायत्रीं प्रजपेत् सुधीः।
अन्यथा विफला सन्ध्या सफला न कदाचन ॥१४ ॥

गायत्रीरहितो विप्रः स कथं ब्राह्मणो भवेत्।
ॐशन्न [३] आदियुक्तवाक्यानि प्राणायामादिकानि च ॥१५ ॥

गायत्रीसर्गपर्यन्तं सन्ध्येति परिकीर्तिता।
जीवव्यक्तिः स एवात्मा एक एव न चान्यथा [४] ॥१६ ॥

द्वितीयस्तत्र गायत्री जायते ब्राह्मणः स्वयम्।
शरीरी तत्र जीवात्मा शरीरं तस्य ब्राह्मणः ॥१७ ॥

सदा पवित्रं विप्रात्मा अतः पापैर्न लिप्यते।
रूपादितत्त्वमाधारमात्मा आधेय उच्यते ॥१८ ॥

गायत्रीस्मरणात् पापमत एव न विद्यते।
शरीरे परमेशानि पद्मपत्रे यथा पयः ॥१९ ॥

गायत्रीनिर्मितो देहो यस्य जीवस्य पार्वति।
ब्राह्मणः कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः ॥२० ॥

---

१. गायत्र्या- ग.। २. तु करे वापि-ग.।
३. आदीनि-ग.। ४. संशयः-ग.।

जीवात्मा न च जप्तव्यो महाविद्या दशाक्षरी ।
सहसा जायते जन्म रेतःशोणितसंपुटे ॥२१ ॥

इति ते कथ्यते वेदे परब्रह्ममये घटे ।
कुलशास्त्रे ब्रह्मघटे गायत्रीकुण्डलीषु च ॥२२ ॥

गायत्रीसहितश्चात्मा [1]एकतालयमाप्नुयात् ।
अतोऽत्र कथ्यते वेदे कुलीनश्च द्विजः सदा ॥२३ ॥

शाठ्यादवज्ञया भद्रे न जपेत्तु द्विजो हि यः ।
यवनस्य तु वीर्येण तस्य जन्म सुनिश्चयम्[2] ॥२४ ॥

गायत्रीष्वप्यविश्वासो यस्य विप्रस्य जायते ।
स एव यवनो देवि गायत्रीं स कथं जपेत् ॥२५ ॥

स पापी यवनो देवि यद्देशे विद्यते सदा ।
तद्देशं पतितं मन्ये [3]राजा पातकसंयुतः ॥२६ ॥

तस्य संसर्गिणो विप्राः पतितास्ते च निन्दिताः ।
गायत्रीरहितस्यान्नं यवनान्नाधमं [4]स्मृतम् ॥२७ ॥

यवनान्नं वरं भुङ्क्ते न जलं तस्य पार्वति ।
यदि दैवाच्च गोहत्या जायते ब्राह्मणादिषु ॥२८ ॥

पञ्चाहाभ्यन्तरे कुर्याद् यतिचान्द्रायणं कलौ ।
तच्च पञ्चदिनादूर्ध्वं चान्द्रायणशतं चरेत् ॥२९ ॥

कथोपकथनाच्चैव भोजनाद् भ्रमणाद् यथा ।
अन्नसंख्यासमं पापं वाक्यमानेन गोवधम् ॥३० ॥

नित्यं प्रवर्द्धते तस्य कलिकाले विशेषतः ।
आलोक्य तन्मुखं लोकस्तत्समः पातकी यथा ॥३१ ॥

---

१. एकत्र- ख.।　　२. सुनिश्चितम्- ग.घ.।

३. राजपातकसंयुतम्- ख.।　　४. प्रिये- ग.घ.।

यतिचान्द्रायणं कृत्वा तल्लोकः शुद्धितामियात् ।
सप्तमेऽहनि संप्राप्ते स भवेद् ब्रह्मघातकः ॥३२ ॥

निष्कृतिर्नास्ति तत्रापि प्रायश्चित्तं न विद्यते ।
नानापापयुतो भूत्वा व्याघ्रवद् वर्द्धते कलौ ॥३३ ॥

कृत्वा च तस्य संसर्गं व्याघ्रवद् वर्द्धते सदा ।
एकपादं द्विपादं वा त्रिपादं युगभेदतः ॥३४ ॥

सत्ये च एकपादं स्यात् त्रेतायाञ्च द्विपादकम् ।
द्वापरे च त्रिपादं स्यात् कलिकाले चतुर्गुणम् ॥३५ ॥

स्वहस्तेन कृता हत्या दैवाद्वा सर्वजातिषु ।
यतिचान्द्रायणं शस्तं पादादीन् न कलेर्मतम् ॥३६ ॥

गायत्रीरहितस्यापि पापमेवं प्रवर्तते ।
यस्य गेहेषु गोहत्या यवनेन कृता कलौ ॥३७ ॥

शतचान्द्रायणं कृत्वा गोस्वामी शुद्धतामियात् ।
इति ते कथितं दैवं परं देव कलेर्मतम् ॥३८ ॥

स्वहस्तमारणाच्चैव गोवधं दूषितं यथा ।
गायत्रीरहितो विप्रस्तथैव दूषितः सदा ॥३९ ॥

आलापाद् गात्रसंस्पर्शान्निःश्वासात् सहभोजनात् ।
ये लोकास्तस्य संसर्गं तेऽपि तद्दोषभागिनः ॥४० ॥

यतिचान्द्रायणं कृत्वा ते लोकाः शुद्धितामियुः ।
अन्यस्य यदि गोहत्या यवनेन कृता कलौ ॥४१ ॥

अन्यवेश्मनि सा हत्या प्राप्नुयान्निश्चयं गृही ।
अर्द्धं कृत्वा तु गोस्वामी गृहस्वामी तथैव च ॥४२ ॥

यतिचान्द्रायणं कृत्वा पूतो भवति तत्क्षणात् ।
प्रसङ्गात् कथितं तुभ्यं दैवाद् गोवधनिर्णयम् ॥४३ ॥

गायत्र्याः कारणमात्मा आत्मनः कारणं स च ।
उभयोः कारणं मन्त्रं यज्जप्तमात्मनानिशम् ॥४४ ॥

अन्तरात्मसमो ह्यात्मा गायत्री परमात्मना ।
ज्ञानात्मसहितं मन्त्रं यज्जप्तमात्मनानिशम् ॥४५ ॥

एतत्ते कथितं सूक्ष्मं परमार्थनिरूपणम् ।
प्रथमे दशधा जप्त्वा गायत्रीं [१]ब्राह्मणं प्रिये ॥४६ ॥

जीवात्मना च जप्तव्यं दशधा प्रजपेत्ततः ।
अतोऽहं तद्द्वयं जप्त्वा यस्य य इष्टदैवतः ॥४७ ॥

प्रथमाष्टाक्षरं सृष्टिं जप्त्वा इष्टं जपेत् सुधीः ।
द्वितीयाष्टाक्षरं जप्त्वा ततस्तु पूजयेन्मनुम् ॥४८ ॥

तृतीयाष्टाक्षरं जप्त्वा इष्टमन्त्रं ततो जपेत् ।
सृष्टिस्थितिलयं देवि जपनिर्णयलक्षणम् ॥४९ ॥

यथाशक्ति जपं कृत्वा पूर्ववत् पूजयेत् ततः ।
शालग्रामशिलामग्रे कृत्वा [२]दिव्यं करोति यः ॥५० ॥

शालग्रामशिला स्पृष्ट्वा यदि दिव्यं करोति यः ।
कर्ता कारयिता भद्रे त्रिकोटिकुलसंयुतः ॥५१ ॥

रौरवं नरकं याति नान्यथा च कदाचन ।
तथा गङ्गोदकं ताम्रं गोमयं गोरजस्तथा ॥५२ ॥

सत्यं वापि असत्यं वा स्पृष्ट्वा दिव्यं करोति यः ।
कर्ताऽथ रौरवं याति तथा कारयिता प्रिये ॥५३ ॥

उभयोः पुनरावृत्तिर्नरयोनिषु नास्ति वै ।
तस्यास्ति पुनरावृत्तिर्व्याघ्रशूकरयोनिषु ॥५४ ॥

---

१. ब्राह्मणः- ख.। २. दिव्या- ख.।

दिव्यकर्तुः कारयितुर्जपपूजा वृथा यथा ।
गायत्रीरहितस्यापि नरकं चोत्तरोत्तरम् ॥५५ ॥

पुराणं संहिताशास्त्रं शूद्रस्य निकटे यथा ।
पठित्वा शूद्रवद् विप्रो गायत्रीरहितस्तथा ॥५६ ॥

पुराशब्दः [१]प्राविवाची न तु गायत्रीवाचकः ।
पुरा प्राचीनवृत्तान्तं पापपुण्यसमन्वितम् ॥५७ ॥

प्राप्नोति श्रवणात् पुण्यं श्रवणात् पापनाशनम् ।
अतोऽत्र कथ्यते वेदे पुराणं ब्रह्मसम्मितम् ॥५८ ॥

पुराणं संहिताशास्त्रं स्मृतिशास्त्रं तथैव च ।
गायत्र्याः परमेशानि सदर्थं ब्रह्मसम्मितम् ॥५९ ॥

श्रवणे नाधिकारोऽस्ति शूद्राणां च कदाचन ।
एतत्ते कथितं देवि ब्रह्मतत्त्वस्वरूपिणम् ॥६० ॥

ब्राह्मणात् परतरं किञ्चिद् भूतले नास्ति पार्वति ।
शूद्रोऽपि अधिकारी स्याद् यज्ञसूत्रप्रदानतः[२] ॥६१ ॥

परीक्षा उपवीतस्य ब्राह्मणस्य कलौ यथा ।
ब्राह्मणस्य विवादेषु जातिध्वंसे सुरार्चिते ॥६२ ॥

अग्निं प्रज्वाल्य विधिवद् विधिज्ञ्च पूजयेद् विधिम् ।
दत्त्वा पञ्चाहुतिं वह्नौ हुनयेत् तदनन्तरम् ॥६३ ॥

प्राणादिपञ्चभूतानां होमं कुर्याद् विशालधीः ।
ततः स्कन्धात् समुत्तोल्य उभयोरुपवीतकम् ॥६४ ॥

गायत्रीं प्रपठित्वा वै निःक्षिपेद् वह्निमण्डले ।
यस्य सूत्रं भवेद् भस्म निश्चयं पतितः स च ॥६५ ॥

---

१. प्राचीवाची णश्च- ङ. । २. यज्ञसूत्रस्य दानतः - ग. ।

उभयोर्यदि भस्म स्यात् तदैव समता द्वयोः ।
विवादं ब्राह्मणस्त्रीषु जायते यदि सुन्दरि ॥६६ ॥

परीक्षैवं तदा भद्रे तत्पतेर्नात्र संशयः ।
कलौ दुष्टं महेशानि ब्राह्मणे घृतकाञ्चनम् ॥६७ ॥

निस्तेजाः ब्राह्मणाः सर्वे कलिकाले विशेषतः ।
सतेज उपवीतञ्च उपवीतं परीक्षयेत् ॥६८ ॥

एतत्तु ब्राह्मणं तन्त्रं यस्य वेश्मनि संस्थितम् ।
कैलाससदृशं भद्रे मन्दिरं तस्य नान्यथा ॥६९ ॥

मन्दिरं परमेशानि एतत्तन्त्रविवर्जितम् ।
श्मशानं परमेशानि मन्दिरं तस्य नान्यथा ॥७० ॥

[१]ब्रह्मचर्येषु शूद्राणां नाधिकारः कदाचन ।
ब्रह्मचर्यं ब्राह्मणस्य कलौ नास्ति कदाचन ॥७१ ॥

शूद्रसेवा सदा यस्य विप्रस्य क्षत्रियस्य वा ।
द्वौ यथा नरकं यातः शूद्रेण सह रौरवम् ॥७२ ॥

गायत्रीरहितो विप्रस्तथैव नरकं व्रजेत् ।
एतत्तन्त्रमविज्ञाय अन्यशास्त्रं पठेत्तु यः ॥७३ ॥

स यथा शूद्रवद् विप्रो गायत्रीरहितस्तथा ।
ब्राह्मणक्षत्रवैश्यानां शूद्राणाञ्च स्त्रियस्तथा ॥७४ ॥

सङ्गमाद् भूतराक्षस्यो यक्षिणी भूतिनी यथा ।
तस्याः सङ्गममात्रेण भूतः स्यात् तत्पतिर्यथा ॥७५ ॥

गायत्रीरहितो विप्रस्तथैव याति शूद्रताम् ।
न चात्र वर्णविश्लेषं न च वा पददूषणम् ॥७६ ॥

---

१. इत्यागमसन्दर्भे ज्ञानदर्पणे देवदेवीसंवादे गायत्रीतन्त्रे ब्राह्मणतन्त्रमात्रज्ञाननिरूपणं पञ्चमः पटलः- ग.घ.।

नात्र सन्धिर्महेशानि न चात्र श्लोकयोजना ।
पुरातनी पूर्णविद्या परंब्रह्मप्रकाशिनी ॥७७ ॥

अनन्तमहिमायुक्तानन्तव्याकरणैर्युता ।
स्वभावतः सदा सिद्धा गायत्री परदेवता ॥७८ ॥

यः स्वरः प्रथमे उक्तो ब्रह्मविष्णुशिवात्मकः ।
तदाकारः स्वरः पञ्चदशकुमाररञ्जितः ॥७९ ॥

वायुबीजसमाकारो विसर्गान्तः स्वरस्ततः ।
गायत्र्यन्ते महेशानि द्वितीये सर्वभावना ॥८० ॥

सर्वमन्त्रेषु [१] विद्यासु नास्ति वै पददूषणम् ।
पदानां साधनं कृत्वा गायत्रीं प्रजपेद् यदि ॥८१ ॥

ब्रह्मविद्या च गायत्री सहसा कृत्रिमा भवेत् ।
यथा शूद्रो हविष्याशी राममन्त्रं जपेत् सदा ॥८२ ॥

स यथा रौरवं याति गायत्रीरहितस्तथा ।
ब्रह्मचर्येषु शूद्राणां नाधिकारः कदाचन ॥८३ ॥

ब्रह्मचर्यं ब्राह्मणस्य कलौ नास्ति कदाचन ।
पूर्वजन्मनि यः शत्रुः स शत्रुरिह जन्मनि ॥८४ ॥

विधृत्य कपटी वेशमागतः शत्रुसन्निधिम् ।
दूतकार इवारन्तं कृत्वा सदसि संविशेत् ॥८५ ॥

उपविश्य सभामध्ये निन्दावादे प्रवर्तते ।
अज्ञानादुभयोर्योगात् कर्मसूत्रस्य योजनम् ॥८६ ॥

वृथा शिवो वृथा शक्तिः सूर्यो लम्बोदरो वृथा ।
वृथा गङ्गा च गायत्री वृथा सन्ध्या वृथा बलिः ॥८७ ॥

---

१. विद्यासु- ङ. ।

तथैव ब्राह्मणं यज्ञं सर्वं व्यर्थं कदर्थनम् ।
सर्वं मिथ्यैवेह लोकः सत्यं कृष्णं भजाधुना ॥८८ ॥

गीतालापमयं भावं श्लोकं भावय सत्तमे[1] ।
श्रुत्वा शत्रोर्मुखाच्छत्रोर्मतिनाशः[2] प्रजायते ॥८९ ॥

सर्वं त्यक्त्वा शत्रुवाक्यात् कृष्णदेवं समर्चयेत् ।
शत्रोर्वाक्यं ततः श्रुत्वा सर्वपूजां परित्यजेत् ॥९० ॥

तस्मै देवस्तथा रुष्टः कृष्णः कमललोचनः ।
शिवशक्तिमयं सर्वं ब्रह्माण्डं कोटिकोटिशः ॥९१ ॥

यः शिवः कृष्ण एवात्मा यः कृष्णः शिव एव सः ।
शिवनिन्दां हरिः श्रुत्वा हृदि शल्यमिवार्पणम् ॥९२ ॥

मतिनाशस्य यद्धर्मो महापातकसंयुतः ।
व्यर्थं भवति तद्धर्मो गोहत्यासहितः सदा ॥९३ ॥

ब्रह्महत्या च गोहत्या स्त्रीहत्या प्रतिवासरे ।
कृष्णहत्यामवाप्नोति बलिदानं विना प्रिये ॥९४ ॥

बलिदानं महेशानि सर्वपूजासु शस्यते ।
अश्वमेधे राजसूये गोवधे क्षुद्रपूजने ॥९५ ॥

पूजने सर्वदेवानां बलिदानं प्रशस्यते ।
विना बलिप्रदानेन यदि शक्तिं प्रपूजयेत् ॥९६ ॥

शक्तिहत्यामवाप्नोति ब्रह्महत्या पदे पदे ।
शक्तिपूजां विना भद्रे यदि कृष्णं प्रपूजयेत् ॥९७ ॥

सा पूजा काष्ठपूजावद् गोहत्या कृष्णपूजने ।
शालग्रामशिलाद्यग्रे कृत्वा दिव्यं करोति यः ॥९८ ॥

---

१. सत्तम- ख. ।　२. मतिनाशं- ड. ।

शालग्रामादिकं स्पृष्ट्वा यदि दिव्यं करोति च।
तथा गङ्गाजलादींश्च ताम्रञ्च गोमयं तथा ॥९९ ॥

तुलसीं च महादेवि सुवर्णं गोरजस्तथा।
वेदादीन्यपि पुण्यानि द्रव्याणि यानि यान्यपि ॥१०० ॥

तीर्थपीठादिनामानि स्पृष्ट्वा दिव्यं करोत्यपि।
दिव्यकर्तुः कारयितुर्नरकान्न च निष्कृतिः ॥१०१ ॥

पूर्वोक्तं यन्महेशानि तत्पापस्य विशुद्धये।
यदि ब्रह्मवधः प्रोक्तः प्रायश्चित्तं चरिष्यति ॥
तस्मात् पापात् तदा शुद्धौ नान्यथा कल्पकोटिभिः ॥१०२ ॥

अपरञ्च प्रवक्ष्यामि श्रृणुष्व कमलानने।
गङ्गास्नानं हि नन्दादौ सर्वपापप्रणाशनम् ॥१०३ ॥

गङ्गातोये कृतं दिव्यं तत् पापं नगनन्दिनि।
महापातकोपपापं गङ्गास्नानाद् विनश्यति ॥१०४ ॥

गङ्गायां मौषलं स्नानं महापातकनाशनम्।
सर्वतत्त्वमयी गङ्गा परमात्मस्वरूपिणी ॥१०५ ॥

सर्वतीर्थमयी गङ्गा सर्वदेवमयी ध्रुवा।
स्नानमात्रेण गङ्गायां पापं ब्रह्मवधादिकम् ॥१०६ ॥

दुराधर्षं कथं याति चिन्तयेद् यो वदेदिति।
तस्याहं प्रददे घोरं कोटिब्रह्मवधोद्भवम् ॥१०७ ॥

स्तुतिवादमिमं मत्वा कुम्भीपाके महीयते।
आकल्पं नरकं भुक्त्वा ततो जायते गर्दभः ॥१०८ ॥

गङ्गासमं त्रिभुवने नास्ति निस्तारकारणम्।
नानारत्नमयं दिव्यं मन्दिरं यानमेव च ॥१०९ ॥

तथा विलक्षणा शय्या रत्नसिंहासनस्तथा ।
छत्रं रत्नमयं दिव्यं तथैव रत्नपादुकाम् ॥११० ॥

सरोवरं तथा दिव्यमन्नमेरुं तथैव च ।
गुरुं विलङ्घ्य यो मूढो विष्णवे विनिवेदयेत् ॥१११ ॥

पुरीषञ्च तथा मूत्रं [१]जलमग्नं भवेद् ध्रुवम् ।
गृहं यानं तथा शय्या पादुका छत्रमुत्तमम् ॥११२ ॥

विष्ठापुञ्जं भवेत् सर्वं शिष्यस्तत्र कृमिर्यथा ।
भविष्यति न सन्देहः कलिकाले च नान्यथा ॥११३ ॥

कोटिवंशान् समादाय विष्ठायां जायते कृमिः ।
एवं हि शारदीं पूजां यदि नो कुरुते नरः ॥११४ ॥

स चैवं फलमाप्नोति नान्यथा च कदाचन ।
गुरोराज्ञां विना यश्च कन्यादानं करोति च ॥११५ ॥

मेषी भवति सा कन्या दाता मेषो भवेद् ध्रुवम् ।
मेषी मेषेण शृङ्गारं जायते परजन्मनि ॥११६ ॥

वरं कन्याविक्रये च पापमेवं न जायते ।
अनन्तसिद्धिदा चाज्ञा गुरुदेवस्य सुन्दरि ॥११७ ॥

गुरोरभावे चार्वङ्गि तथाभावे कुलस्य च ।
न दोषो जायते भद्रे मम वाक्ये च सुन्दरि ॥११८ ॥

एतत् सर्वं वरारोहे प्रतिमन्वन्तरे कलौ ।
भविष्यति न सन्देहो मम वाक्यं सुनिश्चयम् ॥११९ ॥

बलिदानं विना हत्या हत्या सर्वत्र गर्हिता ।
एवं निन्दापरो भूत्वा त्रिकोटिकुलसंयुतः ॥१२० ॥

---

१.जलमग्नं- ङ.।

सर्वधर्मं परित्यज्य स यथा रौरवं व्रजेत् ।
गायत्रीरहितो विप्रस्तथैव नरकं व्रजेत् ॥१२१ ॥

यथा वक्ता तथा श्रोता प्रतिपालयिता तथा ।
गायत्रीरहितो विप्रस्तथैव नरकं व्रजेत् ॥१२२ ॥

प्रथमाष्टाक्षरं भद्रे ऋग्वेद इति कथ्यते ।
द्वितीयाष्टाक्षरं भद्रे सामवेदोऽभिधीयते ॥१२३ ॥

तृतीयाष्टाक्षरं भद्रे यजुर्वेदिति कथ्यते ।
चतुर्थाष्टाक्षरं भद्रे अथर्ववेद उच्यते ॥१२४ ॥

वेदमाता च गायत्री अत एव प्रगीयते ।
उपहारः पशोर्मांसं सतत्त्वं शोणितं बलिम् ॥१२५ ॥

पञ्चभूताक्षरमयं जीवात्मसहितं बलिम् ।
ज्योत्स्नाशक्तिसमायोगादुपहारमुपस्थितम् ॥१२६ ॥

अत एव हि सर्वत्र बलिरित्यभिधीयते ।
यथा पूज्यस्तथा पूजा पूजकश्च तथैव च ॥१२७ ॥

दत्त्वा पूजां देवतायै पूजकः स्वर्गमश्नुते ।
बलिवाचकपूजा स्यात् पूजकः सेवकः स्मृतः ॥१२८ ॥

[१]यस्योद्देशं सा पूजा स्याद् निष्कामो मोक्षमाप्नुयात् ।
यदि न दीयते पूजा देवतायै नराधमैः ॥१२९ ॥

दुर्बलः कुक्कुरो भूत्वा परजन्मनि जायते ।
सर्वेषां मृतजन्तूनां पूतिमांसं समश्नुते ॥१३० ॥

---

१. यस्य देशं- ख. ।

योो मूढः कृतचाण्डालो बलिदानं निषेधति[१] ।
तस्य जिह्वा छुरिकया कर्तनं पापमोचनम् ।।१३१ ।।

तदा सद्गतिमाप्नोति अन्यथा शूकरो भवेत् ।
[२]नररूपबलिर्भूत्वा परजन्मनि जायते ।।१३२ ।।

बलिदानं महेशानि स्वर्गसोपाननिर्णयम् ।
निष्कामनात् तदा भद्रे मोक्षसोपाननिर्णयम् ।।१३३ ।।

स्वर्गभोगं विना भद्रे न हि मुक्तिः प्रजायते ।
आरुह्य बलिसोपानं परं ब्रह्माधिगच्छति ।।१३४ ।।

कुतो हत्या च पूजायां कस्य हत्या वरानने ।
सर्वं ब्रह्ममयं ह्येतत् पूजाकाले विशेषतः ।।१३५ ।।

इति यो वेत्ति स ज्ञानी स एव वैष्णवोत्तमः ।
स शाक्तः शिवभक्तश्च परं ब्रह्माधिगच्छति ।।१३६ ।।

मासि मासि प्रदातव्यं बलिदानं द्विजातिभिः ।
शुक्लाष्टम्यां विशेषेण पूजयेत् परमेश्वरीम् ।।१३७ ।।

उपोष्य विधिवत् पूजां गन्धपुष्पादिभिः सुधीः ।
एकादशी कोटिफलं शुक्लाष्टम्यामुपोषणे ।।१३८ ।।

शुक्लाष्टम्यां बलिं दत्त्वा अश्वमेधफलं लभेत् ।
शरत्काले महाष्टम्यां न च दद्यान्महाबलिम् ।।१३९ ।।

प्रत्यहं यस्तु पूतात्मा ददाति बलिमुत्तमम् ।
शारदायै बलिं दद्यान्न हत्या न च दूषणम् ।।१४० ।।

कृष्णच्छागद्वयं भद्रे महिषद्वयमेव च ।
महाबलिरिति प्रोक्तो महाष्टम्यां परित्यजेत् ।।१४१ ।।

---

१. निषिध्यति-ङ. ।    २. नररूपं-ख. ।

शुद्धसत्त्वात्मकं शुद्धः सत्त्वनिर्मितविग्रहः ।
न मर्त्यः परमेशानि बलिदानं परित्यजेत् ॥१४२ ॥

तत्राह परमेशानि शुद्धसत्त्वात्मकं श्रृणु ।
निद्रया रहितो यस्तु कुतृष्णारहितस्तथा ॥१४३ ॥

ज्ञानशक्तिमयो नित्यः परमानन्दविग्रहः ।
शुद्धसत्त्वात्मकस्तेन कथ्यते तन्त्रकोविदैः ॥१४४ ॥

इच्छाशक्ती रजोरूपा सा च सृष्टिस्वरूपिणी ।
कथ्यते रजोगुणस्तेन मुनिभिस्तन्त्रदर्शिभिः ॥१४५ ॥

वैष्णवी ज्ञानशक्तिर्या सर्वभूतदयामयी ।
अतः सत्त्वगुणः ख्यातः कथ्यते तन्त्रकोविदैः ॥१४६ ॥

अनेककोटिब्रह्माण्डं रजःसत्त्वात्मकं मतम् ।
कृते बलिप्रदाने च चण्डिकायै प्रसन्नधीः ॥१४७ ॥

रजस्तमात्मको देहस्त्यक्त्वा सत्त्वात्मको भवेत् ।
शुद्धसत्त्वात्मको भूत्वा महाभोगमवाप्नुयात् ॥१४८ ॥

विना बलिप्रदानेन कुतः सत्त्वात्मको भवेत् ।
बलिभिः साध्यते मुक्तिर्बलिभिः साध्यते दिवम् ॥१४९ ॥

बलिभिः साध्यते धर्मो ह्यर्थश्च बलिभिर्भवेत् ।
सगुणो यो नरो राजा बलिं दद्याद् दशाब्दतः ॥१५० ॥

बलिदानं विना मांसं यो भुङ्क्तेऽज्ञानमोहितः ।
ग्रासे ग्रासे मलं भुङ्क्ते शूकरस्य च नान्यथा ॥१५१ ॥

बलिदानं विना हत्यां यः करोति नराधमः ।
अधमः कथ्यते तेन महाबौद्धेति कथ्यते ॥१५२ ॥

यस्य यः कुरुते हत्यां स तस्य परजन्मनि ।
कुरुते नात्र सन्देहः सत्यं सत्यं न चान्यथा ॥१५३ ॥

राजा श्रीसुरथो नाम्ना पुरासीन्मांसलोलुपः ।
भुङ्क्ते अज्ञानतो मांसं हत्वा च विविधान् पशून् ॥१५४॥

स राजा तेन पापेन पीडितः शत्रुभिः सदा ।
शत्रुणा पीडितो भूत्वा प्रययौ मेधसालयम् ॥१५५॥

प्रणम्य मेधसं राजा वृत्तान्तं विनिवेदयेत् ।
किं करोमि क्व गच्छामि अब्रवीत् स पुनः पुनः ॥१५६॥

स मुनिस्तद्वचः श्रुत्वा आश्वास्य सुरथं नृपम् ।

मेधस उवाच —

का चिन्ता राजशार्दूल जपस्वैकं महामनुम् ॥१५७॥

पञ्चाक्षरीं तस्य कर्णे कथयामास मेधसः ।
ते पापाः काकरूपाश्च निर्ययुः कर्णगह्वरात् ॥१५८॥

तान् दृष्ट्वा सुरथो राजा उवाच मेधसं मुनिम् ।
किमेतद् ब्राह्मणश्रेष्ठ यदि जानासि मे वद ॥१५९॥

मेधस उवाच —

बलिदानं विना हत्या या कृता मांसलालसात् ।
ते पापाः काकरूपेण निर्ययुस्तव विग्रहात् ॥१६०॥

पञ्चाक्षरबलाद् राजन् ते पापा निश्चयं ययुः ।
पशुहत्याप्रमाणेन दिवसे दिवसे नृप ॥१६१॥

निजगात्रस्य रुधिरं दत्त्वा पापं प्रमोचय ।
अधुना भज राजेन्द्र भवानीं भवमोचिनीम् ॥१६२॥

भवानीं त्रिदशाराध्यां चतुर्वर्गप्रदायिनीम् ।
तच्छ्रुत्वा वचनं तस्य स राजा पूजने मनः ॥१६३॥

ददौ परमयत्नेन त्रिभिर्वर्षैश्च सिद्धताम् ।
सम्प्राप्य राज्यं सुरथो बलिदानप्रभावतः ॥१६४॥

बलिदानस्य माहात्म्यं न हि वक्तुं क्षमो मम।
दिवसे दिवसे राजा बलिं दत्त्वा सहस्रशः ॥१६५ ॥

बुभुजे पृथिवीपालो मेदिनीं सागरावधिम्।
लक्षवर्षप्रमाणेन मेदिनीं बुभुजे नृपः ॥१६६ ॥

न शर्म लेभे राजा च मनसा चिन्तितः सदा।
प्रत्यहं बलिदानेन न जाने किं भविष्यति ॥१६७ ॥

एतस्मिन् समये आयान्नारदो नृपमन्दिरम्।
पूजयामास सुरथः सस्त्रीको नारदं मुनिम् ॥१६८ ॥

सुरथ उवाच —

त्वं हि विप्र द्विजश्रेष्ठः सर्वशास्त्रार्थपारगः।
विशेषं ब्राह्मणश्रेष्ठ वेदार्थं कथय प्रभो ॥१६९ ॥

श्रीनारद उवाच —

विशेषं श्रृणु राजेन्द्र वेदध्यानं सनातनम्।
वेदमन्त्रं महाराज परब्रह्ममयं सदा ॥१७० ॥

चतुर्भुजां चतुर्वक्त्रां शुद्धस्फटिकसन्निभाम्।
शुक्लपद्मसमासीनां पद्मगन्धमयीं सदा ॥१७१ ॥

वराभयधरां नित्यां वीणापुस्तकधारिणीम्।
भ्रमद्भ्रमरनीलाभनयनत्रयराजिताम् ॥१७२ ॥

सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम्।
कृष्णां शुक्लपरीधानां चलत्कुण्डलचञ्चलाम् ॥१७३ ॥

हीरकद्युतिसङ्काशां दशदिग्ज्योतिरुज्ज्वलाम्।
हास्ययुक्तां प्रसन्नास्यां नवयौवनसंयुताम् ॥१७४ ॥

शरत्पूर्णशशिमुखीं पीनोन्नतघनस्तनीम्।
शङ्खकङ्कणकेयूरनानाभरणमोहिनीम् ॥१७५ ॥

नानालावण्यसंयुक्तां शुक्लवस्त्रोत्तरीयिणीम् ।
पञ्चाशद्वर्णहाराढ्यां शान्तां सामसमाश्रयाम् ॥१७६ ॥

साममन्त्रं प्रवक्ष्यामि अतिगुह्यं परात्परम् ।
ॐ ॐ ॐ सामवेद स्वाहा ॐ ॐ ॐ ॥१७७ ॥

गौराङ्गीं दीर्घनयनां चतुर्वक्त्रां चतुर्भुजाम् ।
रक्तपद्मसमासीनां रक्तांशुकपरिच्छदाम् ॥१७८ ॥

वरदानरतां[1] देवीं वीणापुस्तकधारिणीम् ।
दिव्यगन्धमयीं नित्यां सङ्खकङ्कणमण्डिताम् ॥१७९ ॥

मुक्ताहारलतोपेतां कदम्बकोरकस्तनीम् ।
पूर्णचन्द्रमुखीं पूर्णां पीतवस्त्रोत्तरीयिणीम् ॥१८० ॥

सर्वशास्त्रमयीं विद्यां यजुर्वेदसमाश्रयाम् ।
मन्त्रमस्य प्रवक्ष्यामि श्रृणु सुरथ भूपते ॥१८१ ॥

ॐ ॐ ॐ यजुर्वेद स्वाहा ॐ ॐ ॐ ।
रक्ताङ्गीं पीतवसनां रक्तपद्मासनस्थिताम् ॥१८२ ॥

रक्ताभरणसंयुक्तां रक्तगन्धप्रलेपिताम् ।
बन्धनीरक्तनयनां कृष्णवस्त्रोत्तरीयिणीम् ॥१८३ ॥

चतुर्भुजां सुचतुरां चतुर्वक्त्रां बृहत्कटीम् ।
सिन्दूरतिलकोद्दीप्तां दीर्घकेशीञ्च सुस्तनीम् ॥१८४ ॥

सर्वाङ्गसुभगां भव्यां सर्वसौभाग्यशालिनीम् ।
मन्त्रमस्याः प्रवक्ष्यामि श्रृणु गुह्यं नृपोत्तम ॥१८५ ॥

ॐ ॐ ॐ ऋग्वेद स्वाहा ॐ ॐ ॐ ।
अधुना मनुजश्रेष्ठ अथर्वं कथयामि ते ॥१८६ ॥

---

१. वराभयपरां-ख. ।

दलिताञ्जनसङ्काशां कृष्णवस्त्रपरिच्छदाम् ।
कृष्णपद्मासनगतां चतुरां चतुराननाम् ॥१८७ ॥

चतुर्भुजां त्रिनेत्राञ्च सिन्दूरतिलकोज्ज्वलाम् ।
कटाक्षविशिखोपेतनयनत्रयसंयुताम् ॥१८८ ॥

कृष्णाभरणसंयुक्तां कृष्णगन्धप्रलेपिताम् ।
कृष्णपद्मसमासीनां कृष्णपुष्पोपशोभिताम् ॥१८९ ॥

पञ्चाशद्वर्णहाराढ्याम् अथर्वं समुपास्महे ।
श्रृणु मन्त्रं प्रवक्ष्यामि सावधानेन धारय ॥१९० ॥

ॐ ॐ ॐ अथर्ववेद स्वाहा ॐ ॐ ॐ ।
एतत्ते कथितं सर्वं ध्यानमन्त्रं पृथक् पृथक् ॥१९१ ॥

गायत्री च स्वयं वेदः प्रणवत्रयसंयुतः ।
गायत्री यदि पुंस्का स्याद् वेदमाता तथापि सा ॥१९२ ॥

परं ब्रह्ममयं तत्त्वं सर्वतन्त्रोत्तमोत्तमम् ।
एतत्तत्त्वं विना राजन् द्विजश्च शूद्रवत् सदा ॥१९३ ॥

वेदध्यानं वेदमन्त्रं अज्ञात्वा शूद्रवद् द्विजः ।
विशेषतः कलियुगे शूद्रतुल्यो द्विजो भवेत् ॥१९४ ॥

तस्मादवश्यं ज्ञातव्यं ध्यानमन्त्रं नृपोत्तम ।
प्रणवे अधिकारी स्याद् गायत्रीषु तदैव हि ॥१९५ ॥

मालया न जपेन्मन्त्रं गच्छन् पथि कदाचन ।
जप्त्वा मन्त्रं [१]यथा मूढः सर्पयोनिषु जायते ॥१९६ ॥

करमालासु जप्तव्यं गच्छन् पथि नृपोत्तम ।
मालया पथि जप्त्वा वै यथा हानिः प्रजायते ॥१९७ ॥

---

१. तथा-ख. ।

वेदमन्त्रविहीनश्च तथा याति पराभवम् ।
उपविश्य जपेन्मन्त्रं मालया नृपनन्दन ॥१९८ ॥

गायत्री च तथा सन्ध्या वेदध्यानं तथा मनुम् ।
कलिकाले महाराज ब्राह्मणेषु प्रशस्यते ॥१९९ ॥

अन्यत् सर्वं वेदमतं कलौ विवर्जयेद् द्विजः ।
परस्य ब्रह्मणो बिन्दुर्वेदमाता तथैव हि ॥२०० ॥

एतत्तत्त्वमविज्ञाय ब्राह्मणः शूद्रवत् सदा ।
वेदपाठे ब्राह्मणस्य नाधिकारः कलौ युगे ॥२०१ ॥

सोऽहंस्नानं विना राजन् यथा स्नानं वृथा भवेत् ।
निरञ्जनः सन् महाराज जले शिरसि एकधा ॥२०२ ॥

हंसेन पुटितं कृत्वा इष्टमन्त्रं स्मरेत् सकृत् ।
इष्टेन पुटितं हंसं द्वितीयं स्नानमाचरेत् ॥२०३ ॥

हंसेन पुटितं दृष्टं त्रिस्नानं मनुजेश्वर ।
वचनैः[1] पुटितं सर्वं हंसमिष्टं यथा तथा ॥२०४ ॥

सोऽहंस्नानमिदं प्रोक्तं जीवस्नानमिदं नृप ।
अतः स्नानमिदं राजन् कथितं चातिगोपनम् ॥२०५ ॥

सोऽहंस्नानेन राजेन्द्र कोटितीर्थफलं लभेत् ।
अनेनैव हि स्नानेन त्रिकोटिकुलमुद्धरेत् ॥२०६ ॥

सोऽहंस्नानेन गायत्र्याः स्नानं भवति भूपते ।
सोऽहंस्नानं विना राजन् कुशताम्रेण किं पुनः ॥२०७ ॥

किं पुनः स्वर्णतोयेन शङ्खतोयेन किं पुनः ।
सोऽहंस्नानेन चात्मीयमात्मनः स्नानमुच्यते ॥२०८ ॥

---

१. नः - ङ ।

अत एव महाराज स्नानमित्यभिधीयते ।
सोऽहंस्नानं विना राजन् बाह्यस्नानं वृथा यथा ॥२०९ ॥
शिवहीनं तथा मन्त्रं जप्त्वा निरयमाप्नुयात् ।
राममन्त्रं कृष्णमन्त्रं शिवहीनं वृथा यथा ॥२१० ॥
तथा च चरणैर्हीनं तन्मन्त्रं विफलं यथा ।
आदिशून्यं पादहीनं अन्तःशून्यं तथैव च ॥२११ ॥
शिवहीनं भवेन्मन्त्रं जप्त्वा निरयमाप्नुयात् ।
राममन्त्रे कृष्णमन्त्रे इति राजन् प्रशस्यते ॥२१२ ॥
न शिवे शस्यते राजन् शक्तिमन्त्रे न दूषणम् ।
दुरदृष्टवशाद् राजन् लब्ध्वा मूर्खगुरोर्मुखात् ॥२१३ ॥
प्रणवैः पुटितं कृत्वा लब्ध्वा अन्यगुरोर्मुखात् ।
प्रजप्य फलमाप्नोति सर्वावयवसंयुतम् ॥२१४ ॥
गायत्र्याः स्नानमात्रेण तत्त्वस्नानं प्रजायते ।
मनोजीवात्मनः शुद्धिस्तत्त्वषोढा प्रजायते ॥२१५ ॥
शिवशक्तिसमायोगा अन्तःसन्ध्या यथात्मनः ।
अन्तःसन्ध्यां विना राजन् बाह्यसन्ध्या वृथात्मनः ॥२१६ ॥
तान्त्रिकी वैदिकी सन्ध्या बाह्यसन्ध्या प्रकीर्तिता ।
अन्तःस्नानं तथा सोऽहं सर्वतीर्थमयं नृप ॥२१७ ॥
छागमेषं महाराज कृतादियुगचतुष्टये ।
विशेषतः कलियुगे प्रशस्तं नृपनन्दन ॥२१८ ॥
बहुभिर्बलिदानेन पूजयेत् क्षत्रजातिकः[१] ।
सत्ये सकृन्महाराज त्रेतायां त्रिगुणं तथा ॥२१९ ॥

---

१. 'तदर्धं पूजयेद् वैश्यो वैश्यार्धं शूद्रजातिकः' - ख. अधिकः ।

द्वापरे त्रिगुणं दद्यात् कलौ चतुर्गुणं बलिम् ।
कृतादिषु युगे विप्रो बलिं दद्यादशक्तितः ॥२२० ॥

कलिकाले महाराज दद्याद् विप्र[1] श्चतुर्गुणम् ।
कृष्णच्छागद्वयं राजन् तथा च महिषद्वयम् ॥२२१ ॥

सकृद्बलिरयं प्रोक्तो दरिद्रे केवलं सकृत् ।
यथा विभवमात्रेण वित्तशाठ्यं परित्यजेत् ॥२२२ ॥

श्रीसुरथ उवाच —

ब्रह्मपुत्र नमस्तुभ्यं कृपया कथ्यतां द्विज ।
किमत्र पशुहत्यायां बलिदानेन ब्राह्मणः ॥२२३ ॥

भविष्यति महाभाग कृपया सत्वरं वद ।
दासोऽस्मि तव विप्रेन्द्र मनो मे दूयते सदा ।
त्वमेव संशयच्छेत्ता संशयं छिन्धि मे द्विज ॥२२४ ॥

नारद उवाच —

धन्यस्त्वं सुरथो धन्यः शैवस्त्वं हि शिवः स्वयम् ।
शक्तिस्त्वं हि स्वयं शक्तिर्विष्णुस्त्वं वैष्णवोत्तमः ॥२२५ ॥

भवानीपूजनफलादद्य त्वं वैष्णवाग्रणीः ।
अद्य मे सफलं जन्म तव दर्शनमात्रतः ॥२२६ ॥

प्रत्यहं तव राजेन्द्र अश्वमेधसहस्रशः ।
भवन्ति निश्चयं यज्ञा बलिदानप्रभावतः ॥२२७ ॥

किं बहूक्त्या महाराज त्वमेव वैष्णवाग्रणीः ।
यत्र यत्र पुराणेषु निषेधं कुरुते बलेः ॥२२८ ॥

तत्तु बौद्धमतं राजन् न च वेदेषु सम्मतम् ।
यत्तु पुरञ्जनाख्याने बलिदानं निषिध्यते ॥२२९ ॥

---

१. विप्रो- ङ. ।

तत्तु बौद्धमतं राजन् न च वेदेषु सम्मतम् ।
त्रिविधा बलयः प्रोक्ता उत्तमाधममध्यमाः ॥२३० ॥

उत्तमश्चोत्तमं दद्यान्मध्यमो मध्यमं तथा ।
अधमोऽप्यधमं दद्यादित्युक्तस्त्रिविधो बलिः ॥२३१ ॥

कृष्णच्छागद्वयं राजन् महिषद्वितयं तथा ।
शुक्लाष्टम्याञ्च शरदि न दातव्यं कदाचन ॥२३२ ॥

एको वाप्यथवानेकः कूष्माण्डो दीयते यदि ।
अधमः कथ्यते देवि अधमेऽप्यधमा गतिः ॥२३३ ॥

दशसंख्या बलिर्यत्र मध्यमस्तेन कथ्यते ।
सात्त्विकी उत्तमा पूजा यदि दद्यान्महाबलिम् ॥२३४ ॥

अष्टमीनवमीसन्धौ दद्याद् यत्नान्महाबलिम् ।
शतं सहस्रं लक्षं वा अयुतं कोटिकोटिशः ॥२३५ ॥

शस्यते नृपतिश्रेष्ठ सात्त्विकः पूजने बलिः ।
एकेन बलिदानेन चतुर्वर्गमवाप्नुयात् ॥२३६ ॥

बहुभिर्बलिदानैस्तु परब्रह्ममयो भवेत् ।
बहुभिर्बलिदानैस्तु जपयज्ञैस्तु भूपते ॥२३७ ॥

क्रियते सात्त्विकी पूजा सात्त्विकी तेन कीर्तिता ।
दशभिः पशुभिः पूजा जपयज्ञे तथैव च ॥
या कृता शारदी पूजा राजसी तेन कीर्तिता ॥२३८ ॥

बलिभिः पञ्चभिः पूजा तामसी तेन कीर्तिता ।
सात्त्विकीपूजनफलात् शुद्धसत्त्वात्मको भवेत् ॥२३९ ॥

वेदे बौद्धविवादोऽस्ति वेदोक्तं प्रतिपालयेत् ।
बौद्धोक्तं राजशार्दूल दूरतः परिवर्जयेत् ॥२४० ॥

बौद्धो वदति राजेन्द्र ईश्वरो नास्ति नास्ति वै ।
अहमेवेश्वरः साक्षादिति बौद्धोऽब्रवीद्वचः ॥२४१ ॥

दशदण्डाभ्यन्तरे राजन् भोजनं स्वर्गमुच्यते ।
स्थूलदेहं परित्यज्य आत्मनो ध्वंस उच्यते ॥२४२ ॥

पञ्चशक्तिः पञ्चभूतो यथा[१] स्थानं प्रलेभिरे ।
कुतः स्वर्गः कुतो भोगो नष्टः को वा हतो नृप ॥२४३ ॥

त्यक्त्वा देहं ययौ शक्तिर्मरणं तेन कथ्यते ।
इति बौद्धस्य राजर्षे यथा वाक्यमलीकवत् ॥२४४ ॥

यथा वह्नेः शिखाध्वंसः[२] सर्वेषां ध्वंस उच्यते ।
इहैव नरकः स्वर्गः का कथा परजन्मनि ॥२४५ ॥

नारद उवाच —

आत्मानन्दमयो जीवः कला श्रीरन्तरात्मनः ।
सदा जीवेति जीवेति कथ्यते तत्त्वदर्शिभिः ॥२४६ ॥

तत्कथमात्मनो ध्वंसो बौद्धवाक्येन भूपते ।
शिखाध्वंसमिति न्यायादिति बौद्धस्य मूर्खता[३] ॥२४७ ॥

कृते त्रेतायुगे चैव द्वापरे नृपनन्दन ।
विधिवत् पूजयेद् वेदं गन्धपुष्पादिभिर्द्विजः ॥२४८ ॥

कलिकाले महाराज ध्यानमात्रं प्रशस्यते ।
ध्यानं कृत्वा जपेन्मन्त्रं दशधा प्रणवं नृप ॥२४९ ॥

प्रातःकाले जपेन्मन्त्रं प्रणवं ब्राह्मणोत्तमः ।
प्रणवं वेदमन्त्रं स्यात् त्रिगुणं नृपनन्दन ॥२५० ॥

प्रणवे नाधिकारोऽस्ति वेदध्यानं विना नृप ।
सन्ध्यायां नाधिकारोऽस्ति प्रणवैर्विहीनं तथा ॥२५१ ॥

---

१. त्यक्त्वा- ङ. । २. ध्वंसम्- ख. ङ. । ३. मूढता- ख. ।

किञ्चित् किञ्चिद् बौद्धमतं सर्वशास्त्रेषु पल्लवम् ।
आदाय पल्लवमतं वेदमार्गं परित्यजेत् ॥२५२ ॥

इह जन्मनि पापिष्ठः सर्वधर्मबहिर्मुखः ।
स पापी जायते प्रेतः परजन्मनि निश्चयः ॥२५३ ॥

चतुर्दशपल्लवयुतं वेदं नित्यं सनातनम् ।
षट्शाखासहितं वेदं तत्त्वशाखाषडङ्गकम् ॥२५४ ॥

अमानकुसुमं तत्र गायत्रीतत्त्वमद्भुतम् ।
फलं तस्य महाराज [१] ब्रह्माण्डं कोटिकोटिशः ॥२५५ ॥

नित्यं सनातनं वृक्षं मूलं तस्य च कुण्डली ।
ज्ञानात्मसहितं राजन् मातृकाबीजसंयुतम् ॥२५६ ॥

ये गुणाः सन्ति ब्रह्माण्डे तस्य पत्राणि नान्यथा ।
कथ्यते तेन वेदेन मुनिभिस्तत्त्वदर्शिभिः ॥२५७ ॥

पुरा प्राचीनवृत्तान्तं पुराणं त्रिगुणात्मकम् ।
रजस्तमात्मकं त्यक्त्वा यदि सत्त्वं प्रशस्यते ॥२५८ ॥

चतुर्दशस्कन्धहत्यां करोति स च पामरः ।
एकस्य बहवः पुत्राः स्वधर्मप्रतिपालकाः ॥२५९ ॥

तेषां मध्ये एकपुत्रश्चौर्यवृत्तिरतः सदा ।
अग्राह्यं चौरवाक्यं तत् साधुवाक्यं प्रशस्यते ॥२६० ॥

वेदपुत्रा वेदहरशास्त्राणि च चतुर्दश ।
चौरो वै सर्वशास्त्राणां मध्ये बौद्ध इति स्मृतः ॥२६१ ॥

अत एव महाराज न शास्त्रेऽप्येकवाक्यता ।
धर्मे वेदो महाराज प्रमाणं नित्यमुच्यते ॥२६२ ॥

---

१. ब्रह्मांण्ड- ङ. ।

धर्मो विपर्ययो वेदे बौद्धवाक्यं यथा तथा ।
अतो बौद्धेति राजेन्द्र गीयते तन्त्रकोविदैः ॥२६३ ॥
बलिदानं वेदसिद्धं निषिद्धं बौद्धवाक्यतः ।
बौद्धवाक्यं परित्यज्य वेदमार्गे प्रपूजयेत् ॥२६४ ॥
निर्माय गोमयं पिण्डं पौषे पौषप्रपूजनम् ।
येन [१]यः क्रियते धर्मः स्त्रीसपर्यापरम्परा ॥२६५ ॥
सर्वं वेदमयं राजन् तत्र निन्दां परित्यजेत् ।
एकमेव महाराज शरीरे तव विद्यते ॥२६६ ॥
पशुहत्याकृतं पापं मांसभक्षणकारणम् ।
विद्यते तव यत् पापं प्रायश्चित्तं ब्रवीमि ते ।
लक्षच्छागबलिं दत्त्वा तत्पापं मार्जयाधुना ॥२६७ ॥

श्रीदेव उवाच —

इत्युक्त्वा प्रययौ विप्रो नारदो ब्रह्मनन्दनः ।
ततः सुरथराजर्षिः सम्पूज्य बलिदानतः ॥२६८ ॥
निष्पापः सुरथो भूत्वा सशरीरो दिवं गतः ।
सस्त्रीकः स महाराजः प्रययौ स्वर्गमन्दिरम् ॥२६९ ॥
तथापि सुरथस्कन्धो[२] ववृधे पथि पापतः ।
स्कन्धे विस्फोटकमभूत् कृमियुक्तं[३] नृपस्य च ॥२७० ॥
विस्फोटकविषज्वाला कृमिज्वालाथ जायते ।
बलिदानं विना हत्या ज्वालारूपा उपस्थिता ॥२७१ ॥
एतस्मिन् समये दूत उवाच वचनं ततः ।
इयं मन्दाकिनी गङ्गा जलरूपा सनातनी ।
वेदोक्तविधिना राजन् [४]स्नानमत्र कुरु द्रुतम् ॥२७२ ॥

---

१. तत्- ख.। २. स्कन्धं- ख.। ३. युग्मं- ङ.। ४. स्नानमात्रं- ख.।

तच्छ्रुत्वा वचनं तस्य राजा सुरथभूपतिः ।
गङ्गायां विधिवत् स्नात्वा दिव्यदेहमवाप्नुयात् ॥२७३ ॥

कृमिरूपाच्च स पापाद् दिव्यदेहमवाप्नुयात् ।
सुवर्णरथमारुह्य दिव्यस्त्रीपरिवेष्टितः ॥२७४ ॥

सस्त्रीकः सुरथो राजा प्रययौ स्वर्गमन्दिरम् ।
ते पापाः प्रययुः शीघ्रं प्रययौ स्नानमुत्तमम् ॥२७५ ॥

बलिदानं विना हत्या हत्या सर्वत्र गर्हिता ।
प्रसङ्गात् कथिता हत्या बलिदानं विना यथा ॥२७६ ॥

॥ इति [1] गायत्रीतन्त्रे आगमसन्दर्भे ज्ञानदर्पणे श्रीदेवदेवीसंवादे आत्मज्ञाननिरूपणे [2] गायत्रीब्राह्मणो नाम [3] पञ्चमः पटलः ॥



१. कामधेनुतन्त्रे- ख. । २. आत्मज्ञाननिरूपणं- ख. । ३. गायत्रीतन्त्रे- ख. अधि. ।

## ॥अथ षष्ठः पटलः ॥

श्रीमहादेव उवाच —

तिथेर्ध्यानं विना देवि तिथेर्मन्त्रं तथैव च ।
अज्ञात्वा परमेशानि दिनकृत्यं करोति यः ॥१ ॥

तस्य सर्वं भवेद् व्यर्थं दिनकृत्यं वरानने ।
या तिथिः सा महामाया आद्या मूर्तिर्जगन्मयी ॥२ ॥

कृष्णपक्षे कृष्णवर्णा शुक्ले शुक्लसमप्रभा ।
द्विभुजां शुक्लरूपां च खेलत्खञ्जनगामिनीम् ॥३ ॥

द्विलोचनां शशिकलां सिन्दूरतिलकोज्ज्वलाम् ।
तप्तहाटकनिर्माणनानालङ्कारभूषिताम् ॥४ ॥

दाडिमीबीजसदृश[१] दशनद्युतिशोभनाम् ।
ध्यायेत् प्रतिपदं देवीं जपपूजादि[२] सिद्धये ॥५ ॥

ह्रीं प्रतिपदे स्वाहा ।

द्विलोचनां शशिकलां शुद्धस्फटिकशोभनाम् ।
शुक्लाभरणशोभाढ्यां शुक्लवस्त्रपरिच्छदाम् ॥६ ॥

नानाकटाक्षसंयुक्तभ्रूलतापरिशोभिताम् ।
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥७ ॥

द्विभुजां सुन्दराङ्गीं च किशोरीं नवयौवनाम् ।
ध्यात्वा द्वितीयां चार्वङ्गी[३] जपेन्मन्त्रं यथा श्रृणु ॥८ ॥

ॐ ऐं द्वितीयायै स्वाहा ।

शुक्लपद्म[४] प्रतीकाशां शुक्लवस्त्रपरिच्छदाम् ।
शुक्लाभरणशोभाढ्यां पुण्डरीकोपरि स्थिताम् ॥९ ॥

---

१. सदृशी- घ. । २. विशुद्धये- घ. । ३. चार्वङ्गि- घ. । ४. वस्त्र- ग. ।

द्विलोचनां शशिकलां सिन्दूरतिलकोज्ज्वलाम् ।
कटाक्षविशिखोपेतां तृतीयां द्विभुजां भजे ॥१० ॥

ऐं तृतीयायै स्वाहा ।

चतुर्थीं श्रृणु चार्वङ्गि यज्ज्ञात्वा सिद्धतां व्रजेत् ।
कुन्दपुष्पसमाभासां द्विभुजां लोललोचनाम् ॥११ ॥

शुक्लवस्त्रपरीधानां शुक्लाभरणभूषिताम् ।
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥१२ ॥

ऐं[1] ह्रीं चतुर्थ्यै स्वाहा ।

पञ्चमीं श्रृणु चार्वङ्गि सर्वसिद्धिप्रदायिनीम् ।
यज्ज्ञात्वा[2] परमेशानि तिथेः फलमवाप्नुयात् ॥१३ ॥

शुद्धस्फटिकसङ्काशां श्वेतपद्मोपरि स्थिताम् ।
हास्ययुक्तां प्रसन्नास्यां कटाक्षविशिखोज्ज्वलाम् ॥१४ ॥

कन्दर्पधनुराकारभ्रूलतापरिशोभिताम् ।
द्विभुजां श्वेतवर्णां च श्वेतालङ्काररभूषिताम् ॥१५ ॥

लोचनद्वयसंयुक्तां सिन्दूरतिलकोज्ज्वलाम् ।
मृणालसदृशाकारबाहुवल्लीविराजिताम् ॥१६ ॥

खेलत्खञ्जनगामिनीं चारुचूडाविराजिताम् ॥१७ ॥

ह्रीं[3] ऐं पञ्चम्यै स्वाहा ।

विशेषश्रीपञ्चमीदिने कर्तव्यं पूजनं महत् ।
निरीक्ष्य दिननाथं च ध्यानपूजादिकं चरेत् ॥१८ ॥

ध्यायेत् परमयत्नेन पञ्चमीतिथिरूपिणीम् ।
ध्यात्वा पाद्यादिकं दत्वा प्रजपेद् दशधा[4] मनुम् ॥१९ ॥

---

१. तुं- घ. । २. ध्यात्वा- घ. । ३. ह्रीं ऐं ह्रीं- घ. । ४. दशमो-ग. ।

ततस्तु पूजयेद् देवीं शारदां वाग्विलासिनीम् ।
कुन्दपुष्पसमाभासां द्विभुजां लोललोचनाम् ॥२० ॥
कटाक्षविशिखोद्दीप्तां सिन्दूरतिलकोज्ज्वलाम् ।
दाडिमीबीजसदृशदशनज्योतिरुज्ज्वलाम् ॥२१ ॥
शुक्लालङ्कारशुभगां शुक्लासननिवासिनीम् ।
शुक्लवस्त्रपरिच्छिन्नां[१] शुक्लाहारविनोदिनीम् ॥२२ ॥
द्विभुजां चन्द्रवदनां ध्यायेदात्मविभूतये ।
ॐ[२] फ्रीं षष्ठ्यै स्वाहा ।
शरच्चन्द्रप्रतीकाशां द्विभुजां शशिशेखराम्[३] ॥२३ ॥
लोचनद्वयसंयुक्तां खेलत्खञ्जनगामिनीम् ।
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥२४ ॥
[४]कटाक्षविशिखोपेतभ्रूलतापरिशोभिताम् ।
शुक्लासनसमासीनां शुक्लाभरणभूषिताम् ॥२५ ॥
शुक्लवस्त्रपरीधानां ध्यायेदात्मविभूतये ।
ॐ सप्तम्यै[५] स्वाहा ॐ फ्रीं ।
राकाचन्द्रप्रतीकाशां द्विभुजां चन्द्रशेखराम् ॥२६ ॥
पूर्णचन्द्रमुखश्रेणीं कुञ्चितालकशोभिताम् ।
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥२७ ॥
हास्ययुक्तां प्रसन्नास्यां [६]श्वेतवस्त्रपरिच्छदाम् ।
[७]श्वेताभरणशोभाढ्यां किशोरीं नवयौवनाम् ॥२८ ॥

---

१. परिहितां-ग.। २. ह्रीं-ग.। ३. शशिकोमलाम्- ग.।
४. विशिखोत्पत- ग.। ५. ह्रीं सप्तम्यै स्वाहा ॐ फ्रीं- ग.। ६. रत्न- ग.।
७. 'श्वेताभरण' इत्यारभ्य 'ॐ फ्रीं फ्रीं ॐ' इत्यन्तो ग्रन्थो घ. न दृश्यते।

नानाकटाक्षसंयुक्तभ्रूलतापरिशोभिताम् ।
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥२९ ॥
क्रीं दुं ऐं अष्टम्यै स्वाहा ऐं ह्रीं श्रीं ।
श्वेतपद्मप्रतीकाशां द्विभुजां लोललोचनाम् ।
दाडिमीबीजसदृशदन्तपङ्क्तिविराजिताम् ॥३० ॥
शुक्लपट्टाम्बरधरां शुक्लवस्त्रोत्तरीयिणीम् ।
ललाटपट्टिकाशुद्धां सिन्दूरतिलकोज्ज्वलाम् ॥३१ ॥
नानाभरणदीप्ताङ्गीं पीतगुच्छप्रलेपिताम् ।
मुक्तावर्तुलहारेण कम्बुकण्ठसुशोभिताम् ॥३२ ॥
नानामाल्यपरिच्छिन्नां चित्रचूडाविराजिताम् ।
ॐ हूँ नवम्यै स्वाहा हुँ ॐ ।
मल्लिकापुष्पसंकाशां द्विभुजां लोललोचनाम् ॥३३ ॥
श्वेतासनोपविष्टां च श्वेतांशुकपरिच्छदाम् ।
श्वेताभरणसंयुक्तां श्वेतगुच्छानुलेपिनीम् ॥३४ ॥
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ।
ऐं ऐं दशम्यै स्वाहा ऐं ऐं ।
केतकीपुष्पसंकाशां भ्रूलतापरिशोभिताम् ॥३५ ॥
नानाकटाक्षसंयुक्तां मत्तद्विरदगामिनीम् ।
नानालङ्कारसुभगां पीतरत्नपरिच्छदाम् ॥३६ ॥
पीतगन्धप्रलिप्ताङ्गीं सिन्दूरतिलकोज्ज्वलाम् ।
दाडिमीबीजसदृशदशनद्युतिशोभनाम् ॥३७ ॥
द्विभुजां सुन्दरीं देवीं नमाम्यात्मविभूतये ।
ॐ क्रीं ॐ एकादश्यै स्वाहा ॐ क्रीं ॐ ।
पीतपद्मसमाभासां शुक्लवस्त्रपरिच्छदाम् ॥३८ ॥

शुक्लचन्दनसिक्ताङ्गीं द्विभुजां लोललोचनाम् ।
शुक्लाभरणशोभाढ्यां शुक्लासनसमाश्रयाम् ॥३९ ॥
दाडिमीबीजसदृशदशनद्युतिशोभनाम् ।
सिन्दूरतिलकोद्दीप्तां ललाटपट्टिकां शुभाम् ॥४० ॥
फ्रीं ॐ फ्रीं द्वादश्यै स्वाहा ।
रक्तचन्दनसंकाशां किशोरीं नवयौवनाम् ।
रक्तवस्त्रपरीधानां कुटिलालकमण्डिताम् ॥४१ ॥
द्विभुजां सुन्दरीं शुद्धां पूर्णचन्द्रमुखप्रभाम् ।
द्विलोचनां चन्द्रलेखां विष्णुपूज्यां बृहत्कटीम् ॥४२ ॥
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ।
नानाकटाक्षसंयुक्तां नानाशृङ्गारशोभनाम् ॥४३ ॥
ध्यात्वा त्रयोदशीं देवीं प्रजपेन्मन्त्रमुत्तमम् ।
ॐ ऐं त्रयोदश्यै स्वाहा ॐ ऐं ।
शुद्धस्फटिकसंकाशां हरिद्वस्त्रविनोदिनीम् ॥४४ ॥
नानालङ्कारसुभगां पीतमाल्यपरिच्छदाम् ।
श्वेतपद्मसमासीनां द्विभुजां लोललोचनाम् ॥४५ ॥
कटाक्षविशिखोद्दीप्तां सिन्दूरतिलकोज्ज्वलाम् ।
दाडिमीबीजसदृशदशनद्युतिमुज्ज्वलाम् ॥४६ ॥
कदम्बकोरकाकारभुजद्वयमनोहराम् ।
हास्ययुक्तां प्रसन्नास्यां किशोरीं नवयौवनाम् ॥४७ ॥
ह्रीं ॐ ह्रीं चतुर्दश्यै स्वाहा ।

॥ इत्यागमसन्दर्भे ज्ञानदर्पणे देवदेवीसंवादे गायत्रीतन्त्रे

षष्ठः पटलः ॥



## ॥अथ सप्तमः पटलः॥

श्रीमहादेव उवाच —

पूर्णिमां श्रृणु चार्वङ्गि यया सिद्धिमयो भवेत्।
कोटिविद्युल्लताकारां चतुर्बाहुसमन्विताम् ॥१॥

पीतांशुकपरीधानां रत्नहारविराजिताम्।
शङ्खकङ्कणकेयूरनानाशृङ्गारभूषिताम् ॥२॥

रत्नकुण्डलसंयुक्तस्फुरद्गन्धमनोहराम्।
त्रिभङ्गललिताकारां सिन्दूरतिलकोज्ज्वलाम् ॥३॥

कटाक्षलक्षसंयुक्तां भ्रूलतापरिशोभिताम्।
त्रिलोचनां महादेवीम् अञ्जनाञ्चितलोचनाम् ॥४॥

ह्रौं ॐ क्रीं क्रीं पूर्णिमायै स्वाहा ॐ क्रीं क्रीं ॐ ह्रीं।
एतत्ते कथितं देवि पूर्णामन्त्रं परात्परम्।
एतास्तु तिथयो देवि शुक्लपक्षे वरानने ॥५॥

कृष्णपक्षे महेशानि तिथयस्तु सुशोभनाः।
नीलाञ्जनचयप्रख्याः किशोर्यो नवयौवनाः ॥६॥

तासां ध्यानं प्रवक्ष्यामि सावधानाऽवधारय।
दलिताञ्जनसंकाशां पीतांशुकपरिच्छदाम् ॥७॥

पीतगन्धप्रलिप्ताङ्गीं पीताभरणभूषिताम्।
पीतपद्मसमासीनां किशोरीं नवयौवनाम् ॥८॥

द्विलोचनां चन्द्ररेखां द्विभुजां कोरकस्तनीम्।
ललाटपट्टिकाशुद्धां सिन्दूरतिलकोज्ज्वलाम् ॥९॥

खेलत्खञ्जननाभिं च त्रिभङ्गललिताकृतिम्।
दाडिमीबीजसदृशदशनद्युतिमुज्ज्वलाम् ॥१०॥

कृष्णपक्षे महेशानि एतद्ध्यानं प्रशस्यते।
सर्वासां परमेशानि एकेन भवति प्रिये ॥११॥

सर्वासां पूर्णवन्मन्त्रममावास्यादिने प्रिये।
अमावास्यामनुं देवि श्रृणुष्व वरवर्णिनि ॥१२॥

ॐ फ्रीं फ्रीं ॐ।

अथ वक्ष्यामि सकलं पक्षध्यानं वरानने।
शङ्खकुन्दसमाभासां नवयौवनसंयुताम् ॥१३॥

चतुर्भुजां त्रिनयनां मत्तद्विरदगामिनीम्।
ललाटपट्टिकामध्ये सिन्दूरतिलकस्थितिम् ॥१४॥

भ्रमद्भ्रमरनीलाभामञ्जनाञ्चितलोचनाम्।
पीतांशुकपरीधानां कृष्णवस्त्रोत्तरीयिणीम् ॥१५॥

नानालङ्कारसुभगां नीलपद्मोपरि स्थिताम्।
[१]घूर्णायमाननयनां नीलपद्मविधारिणीम् ॥१६॥

सदा तां द्योतमानां च कदम्बकोरकस्तनीम्।
हीरकद्युतिसंकाशदशनज्ज्योतिरुज्ज्वलाम् ॥१७॥

नानापुष्पमयैर्हारैर्नानागन्धमयीं पराम्।
प्रत्यहं भावयेद् देवीं शुक्लपक्षस्वरूपिणीम् ॥१८॥

ऐं ऐं क्रीं क्रीं शुक्लपक्षे स्वाहा ऐं ऐं क्रीं क्रीं।

कृष्णपक्षे महेशानि अधुना निगदामि ते।
[२]सहस्रकलशां श्यामां चतुर्बाहुसमन्विताम् ॥१९॥

पीनोत्तुङ्गकुचां हृद्यां चित्रवस्त्रविलासिनीम्।
नानाशृङ्गारवेशाढ्यां स्फुरच्चकितलोचनाम् ॥२०॥

---

१. भृङ्गाय- ग.। २. सहासमरकतश्यामां- घ.।

सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ।
कन्दर्पधनुराकारभ्रूलतापरिशोभिताम् ॥२१ ॥

रत्नहारेण सहितां नागहारविराजिताम् ।
पीतपद्मसमासीनां चित्रचूडाविराजिताम् ॥२२ ॥

पीतविद्युत्समाकान्त्युत्तरीयवसनच्छविम् ।
पूर्णचन्द्रमुखीं देवीं कृष्णपक्षस्वरूपिणीम् ॥२३ ॥

ॐ ॐ कृष्णपक्षे स्वाहा ॐ ॐ ।

॥ इत्यागमसन्दर्भे ज्ञानदर्पणे देवदेवीसंवादे गायत्रीतन्त्रे सप्तमः पटलः ॥



## ॥अथाष्टमः पटलः ॥

श्रीशिव उवाच —

तिथेर्ध्यानं तिथेर्मन्त्रं पक्षध्यानं तथैव च ।
पक्षमन्त्रं[१] सदा देवि दिवसे दिवसे सदा ॥१ ॥

प्रत्यहं कुरुते यस्तु तस्य सिद्धिरदूरतः ।
एतास्तु तिथयो देवि सूर्यमण्डलसंस्थिताः ॥२ ॥

पक्षध्यानं प्रथमतस्तिथिध्यानं ततः प्रिये ।
पक्षमन्त्रं ततो जप्त्वा तिथिमन्त्रं ततो जपेत् ॥३ ॥

ततः सिद्धिमवाप्नोति जपपूजादिका च या ।
दिनकृत्यं महेशानि यः करोति दिने दिने ॥४ ॥

पक्षपूजां प्रथमतः कृत्वा सिद्धिमवाप्नुयात् ।
तिथिपूजां विना देवि जपपूजादिकाः क्रियाः ॥५ ॥

सर्वा निष्फलतां यान्ति आमपात्रमिवाम्भसि ।
दिवसे दिवसे देवि[२] तिथिमाराध्य[३] यत्नतः ॥६ ॥

प्रातःकाले ततो धीमान् तिथिध्यानं समाचरेत् ।
दशधा प्रजपेन्मन्त्रं सूर्यं दृष्ट्वा प्रयत्नतः ॥ ७ ॥

तथा तिथिफलं प्राप्य सर्वपूजाफलं लभेत् ।
एतत्तत्त्वमविज्ञाय आयुर्याति दिने दिने ॥ ८ ॥

तिथिरूपा महादेवी महामाया जगन्मयी ।
ध्यानमन्त्रं विना देवि सर्वेषां सिद्धिनाशिनी ॥ ९ ॥

प्रत्यहं कुरुते यस्तु जपध्यानं तिथेः प्रिये ।
गङ्गास्नानफलं सोऽपि लभते नात्र संशयः ॥१० ॥

---

१.ध्यानं- घ.। २.'देवि' नास्ति-ग.। ३.मासाद्य- घ.।

अश्वमेधे महायज्ञे [१]वृतो होता यदि प्रिये ।
विफलः सोऽश्वमेधो हि तिथिध्यानं विना भवेत् ॥११ ॥

अमृतेनामृतं कुण्डे पीयते दैवतैः क्रमात् ।
प्रथमां पिबते वह्निर्द्वितीयां तपनस्तथा ॥१२ ॥

विश्वेदेवास्तृतीयां तु चतुर्थीं तु प्रजापतिः ।
पञ्चमीं वरुणश्चापि षष्ठीं पिबति वासवः ॥१३ ॥

सप्तमीं ऋषयो देवा वसवोऽष्टौ तथाष्टमीम् ।
नवमीं कृष्णपक्षस्य पिबतीन्द्रः कलामपि ॥१४ ॥

दशमीं मरुतश्चापि रुद्रा एकादशीं कलाम् ।
द्वादशीञ्च कलां विष्णुर्धनदश्च त्रयोदशीम् ॥१५ ॥

चतुर्दशीं पशुपतिः कलां पिबति नित्यशः ।
ततः पञ्चदशीञ्चापि पिबन्ति पितरः कलाम् ॥१६ ॥

॥ इत्यागमसन्दर्भे ज्ञानदर्पणे देवदेवीसंवादे गायत्रीतन्त्रेऽष्टमः पटलः ॥



१. व्यान्यो- घ.।

## ॥अथ नवमः पटलः ॥

श्रीदेव्युवाच —

देवदेव महादेव संसारार्णवतारक ।
गायत्रीकवचं देव कृपया कथय प्रभो ॥१ ॥

श्रीमहादेव उवाच —

मूलाधारे च या नित्या कुण्डली तत्त्वरूपिणी ।
सूक्ष्मातिसूक्ष्मा परमा विसतन्तुस्वरूपिणी ॥२ ॥
विद्युत्पुञ्जप्रतीकाशा [१]कुण्डलाकृतिरूपिणी ।
तद्भ्रमावर्तवातोऽयं प्राणात्मा नित्यनूतनः ॥३ ॥
नित्यं [२]तिष्ठति सा नित्या कुण्डली तव विग्रहे ।
अतिगोप्यं महापुण्यं त्रिकोटितीर्थसंयुतम् ॥४ ॥
सर्वयज्ञमयं देवि सर्वानन्दमयं सदा ।
सर्वज्ञानमयं साक्षात् परब्रह्मस्वरूपकम् ॥५ ॥
कवचं कथयाम्यद्य सावधानाऽवधारय ।

ॐ ॐ ॐ ॐ भूः ॐ ॐ ॐ ॐ भुवः ॐ ॐ स्वः, ॐ ॐ त ॐ ॐ त्स ॐ ॐ वि ॐ ॐ तु ॐ ॐ र्व ॐ ॐ रे ॐ ॐ णि ॐ ॐ यं ॐ ॐ भ ॐ ॐ र्गो ॐ ॐ दे ॐ ॐ व ॐ ॐ स्य ॐ ॐ धी ॐ ॐ म ॐ ॐ हि ॐ ॐ धि ॐ ॐ यो ॐ ॐ यो ॐ ॐ नः ॐ ॐ प्र ॐ ॐ चो ॐ ॐ द ॐ ॐ या ॐ ॐ त् ॐ ॐ ओम् ॐ ।

ॐ भूः ॐ पातु मे मूलं चतुर्दशसमन्वितम् ।
ॐ भुवः ॐ पातु मे लिङ्गं सकलं [३]षड्दलान्वितम् ॥६ ॥
ॐ स्वः ॐ पातु मे कण्ठं साकाशं दलषोडशम् ।
ॐ त ॐ पातु मे नित्यं ब्रह्मणः कारणं परम् ॥ ७ ॥

---

१.मण्डलाकृति-ग.। २.तिष्ठतु-घ.। ३.षड् जलान्वितम्-घ.।

ॐ त्स ॐ पातु मे रसं रसनासंयुतं मम ।
ॐ वि ॐ पातु मे गन्धं सदा शरीरसंयुतम् ॥८ ॥

ॐ तु ॐ पातु मे स्पर्शं शरीरस्य च कारणम् ।
ॐ र्व ॐ पातु मे शब्दं शब्दविग्रहकारणम् ॥९ ॥

ॐ रे ॐ पातु मे नित्यं त्वचं शरीररक्षकम् ।
ॐ णि ॐ पातु मे अक्षि सर्वतत्त्वैककारणम् ॥१० ॥

ॐ यं ॐ पातु मे श्रोत्रं श्रवणस्य च कारणम् ।
ॐ भ ॐ पातु मे घ्राणं गन्धोपादानकारणम् ॥११ ॥

ॐ र्गो ॐ पातु मे वाक्यं सभायां शब्दरूपिणी (णम्) ।
ॐ दे ॐ पातु मे बाहुयुगलं ब्रह्मकारणम् ॥१२ ॥

ॐ व ॐ पातु मे पादयुगलं ब्रह्मकारणम् ।
ॐ स्य ॐ पातु मे लिङ्गं सजलं [1]षड्दलैर्युतम् ॥१३ ॥

ॐ धी ॐ पातु मे नित्यं [2]प्रकृतिशब्दकारणम् ।
ॐ म ॐ पातु मे नित्यं [3]परब्रह्मस्वरूपिणी ॥१४ ॥

ॐ हि ॐ पातु मे बुद्धिं परब्रह्ममयी सदा ।
ॐ धि ॐ पातु मे नित्यमहङ्कारं यथा तथा ॥१५ ॥

ॐ यो ॐ पातु मे नित्यं पृथ्वी पार्थिवं वपुः ।
ॐ यो ॐ पातु मे नित्यं जलं सर्वत्र सर्वदा ॥१६ ॥

ॐ नः ॐ पातु मे नित्यं तेजःपुञ्जं यथा तथा ।
ॐ प्र ॐ पातु मे नित्यमनिलं देहकारणम् ॥१७ ॥

ॐ चो ॐ पातु मे नित्यमाकाशं शिवसन्निभम् ।
ॐ द ॐ पातु मे जिह्वां जपयज्ञस्य कारणम् ॥१८ ॥

---

१. षड्जलैर्युतम्-घ.। २. प्रकृतशब्दं- घ.। ३. धी-ग.।

ॐ यात् ॐ पातु मे चित्तं शिवज्ञानमयं सदा ।
तत्त्वानि पातु मे नित्यं गायत्री परदेवता ॥१९ ॥

ॐ भूर्भुवःस्वः पातु नित्यं [1]ब्रह्माणी जठरं क्षुधाम् ।
[2]तृष्णां मे सततं पातु ब्राह्मणी भूर्भुवःस्वरः ॥२० ॥

अस्याः श्रीगायत्र्याः परब्रह्म ऋषिः, ऋग्यजुःसामाथर्वाणि च्छन्दांसि, गायत्री ब्राह्मणो देवता धर्मार्थकाममोक्षार्थे विनियोगः ।

ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ ।

क्रामक्रोधादिकं सर्वं स्मरणाद्याति [3]शाम्यताम् ।
इदं कवचमज्ञात्वा गायत्रीं प्रजपेद्यदि ॥२१ ॥

शतकोटिजपेनैव न सिद्धिर्जायते प्रिये ।
गायत्रीवचनात् सर्वं स्मरणात् सिद्ध्यति ध्रुवम् ॥२२ ॥

पठित्वा कवचं विप्रो गायत्रीं सकृदुच्चरेत् ।
सर्वपापविनिर्मुक्तो जीवन्मुक्तो भवेद् द्विजः ॥२३ ॥

इदं कवचमज्ञात्वा कवचान्यत् पठेत्तु यः ।
सर्वं तस्य वृथा देवि त्रैलोक्यमङ्गलादिकम् ॥२४ ॥

गायत्रीकवचं यस्य जिह्वायां विद्यते सदा ।
तदामृतमयी जिह्वा पवित्रा जपपूजने ॥२५ ॥

इदं कवचमज्ञात्वा ब्रह्मविद्यां जपेद्यदि ।
व्यर्थं भवति चार्वङ्गि तज्जपं वनरोदनम् ॥२६ ॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्यस्य स्मरणान्नाशमाप्नुयुः ॥२७ ॥

त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रविनिर्मितः ।
वातपित्तकफैर्युक्तः स्थूलदेहः स उच्यते ॥२८ ॥

---

१. ब्राह्मणी जठरं-घ. । २. कृष्णां-घ. । ३. साम्यताम्-घ. ।

सूक्ष्मं तेजोमयं देवि पञ्चभूतात्मकं विदुः ।
महापद्मवनान्तस्थं सर्वावयवसंयुतम् ॥२९ ॥

आधाराधेयसम्बन्धाद् गायत्री ब्राह्मणः स्वयम् ।
अत एव परं ब्रह्म कथ्यते उभयात्मकम् ॥३० ॥

ब्राह्मणस्यैव जीवात्मा गायत्रीसहितं वपुः ।
आत्मनो हृदयाम्भोजे प्रदीपकलिकोपमम् ॥३१ ॥

निर्धूमञ्च यथा ज्योतिस्तैलाग्निवर्तियोगतः ।
तज्ज्योतिः परमं ब्रह्म स एव परमः शिवः ॥३२ ॥

गायत्रीकवचन्यासं मातृकास्थानसन्धिषु ।
यः कृत्वा ब्राह्मणश्रेष्ठो अन्यन्यासं समाचरेत् ॥३३ ॥

अन्यन्यासस्तदा सिद्धो ह्यन्यथाऽरण्यरोदनम् ।
गायत्रीन्यासमात्रेण परब्रह्ममयो द्विजः ॥३४ ॥

इदं कवचमज्ञात्वा ब्रह्मचर्यं करोति यः ।
ब्रह्मचर्यं भवेद् व्यर्थं गायत्रीकवचं विना ॥३५ ॥

कवचस्य प्रसादेन ब्राह्मणो ज्वलदग्निवत् ।
कवचं परमेशानि सृष्टिस्थितिलयात्मकम् ॥३६ ॥

कवचस्य प्रसादेन ब्रह्मा सृष्टिं करोति हि ।
स्थितिञ्च कुरुते विष्णुः रुद्रोऽहं लयकारकः ॥३७ ॥

अन्यद्धि कवचं देवि सृष्टिस्थितिलयं विना ।
इदमेव ब्रह्ममयं सृष्टिस्थितिलयात्मकम् ॥३८ ॥

देवस्य सवितुर्वर्चो[१] भर्गमन्तर्गतं विभुः[२] ।
ब्रह्मवादिन एवाहुर्वरेण्यं चास्य धीमहि ॥३९ ॥

---

१. वाच्यो-घ.। २.विभु-घ.।

चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात् ।
धर्मार्थकाममोक्षेषु बुद्धिवृत्ती पुनः पुनः ॥४० ॥

बुद्धेश्चोदयिता यश्च चिदात्मा पुरुषो विराट् ।
वरेण्यं वरणीयञ्च जन्मसंसारभीरुभिः ॥४१ ॥

आदित्यान्तर्गतं भर्गो भर्गाख्यं तन्मुमुक्षुभिः ।
जन्ममृत्युविनाशाय दुःखस्य त्रितयस्य च ॥४२ ॥

ध्यानेन पुरुषो यश्च द्रष्टव्यः सूर्यमण्डले ।
मन्त्रार्थमपि चैवायं स्थापयत्येवमेव हि ॥४३ ॥

तिस्रोऽङ्गुल्यास्त्रिपर्वाणो मध्यमा चैकपर्विका ।
अनामामध्यमारभ्य जप एवमुदाहृतः ॥४४ ॥

मध्यमाया द्वयं पर्व स्पृशेन्नैव कदाचन ।
एवमेकं पुरा क्लृप्तं विनिर्दिष्टं स्वयम्भुवा ॥४५ ॥

गायत्री वेदजननी गायत्री [१] ब्रह्मणः प्रसूः ।
गायन्तं त्रायते यस्माद् गायत्री तेन चोच्यते ॥४६ ॥

कवचं ब्रह्मणो मानं प्रातरुत्थाय यः पठेत् ।
गायत्रीञ्च सकृत् स्मृत्वा जपलक्षफलं लभेत् ॥४७ ॥

एवं क्रमेण गायत्रीं शतधा प्रजपेद्यदि ।
शतलक्षफलं प्राप्य विहरेद्देववद् भुवि ॥४८ ॥

ग्रहणे चन्द्रसूर्यस्य पठित्वा कवचं द्विजः ।
सकृद्यदि जपेद् विद्वान् गायत्रीं परमाक्षरीम् ॥४९ ॥

तत्क्षणात् स भवेत् सिद्धो ब्रह्मसायुज्यमाप्नुयात् ।
इदं कवचमज्ञात्वा गायत्रीं प्रजपेत्तु यः ॥५० ॥

---

१.ब्राह्मण-घ.।

जप एव स एव स्याद् निस्तेजा न च सिद्धिदः ।
यः पठेत् कवचं देवि सततं शिवसन्निधौ ॥ ५१ ॥

सन्निधौ विष्णुदेवस्य कवचं शक्तिसन्निधौ ।
तेजःपुञ्जमयो विप्रस्तत्क्षणाज्जायते ध्रुवम् ॥ ५२ ॥

॥ इत्यागमसन्दर्भे ज्ञानदर्पणे गायत्रीब्राह्मणसर्वस्वे[1] देवदेवीसंवादे[2] नवमो ब्राह्मणपटलः ॥

॥समाप्तोऽयं ग्रन्थः । ॐ तत्सत् ॥



१. तन्त्रे-घ. । २. कवचं समाप्तमित्यधिकः पाठः-घ. ।

# चीनाचारतन्त्रम्

## ।।ॐ नमस्तारिण्यै[१] ।।

### ।।अथ प्रथमः पटलः ।।

श्रीदेव्युवाच —

महाचीनक्रमाचारः सूचितो न प्रकाशितः ।
इदानीं[२] श्रोतुमिच्छामि[३] यदि तेऽस्ति कृपा मयि ।।१ ।।

इति पृष्टः पुरा देव्या कैलासशिखरे हरः ।
चिन्तयामास मनसा[४] किञ्चिदाकुलितेक्षणः ।।२ ।।

इयमुत्कण्ठिता भूयो भूयः[५] प्रेरयति प्रिया ।
चीनाचारक्रमं वक्तुं न[६] प्रकाश्यः कथं मया ।।३ ।।

अतिगुह्यतरः सोऽपि ह्याचारः सिद्धिदायकः ।
[७]स्त्रीणां चञ्चलया बुद्ध्या कथं गोप्तुं हि शक्यते[८] ।।४ ।।

इति सञ्चिन्त्य मनसा पुनराह महेश्वरी ।
महाचीनक्रमाचारं ब्रूहि मे परमेश्वर ।। ५ ।।

श्रीशिव उवाच[९]—

अलं यत्नैरलं यत्नैरलं यत्नैर्महेश्वरि ।
चीनाचारक्रमं श्रोतुं विरता भव पार्वति ।। ६ ।।
[१०]स एव परमाचारो न प्रकाश्यः कदाचन ।
[११]गुह्याद् गुह्यतरः[१२]साक्षात्तत्त्वध्यानमयः शिवे ।। ७ ।।

---

१.ॐ नमः पार्वत्यै- क.श्रीगणेशं भजेत्, देवतायै नमः-ख.। २.कथयेशान-ख.,ग.।
३.कथयस्व महेश्वर-क., यदि स्नेहोऽस्ति मां प्रति-ख.। ४.दामीलि-क.।
५.पुनः प्रेरय मां प्रिय-ख.। ६.सुप्रकाशं-क.,स्वप्रकाश्य-ख.।
७.सुमतीनां चञ्चला बुद्ध्या कथं गोप्यं हि शक्यते-ख.। ८.कथ्यते-ग.।
९.शिव उवाच-ग.। १०.सर्वथा परमद्वारो-क.।
११.अतिगुप्ताद्-क.,गुप्ताद् गुप्ततरः-ग.। १२.तन्मयतां-क.,तत्त्वज्ञानमयः-ख.।

[१]स्त्रीस्वभावेन [२]देवेशि शश्वन्मां परिपृच्छसि ।
लक्षवारं [३]वारिताऽपि श्रोतुमिच्छसि शङ्करि ॥८ ॥

श्रीदेव्युवाच[४]—

यदि चीनक्रमाचारं न[५] मे कथयसि प्रभो ।
प्राणत्यागं करिष्यामि पुरतस्ते न संशयः ॥९ ॥
[६]इत्युक्तः शैलतनयां [७]रुद्रः कारुणिको महान् ।
महाचीनक्रमाचारं गदितुञ्च प्रचक्रमे ॥१० ॥
सर्वदा [८]गोप्य [९]एवायमाचारः सिद्धिदायकः ।
[१०]तवानुरोधादेवाहं कथयामि महेश्वरि ॥११ ॥
ब्रह्मणो मानसः पुत्रो वशिष्ठोऽतीव[११]संयमी ।
तारामाराधयामास पुरा नीलाचले मुनिः[१२] ॥१२ ॥
[१३] जपन् सन्तारिणीं विद्यां कामाख्यायोनिमण्डले ।
गमयामास वर्षाणामयुतं ध्यानतत्परः ॥१३ ॥
वर्षायुतेन[१४] तस्यैवं चिरमाराधिता सती ।
नानुग्रहं चकारासौ तारा संसारतारिणी ॥१४ ॥
अथासौ पितरं गत्वा ब्रह्माणं परमेष्ठिनम् ।
कोपेन ज्वलितो[१५] विद्यां तत्याज[१६] पितुरन्तिके[१७] ॥१५ ॥
द्वादशादित्यसङ्काशं तपोभिर्ज्वलितं मुनिम्[१८] ।
ब्रह्मा स[१९] च मुनिं[२०] प्राह श्रृणु पुत्र वचो मम ॥१६ ॥

---

१. स्त्रीस्वभावा भगवती श्रृणु त्वं- ख.। २. भवती सर्वदा परिपृच्छति-ग.।
३. स्मारितापि-क., वारितासि-ख. वारितासि तथापि श्रोतुमिच्छसि-ग.। ४. देव्युवाच-ग.।
५. नाम-क., मां न कथय-ग.। ६. इत्युक्तं-क., इत्युक्त्वा-ख.।
७. सङ्गचक्राननो- क., रुद्रकारानको-ख.। ८. गुप्य-ग.। ९. त्रवा-ग.। १०. भावानुरोधा-क.।
११. स्थिरसंयमः-क., वरसंयमी-ग.। १२. मनि-ग.। १३. जपन् सत्तारिणीं-ख., जपनसतारिणी-ग.। १४. वर्षेषु तेन तत्रैव-ख. ग.। १५. ज्वलितां-ख.। १६. तथाह-क.।
१७. रन्तिकम्- ख.। १८. मनिम्-ग., मुनिः-ख.। १९. शापानुलयं प्राप्य-ख.। २०. मनिं-ग.।

तत्त्वज्ञानमयीं विद्यां तारां [१] भुवनतारिणीम् ।
आराधय त्वं [२] श्रीचरणं सिद्धियुक्तेन [३] चेतसा ॥१७ ॥

अस्याः [४] प्रसादादेवाहं [५] भुवनानि चतुर्दश ।
सृजामि चतुरो वेदान् कल्पयामि च लीलया ॥१८ ॥

एनामेव [६] समाराध्य विद्यां भुवनतारिणीम् ।
तत्त्वज्ञानमयो विष्णुर्भुवनं पालयत्यसौ [७] ॥१९ ॥

संहारकाले च हरो रुद्रमूर्तिधरः [८] परः ।
तामेव तारामाराध्य संहरत्यखिलं जगत् ॥२० ॥

इत्युक्तो [९] ब्रह्मणा योगी वशिष्ठः साधकोत्तमः ।
स्वपित्रे [१०] कथयामास सर्वमाराधनक्रमम् ॥२१ ॥

वशिष्ठ उवाच —

देवानामादिभूतस्त्वं [११] सर्वविद्यामय प्रभो ।
[कथं [१२] दत्ता दुराराध्या विद्यामल्पमियं त्वया ॥२२ ॥
[१३] सहस्रवत्सरं पूर्वमियमाराधिता प्रभो ।]
नीलाचले निवसता [१४] हविष्यं [१५] भुञ्जता मया ॥२२ ॥

तथापि तातः [१६] तारिण्याः करुणा मयि नाभवत् [१७] ।
ततो गण्डूषमात्रन्तु काले काले पिबन् जलम् ॥२३ ॥

आराधयामि तां देवीं वत्सराणां सहस्रकम् ।
ततोऽपि [१८] यदि [१९] नैवाभूत् तारिण्याः करुणा मयि [२०] ॥२४ ॥

---

१. त्रिभुव- ख. । २. सुचिरं-ख., ग. । ३. अनुच्छिन्नेन-ख. अनुद्विग्नेन-ग. । ४. तस्याः-क., तस्य-ग. । ५. दारोह-क. । ६. एषामेव-ग. । ७. पालयेच्च सः-ग. । ८. धरो ह्यभूत्-ग. । ९. इत्येवं ब्राह्मणो- क. । १०. स्वपुत्रे- ख. । ११. भूत त्वं- ख. । ख.ग. पुस्तकयोरधिकः पाठः । १२. कथं दत्त्वा दुराराध्यां विद्यां सद्यसि यां त्वया- ख. । १३. सहस्रपूर्वं वर्षञ्च इयमाराधिता प्रभो-ग. । १४. विरमता-क. । १५. हविष्यं भुञ्जितं-ख., हविष्यं भुञ्जता-ग. । १६. देव्याः- ख., ग. । १७. नाभवेत्-क. । १८. तथापि-क. । १९. नो वाभूत्- क., वै नाभूत्-ग. । २०. ततोऽपि नाभूत् तारिण्या मय्येव करुणा यदि-ख. ।

[१]तदाहमेकपादेन तिष्ठन्नीलाचलोपरि ।
परं समाधिमास्थाय निराहारो दृढव्रतः ॥२५ ॥

तामेव केवलं ध्यायन् जपन् तामेव सर्वदा ।
[२]अतिवाहितवान् वर्षं सहस्राष्टकमुत्तमम्[३] ॥२६ ॥

[४]एवं दश सहस्रन्तु [५]वर्षाणामहमीश्वरीम् ।
कामाख्यायोनिमाश्रित्य[६] समाराधितवान् प्रभो ॥२७ ॥

अद्याप्यनुग्रहस्तस्यास्तथापि नैव[७] दृश्यते ।
अतस्त्यजामि दुःसाध्यां विद्यामेनां सुदुःखितः ॥२८ ॥

इति तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।
उवाच सान्त्वयन् पुत्रं वशिष्ठं मुनिनां[८] वरम् ॥२९ ॥

ब्रह्मोवाच[९]—

वशिष्ठ गच्छ[१०] पुत्र त्वं पुनर्नीलाचलं प्रति ।
तत्र स्थितां[११] महादेवीमाराधय दृढव्रतः[१२] ॥३० ॥

कामाख्यायोनिमाश्रित्य जपतः[१३] परमेश्वरीम् ।
[१४]अचिराद् देवतासिद्धिर्भविष्यति न संशयः ॥३१ ॥

एतस्याः सदृशी [१५]काचिद् विद्या नास्ति जगत्त्रये ।
इमां त्यक्त्वा पुनर्विद्यामन्यां कां[१६] संग्रहीष्यसि ॥३२ ॥

इति तस्य वचः श्रुत्वा प्रणम्य पितरं मुनिः ।
पुनर्जगाम [१७]कामाख्यायोनिमण्डलसन्निधिम् ॥३३ ॥

---

१. अयं श्लोको न दृश्यते-ख. पुस्तके । २. अतिराहितवान्-ग. । ३. मत्तमम्-ग. । ४. नास्त्येष श्लोकार्धः-ख. । ५. वर्षाणामिह ईश्वरीम्-क. । ६. मास्थाय-क. । ७. नहि-ग., न च-ख. । ८. यतिनां-ग. । ९. ब्रह्मोवाच इति नास्ति ग. पुस्तके । १०. वत्स गच्छ-ख., गच्छ वत्स-ग. । ११. स्थितो- क., स्थित्वा-ग. । १२. महाव्रत-क., दृढव्रत-ग. । १३. जगतः- क. । १४. अचिरादेव तां सिद्धिं-ग. । १५. विद्या काचिन्न हि- ख. । १६. का त्वं ग्रहीष्यति-ग. । कां त्वं- ख. । १७. कामाख्यां- क. ।

तत्र गत्वा मुनिवरः [१]पूजासम्भारतत्परः ।
[२]आराधयन्महामायां [३]वशिष्ठोऽतिजितेन्द्रियः ॥३४ ॥

[४]अथाराधयतस्तस्य सहस्रं परिवत्सरान् ।
[५]जग्मुस्तारामहादेवीपादाम्भोजानुवर्तिनः ॥३५ ॥

तथापि तं[६] प्रति प्रीता यदा नाभून्महेश्वरी ।
तदा[७] रोषेण महता [८]जज्वाल स मुनीश्वरः ॥३६ ॥

ततो[९] जलं समादाय तां[१०] शप्तुमुपचक्रमे ।
[११]एतस्मिन्नन्तरे रुष्टमालोक्य तं मुनीश्वरम् ॥३७ ॥

चचाल वसुधा सर्वा सशैलवनकानना ।
हाहाकारो महानासीद् दिवि[१२] देवेषु सर्वतः ॥३८ ॥

ततो बभूव [१३]पुरतस्तारा संसारतारिणी ।
[१४]वशिष्ठस्तां समालोक्य शशापातीव दारुणम् ॥३९ ॥

[१५]ततो देवी महामाया तारिणी सर्वसिद्धिदा ।
उवाच [१६]साधकश्रेष्ठं वशिष्ठं मुनिनां वरम् ॥४० ॥

रोषेण [१७]दारुणमनाः कथं मामशपद् भवान् ।
[१८]मदीयाराधनाचारं बुद्धरूपी जनार्दनः ॥४१ ॥

---

१. पूजां-क., पूजासंभाव-ग.।     २. आराधितो महाविद्यां-ख., आरराध महामायां-ग.। ३. वशिष्ठोऽपि-क.। ४. तत्र आराधयामास सहस्रमणिवत्सरः-ग.। ५. जम्बुतारा महादेवी पदान्तो जानुवर्त्तिनः-क.। ६. तत्- क.। ७. तदनुरोधेन सहसा- क.। ८. संप्रजह्वान्- ख., कालानलं-ग.। ९. तदा- क.। १०. ताञ्च शप्तुमपक्रमे-क.। ११. एतस्मिन्नेव काले तु रुष्टमालोक्य तं मुनिम्- क.। १२. देवी- क.। १३. पुनस्तारा-क.। १४. वशिष्ठ तां-क.।

१५. वशिष्ठेन शप्ता सा फलदा क्वचित् ।
चीनाचारं विना नैव प्रसीदति कदाचन ॥ —इत्यधिकः पाठः ग. पुस्तके ।
ततो वशिष्ठेन संशप्ता फलदात्री न कस्यचित् ।
चीनाचारं विना नैव प्रसीदामि कदाचन ॥ —इत्यधिकः पाठः ख. पुस्तके ।

१६. श्रेष्ठ मन्वं नीयत चेतसा ।ग.।     १७. दारुणमना कथं मां शापयद्-ग.।

१८. मयि-आराधनाचारं-क., मदीयावरणाचारं-ख.।

एक एव विजानाति नान्यः कश्चन तत्त्वतः ।
वृथैव [१]यामबाहुल्यः कालोऽयं गमितस्त्वया ॥४२ ॥
विरुद्धाचारशीलेन मम तत्त्वमजानता[२] ।
तद्बुद्धरूपिणो[३] विष्णोः सन्निधिं याहि सम्प्रति ॥४३ ॥
तेनोपदिष्टाचारेण [४]मामाराधय [५]सुव्रत ।
तदैव [६]सुप्रसन्नास्मि त्वयि [७]वत्स न संशयः ॥४४ ॥

॥ इति महाचीनाचारसारतन्त्रे सर्वाचारसारोत्तमोत्तमे महाचीनाचारक्रमे प्रथमः पटलः[८] ॥



१. यासबहुलः - ग.। २. तत्त्वमजानतः-ग.।
३. उद्बोधरूपिणो-क., तद्बुद्धरूपिणी विष्णोः सान्निध्यं याहि साम्प्रतम्-ख.।
४. समाराधय-क.। ५. सुव्रतः-ख.। ६. सुप्रसन्नास्यां-ग.। ७. यास्याम्यसंशयः-क.।
८. इत्याचारतन्त्रे प्रथमपटलः-ख., इति श्रीचीनाचारे प्रथमः पटलः-ग.। नास्ति-ख.पु.।

## ॥अथ द्वितीयः पटलः ॥

ततः प्रणम्य तां देवीं वशिष्ठोऽसौ महामुनिः ।
जगामाचारविज्ञानवाञ्छया बुद्धरूपिणम् ॥१ ॥

ततो गत्वा महाचीने देशे स[१] मुनिपुङ्गवः ।
ददर्श हिमवत्पार्श्वे [२]साधकेश्वरसेवितम् ॥२ ॥

[३]रणज्जघनरावेण रूपयौवनशालिना ।
[४]मदिरामत्तचित्तेन [५]विलासोल्लसितेन च ॥३ ॥

[६]शृङ्गारपरिवेशेन जगन्मोहनकारिणा ।
[७]भयलज्जाविहीनेन देवीध्यानपरेण च ॥४ ॥

कामिनीनां सहस्रेण परिवारितमीश्वरम् ।
मदिरापानसञ्जातं[८] रक्तमन्थरलोचनम् ॥ ५ ॥

दूरादेव विलोक्यैवं[९] वशिष्ठो बुद्धरूपिणम् ।
विस्मयेन [१०]समाविष्टः स्मरन् संसारतारिणीम् ॥ ६ ॥

किमिदं क्रियते कर्म विष्णुना बुद्धरूपिणा ।
[११]वेदवादविरुद्धोऽयमाचारः सम्मतो [१२]मम ॥ ७ ॥

इति चिन्तयतस्तस्य वशिष्ठस्य महात्मनः[१३] ।
आकाशवाणी प्राहाशु[१४] मैवं चिन्तय सुव्रत ॥ ८ ॥

आचारः[१५] परमार्थोऽयं[१६] तारिणीसाधने मुने ।
[१७]एतद्विरुद्धाचारस्य मतेनासौ प्रसीदति ॥ ९ ॥

---

१. ज्ञानमयो मुनिः-क., च मुनिपुङ्गवः-ग.। २. लोकेश्वरसुसेवितम्-क.। ३. न लज्वक्षणभारेण-ख., ललज्ज धनभारेण-ग.। ४. मदिरामत्तचित्तेन-ग.। ५. विलासे सुरतेन च-ख.। ६. शृङ्गाररस-ख., ग.। ७. भव- ग.। ८. सञ्जातरक्तमम्बर-ख., सञ्जातरक्तवर्तुल-ग.। ९. विलोक्यैनं-क.। १०. सदाविष्टः-क.। ११. देवदेव-क.। १२. मया-क.। १३. महामुनेः-क.। १४. हाशु एवं-क., हास्यमेव-ख., मेवचिन्तय-ग.। १५. आधारः-ख.। १६. परमोऽर्थोऽयं-ग.। १७. एते विरुद्धभावस्य-ख.।

यदि तस्याः प्रसादं [1] त्वमचिरेणाभिवाञ्छसि ।
एतेन [2] चीनाचारेण तदा तां भज सुव्रत ॥१० ॥
आकाशवाणीमाकर्ण्य [3] रोमाञ्चितकलेवरः ।
वशिष्ठो दण्डवद्भूमौ पपातातीव हर्षितः ॥११ ॥
[4] तथोत्थाय प्रणम्यासौ कृताञ्जलिपुटो मुनिः ।
जगाम विष्णोः सान्निध्यं [5] बुद्धरूपस्य पार्वति ॥१२ ॥
[6] अथासौ तं समालोक्य [7] मदिरामोदविह्वलः ।
[8] प्राह बुद्धः प्रसन्नात्मा किमर्थं त्वमिहागतः ॥१३ ॥
अथ बुद्धं प्रणम्याह भक्तिनम्रो [9] महामुनिः ।
यदुक्तं तारिणीदेव्या [10] निजाराधनहेतवे ॥१४ ॥
[11] तच्छ्रुत्वा भगवान् बुद्धस्तत्त्वज्ञानमयो हरिः ।
वशिष्ठं प्राह [12] संज्ञानं [13] चीनाचारोऽधिकारवान् ॥१५ ॥
अप्रकाश्योऽयमाचारस्तारिण्याः सर्वदा मुने ।
तव भक्तिवशादस्मि [14] प्रकाशयामीह तत्परः ॥१६ ॥

बुद्ध उवाच —

[15] अथाचारविधिं वक्ष्ये [16] तारादेव्याः समृद्धिदम् ।
[17] यस्यानुष्ठानमात्रेण भवाब्धौ न निमज्जति ॥१७ ॥
[18] समस्तशोकशमनमानन्दाब्धिनिपातनम् [19] ।
तत्त्वज्ञानमयं साक्षाद् विमुक्तिफलदायकम् ॥१८ ॥

---

१. मचिरेण तु-ग. । २. चीनचारेण-ख. । ३. लोमा-क. । ४. तत उत्थाय वीरेण-ख., अतोत्थाय ततो देवीं-ग. । ५. समीपं-क., सन्निधिं-ग. । ६. तथासौ-ख. । ७. मद-ख. । ८. महाबुद्धिः प्रसन्नाऽथ किमर्थं त्वयि भागतः-ग. । ९. भक्तियुक्तो-ग. । १०. चारार्ण-ख. प्राहेत्यारभ्य महामुनिपर्यन्तं नास्ति ख. पु. । ११. एतच्छ्रुत्वा तु भगवान् नित्यो ज्ञानमयो हरिः-ख. । १२. सुज्ञानं-क. । १३. चीनाचाराधिकारवान्-क. । १४. स्मिन्न प्रकाश्यं कदाचन-ख., वशाद् वक्ष्ये न प्रकाश्यः कदाचन-ग. । १५. अथाचारं प्रवक्ष्यामि- ख. । १६. देव्याः सर्वं समृद्धिदम्-ख., ग. । १७. तस्या-क. । १८. समस्तलोकशमन-क. । १९. नन्दादेवविभूतिदम्-क.; आनन्दं चिदिसूदनम्-ख. ।

स्नानादि [१]मानसं शौचं [२]मानसश्च जपः स्मृतः ।
पूजनं मानसं दिव्यं [३]मानसं तर्पणादिकम् ॥१९ ॥

[४]सर्व एव शुभः कालो नाशुभो विद्यते क्वचित् ।
न विशेषो दिवारात्रौ न सन्ध्यायां महानिशि ॥२० ॥

[५]वस्त्रासनस्थानगेहदेहस्पर्शादिवारिणः ।
[६]शुद्धिं [७]न कारयेदेव निर्विकल्पमनाश्च यः ॥२१ ॥

नात्र [८]शुद्ध्याद्यपेक्षास्ति [९]न च मद्यादिदूषणम् ।
[१०]सर्वथा पूजयेद् [११]देवीमस्नातः कृतभोजनः ॥२२ ॥

महानिश्यशुचौ देशे बलिं मन्त्रेण दापयेत्[१२] ।
स्त्रीद्वेषो नैव[१३] कर्तव्यो विशेषात् पूजनं स्त्रियः ॥२३ ॥

तासां [१४]प्रहारनिन्दाञ्च कौटिल्यमप्रियन्तथा ।
सर्वथा नैव[१५] कर्तव्यमन्यथा सिद्धिरोधकृत् ॥२४ ॥

स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव [१६]विभूषणम् ।
स्त्रीसङ्गिना[१७] सदा भाव्यमन्यथा [१८]स्वस्त्रिया सह ॥२५ ॥

[१९]तद्धस्तावचितं पुष्पं [२०]तद्धस्तावचितं जलम् ।
तद्धस्तावचितं द्रव्यं देवताभ्यो निवेदयेत् ॥२६ ॥

महाचीनद्रुमलतावेष्टितः साधकोत्तमः ।
रात्रौ यदि जपेन्मन्त्रं दुर्लभं तस्य किं भवेत् ॥२७ ॥

---

१. मनसः-क. । २. मानसप्रभवो जपः-ख.; मानसः प्रवरो जपः-ग. । ३. स्नानमा-ख. ।
४. सर्वत्रैव-ख. । ५. देहगेह-ख. । ६. शुचिं-ग. । ७. न चाचरेत्तत्र-ख.; न चारयेदत्र-ग. ।
८. शुद्धेर-ग. । ९. न वामेध्यादि-ख., न चामेध्यादि-ग. । १०. सर्वदा-ख. ।
११. देवीं न स्नातः-ख. । १२. स्नापयेद्-क. । १३. मैव-ग. । १४. प्रहारं-ग. ।
१५. न च-क. । १६. विभूषणाः-ग. । १७. माङ्गल्य-ख. । १८. स्वस्त्रियामपि-ख., दोषमावहेत्-ग. ।
१९. तद्धस्ताद्रचितं पुष्पं तद्धस्ताद्रचितं जलम् । तद्धस्ताद्रचितं द्रव्यं महादेव्यै निवेदयेत्-ग. ।
२० तद्धस्तावचितं जलम् । तद्धस्तावचितं इत्यंशो नास्ति-ख. पुस्तके ।

महाचीनद्रुमलतावेष्टनेन च यत् फलम् ।
तस्यापि षोडशांशेन [१]कलां नार्हन्ति ते शवाः ॥२८ ॥

शवासनाधिकफलं लतागेहप्रवेशनम् ।
श्मशानालयमागत्य मुक्तकेशो दिगम्बरः ॥२९ ॥

[२]महाचीनद्रुमलतावेष्टितो मुक्तिमाप्नुयात् ।
जपस्थाने महाशङ्खं [३]निवेश्योर्ध्वं जपञ्चरेत् ॥३० ॥

[४]स्त्रियं गच्छन् स्पृशन् पश्यन् यत्र तत्रापि साधकः ।
[५]भक्षंस्ताम्बूलमन्यांश्च भक्ष्यद्रव्यान् [६]यथारुचीन् ॥३१ ॥

[७]मुक्त्वाऽन्यशेषद्रव्याणि जप्त्वा भुक्त्वा जपं चरेत् ।
दिक्कालनियमो नास्ति स्थित्यादिनियमो न च ॥३२ ॥

[८]जपे न कालनियमो [९]नार्चादिषु बलिष्वपि ।
[१०]स्वेच्छाचारोऽत्र गदितः प्रचरेद् [११]धृष्टमानसः ॥३३ ॥

कृतार्थं मन्यमानस्तु [१२]सन्तुष्टनिजमानसः ।
सुगन्धिश्वेतलौहित्यकुसुमैरर्चयेत् [१३] कुलम् ॥३४ ॥

बिल्वैर्मरुबकाद्यैश्च [१४] तुलसीवर्जितैः शुभैः ।
एकलिङ्गे श्मशाने वा [१५]शून्यागारे चतुष्पथे ॥३५ ॥

[१६]तटस्थः [१७]साधयेद् योगी [१८]तारां भुवनतारिणीम् ।
तारिणी दक्षिणा काली भैरवी [१९]सुन्दरी तथा ॥३६ ॥

---

१. कलांशं हन्ति-क.। २. नास्ति-ख.। ३. निवेश्याङ्गं - ग.।
४. स्त्रियमित्यारभ्य जपं चरेदित्यन्तं ख.पु. नास्ति। ५. भक्षयन् मत्स्यमांसञ्च-ग.।
६. यथारुचि-ग.। ७. भक्ष्याम्बुशेषद्रव्याणि दत्त्वा भक्षन् परे जपः- क.।
८. न जपेत्- क, न जपे- ग.। ९. न च दिक्षु- क., अर्चादि- ग.। १०. स्वेच्छाचारादिरतः- क., स्वेच्छाचारो निगदितः-ख.। ११. तुष्टमानसः-ख.। १२. सन्तुष्टो-ख., ग.। १३. कुङ्कुमैरर्चयेच्छिवाम्-क.। १४. कुरुवकैर्पुष्पै-ख., बिल्वफलैश्चैव-ग.। १५. निर्जने वा-क.। १६. ततस्तु-ख., तत्र स्थित्वा-ग.। १७. साधयेच्च-ग.। १८. त्रिभु-ख., श्रीभुव-ग.। १९. सुन्दरी भैरवी-ग.।

[1]महाचीनक्रमेणैताः [2]सिद्ध्यन्त्येव न संशयः ।
[3]सुन्दरीभैरवीदेव्यः [4]प्रकारोऽन्योऽपि विद्यते ॥३७ ॥

[5]तारिणीदक्षिणासिद्धिर्नैव चीनक्रमं विना ।
[6]महाचीनक्रमाचारतत्परः साधकोत्तमः ॥३८ ॥

[7]तारिणीपूजनं विद्याकुलकोटिं समुद्धरेत् ।
[8]नृत्यन्ति पितरस्तस्य[9] गाथां गायन्ति ते मुदा ॥३९ ॥

अपि [10]नः स्वकुले [11]कश्चित् कुलज्ञानी भविष्यति ।
स धन्यः स [12]चिरज्ञानी स कविः स च पण्डितः ॥४० ॥

स कुलीनः स [13]सुकृती स [14]बली स च साधकः ।
स ब्राह्मणः स [15]वेदज्ञः सोऽग्निहोत्री[16] स दीक्षितः ॥४१ ॥

स तीर्थसेवी पीठेषु[17] [18]निवासी स च मुक्तिभाक् ।
स व्रती सोमपायी [19]स स [20]यज्वा सर्वमन्त्रिषु ॥४२ ॥

[21]स वैष्णवः स शैवश्च स सौरः स च गाणपः ।
[22]महाचीनक्रमाचारैस्तारिणीं यः सदा भजेत् ॥४३ ॥

॥ इति महाचीनाचारसारतन्त्रे सर्वाचारसारोत्तमोत्तमे महाचीनाचारक्रमे
द्वितीयः पटलः[23] ॥

---

१. क्रमेणैव-क. । २. सिध्यन्ते ता-क. । ३. देव्याः-ग. । ४. प्रकाराण्यपि दृश्यते-ग. । ५. काली-त्यारभ्य सिद्धिरित्यन्तं ख.पु. नास्ति । ६. महाचारपरो भूत्वा पूजयेत्-ग. । ७. तारिणीं प्रजपन्-ख., तारिणीं पूजयेत्-ग. । ८. न क्रन्दति-ख. । ९. सर्वे-क. । १०. कश्चित्कुले-ग. । ११. जातः-ख., अस्माकं-ग. । १२. कुलज्ञानी-ख., विज्ञानी-ग. । १३. मुखी च-ग. । १४. रसी-ख., धन्यः साध-कोत्तमः-ग. । १५. दैवज्ञः- क, सदा दक्षः-ग. । १६. अग्निहोता-क. । १७. तीर्थो देवीपीठानां-क., तीर्थसेविपीठानां- ग., तीर्थकेपी-ख. । १८. निरामी च सर्वदा-क., सर्वदा सदा सुखी- ग. । १९. च-ग. । २०. यशस्वी स वै मुनिः- ख., यज्ञशर्वकृद् विभुः-ग. । २१. अयं श्लोकार्द्धः ख. पु. नास्ति । २२. महाचीनक्रमाचाराल्लोको मां भजते सदा-ग. । २३. इत्याचारतन्त्रे द्वितीयः पटलः-ख. ।

[[१]स्त्रीसम्भोगेन कौलानां यदि मोक्षो भवेदिह ।
सर्वेऽपि जन्तवो लोके मुक्ताः स्युः स्त्री निषेवणात् ॥
अतः श्रृण्वन्तरं पुत्र शर्म (श्च ?) च महालय ।
मोक्षं ददामि भूतानामेतद्धर्मप्रवर्तिनाम् ॥
वृथा पानं यत्क्रियते सुरापानं तदुच्यते ।
तन्महापातकायैव वेदादिषु निरूपितम् ॥

वशिष्ठ उवाच —

त्वन्मुखात् श्रोतुमिच्छामि कुलधर्मं विशेषतः ।
एतस्य हि विशेषज्ञस्तत्समो नास्ति कश्चन ॥
तस्य धर्मस्य माहात्म्यं सर्वधर्मोत्तमस्य च ।
वद मे परमेशान यदि तेऽस्ति कृपा मयि ॥

श्रीभगवानुवाच —

मुने श्रृणु प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण योगिनां च प्रियो भवेत् ॥
शिवब्रह्मगुहादीनां न मया कथितं पुरा ।
कथयामि तव स्नेहाच्छृणुष्वैकाग्रमानसः ॥
पारम्पर्यक्रियायाश्च अतिगुप्तं महाद्भुतम् ।
अकथ्यं परमेशान तथापि कथयामि ते ॥
सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवः परः ।
वैष्णवात् परमं शैवं शैवाद् दक्षिणमुत्तमम् ।
दक्षिणादुत्तमं कौलं कौलात् परतरं न हि ॥
गुह्याद् गुह्यतरं देवि सारात्सारं परात्परम् ।
मथित्वा ज्ञानमन्थेन वेदागममहार्णवम् ।
कुलाचारक्रमेणैव न सिद्धिर्जायते क्वचित् ॥]

॥ इति श्रीचीनाचारतन्त्रे द्वितीयः पटलः ॥

---

१. [ ] कोष्ठकान्तर्गतोऽधिकः पाठः - ग. ।

## ॥अथ तृतीयः पटलः॥

श्रीशिव उवाच —

इति तस्य वचः श्रुत्वा हरेर्बुद्ध[१] शरीरिणः।
[२]वशिष्ठस्तं पुनः प्राह कृताञ्जलिपुटो मुनिः ॥१॥

वशिष्ठ उवाच —

भगवन् देवदेवेश [३]तत्त्वज्ञानमय प्रभो।
[४]महाचीनक्रमाचारः [५]कथितो भवता मम ॥२॥

[६]प्रधानं द्वयमेवास्मिन् मदिरा योषिदेव[७] तु।
एतयोः किं प्रधानं [८]तद् ब्रूहि मे परमेश्वर ॥३॥

श्रीभगवानुवाच —

एतस्मिन् परमाचारे तुल्यमेव द्वयं मुने।
[९]प्राधान्यं योषितां किन्तु [१०]देवानां च न संशयः ॥४॥

यतो हि योषितां [११] देहे [१२]सदैवाधिष्ठिता शिवा।
अतः पूजासु सर्वासु तासां प्राधान्यमुच्यते ॥५॥

वशिष्ठ उवाच —

ब्रूहि देव विधानञ्च[१३] सर्वज्ञानमय प्रभो।
[१४]यथा योषित्सु तत्पूजा कर्त्तव्या नरपुङ्गवैः ॥६॥

श्रीभगवानुवाच —

योनिपीठे मन्त्रपीठे[१५] यन्त्रपीठे[१६] च पार्वति।
त्रिधा भित्वा[१७] महामाया पूज्यते साधकोत्तमैः ॥७॥

---

१. हरेरर्द्धशरीरिणः-क.। २. वशिष्ठं तं-ग.। ३. तत्त्वज्ञानमयः प्रभुः-ग.।
४. महाचीनक्रमाचारसम्मतो-क.। ५. सूचितो न प्रशासितः-ख.। ६. प्रधानद्वयमे-क.।
७. योषितेव च-क.। ८. तु-क.। ९. प्रधानं-ख.। १०. देवादेव-क.।
११. योषितो-क.। १२. सर्वदेवस्य संस्थितिः-क.। १३. देवविधानज्ञ-ख., सर्वविधानज्ञ-ग.।
१४. यथा योषित्सु पूजासु कृतासु सुरसत्तमः-क., यथा योषित्सु तत्पूजा कृता साधकसत्तमैः-ख.।
१५. मनःपीठे-ग.। १६. मनःपीठे-क.। १७. खिन्ना-क.।

सर्वेषामेव पीठानां प्रधानं योनिपीठकम् ।
तत्र सम्पूजिता देवी झटित्येव प्रसीदति ॥८ ॥

अणिमाद्यष्टसिद्धीनां कारणं परमं मुने ।
[१]योनिपूजाविधिं वक्ष्ये मम [२]सर्वार्थसाधनम् ॥९ ॥

नटी कापालिकी[३] वेश्या रजकी नापिताङ्गना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ॥१० ॥

[४]मालाकारस्य कन्या च नवकन्याः प्रकीर्तिताः ।
[५]प्रशस्ता [६]सर्वजातीनां [७]विदग्धा लक्षणान्विता ॥११ ॥

गुरुपादगता ग्राह्या नान्यथा वरवर्णिनि ।
अन्यथा तु वरारोहे नरके पतति ध्रुवम् ॥१२ ॥

आनीयान्यतमां भद्रां [८]सर्वाभरणसुन्दरीम् ।
सुन्दरीं यौवनोन्मत्तां निर्लज्जां चारुहासिनीम् ॥१३ ॥

कृत्वा दिगम्बरां तां तु [९]गन्धकुङ्कुमचन्दनैः ।
अनुलिप्तां मुक्तकेशीं [१०]ततस्तद्योनिमण्डले ॥१४ ॥

[११]गुरुशक्तिं समाराध्य पूजयित्वा षडङ्गकम् ।
पीठपूजां विधायाऽथ तन्मध्ये पूजयेच्छिवाम् ॥१५ ॥

[१२]तत्र चावाहनं नास्ति जीवन्यासो न वा मुनिः ॥
उपचारैः पूजयित्वा [१३]चार्घ्यं दत्त्वा ततः [१४]पुनः ।
जप्त्वा लिङ्गे भैरवञ्च पूजयित्वा महेश्वरीम्[१५] ॥१६ ॥

---

१. तस्याः-क. । २. सर्वज्ञसाधनम्-क. । ३. कापालिनी-क., कपालिका-ग. ।
४. श्लोकार्द्धो नास्ति - क. । ५. विदग्धा-क., अथवा-ख. । ६. सर्वजातीया-क. ।
७. मन्त्रयुक्ता च तत्परा-क. । ८. मेकशः कुलनायिकाम्-क., नवनायिकाम्-ख. ।
९. चन्दनकुङ्कुमैः-क. । १०. ततस्तु-ग. । ११. श्लोकार्द्धो नास्ति क. ।
१२. इत्यधिकोऽस्ति पाठः-ग. । १३. अर्घ्यं-ग. । १४. परम्-ग. । १५. महेश्वरम्-ग. ।

[१] गन्धासवाक्षतैः पुष्पैर्होमं कुर्यादतः [२] परम्।
धर्माधर्महविर्दीप्ते आत्माग्नौ [३] मनसा [४] स्रुचा ॥१७॥

सुषुम्नावर्त्मना नित्ये [५] अक्षवृत्तिं [६] जुहोम्यहम्।
[७] स्वाहान्तो होममन्त्रोऽयं प्रतिघाताहुतिर्मुने [८] ॥१८॥

पूर्णाहुतिं जपान्ते [९] च जुहुयान्मनुनाऽमुना।
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा [१०] ॥१९॥

[११] धर्माधर्मकलास्नेहपूर्णं [१२] वह्नौ [१३] जुहोम्यहम्।
स्वाहान्तोऽयं भवेन्मन्त्रो घोरपातक [१४] मुक्तिदः ॥२०॥

पूजाकालं विना नैव पश्येच्छक्तिं दिगम्बरीम्।
पूजाकालं विना नैव सुरा पेया [१५] च साधकैः [१६] ॥२१॥

[१७] आयुष्यं हीयते दृष्ट्वा पीत्वा [१८] तु पशुतां [१९] व्रजेत्।
[२०] सौत्रामण्यां कुलाचारे ब्राह्मणः प्रपिबेत् सुराम् ॥२२॥

[२१] अन्यत्र कामतः पीत्वा प्रायश्चित्ती भवेन्नरः [२२]।
भार्गवेण पुरा [२३] शप्तां [२४] श्रुत्वा देवीं [२५] च वारुणीम् [२६] ॥२३॥

[२७] ब्रह्मा लोकगुरुः साक्षात् प्रययौ भार्गवान्तिकम्।
[२८] प्रसाद्योवाच तं ब्रह्मा [२९] वाचाऽमृतसमानया ॥२४॥

---

१. गन्धैश्च साक्षतैः-ख.। २. कुर्यात्ततः-ग.। ३. हविर्दीप्तौ-क.ख.। ४. लग्नौ च-क.। ५. नित्यम्-ख., मित्यम्-ग.। ६. अक्षवृत्तौ-क., अक्षवृत्तिः-ग.। ७. स्वाहान्तोऽयं महामन्त्रो-ख.। ८. प्रतिष्ठाताहुती शिवे-क., प्रति स्वाहाहुतिर्मता-ग.। ९. वसान्ते-क.। १०. मनः-ख., मनी-ग., नवनम्बीन्मणीऋचा-क.। ११. धर्माधर्मे-क.। १२. पूर्ण-क., पूर्णा-ख.। १३. वर्षो-क.। १४. घातक-ख.। १५. सुरापेये-क., सुरापान-ख.। १६. साधकः-क.। १७. आयुषा-क.। १८. पीत्वापि-क., पीत्वा च-ख.। १९. नरकं-क., शूद्रतां-ख.। २०. कुलाचारं विना यश्च-ग.। २१. अन्यतः-ग.। २२. ध्रुवम्-ग.। २३. सुरां-क.। २४. शप्ता-ख.। २५. देवी- क.ख.। २६. वारुणी-क.। २७. ब्रह्म-क., ब्रह्मणोक्तो गुरुः - ग.। २८. प्राह सानुनयं ब्रह्मा-ख.। २९. चारोऽमृतसमालयः-क., चारेण नरमानसा-ख.।

देवानाममृतं [१]ब्रह्म तदीयं[२] लौकिकी सुरा।
ब्रह्मज्ञानमयी देवी कुलाचारेण [३]कृष्यते ॥२५॥
[४]सौत्रामण्याञ्च देवास्तु तृप्यन्ते सुरयैव हि।
सेयं शप्ता त्वया ब्रह्मन् तस्याः शापं प्रमोचय ॥२६॥
ब्रह्माणं प्रणिपत्याह [५]ततोऽसौ भृगुनन्दनः।
मद्वाक्यं [६]निष्फलं न[७] स्यात्त्वद्वाक्यञ्च पितामहः ॥२७॥
[८]आवश्यकं करिष्यामि तदर्थं नियमः[९] कृतः।
सौत्रामण्यां कुलाचारे[१०] सुराशापविमुक्तये ॥२८॥
[११]मन्त्रत्रयं प्रवक्ष्यामि [१२]श्रृणुष्वैकमनाः प्रभो।
एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ॥२९॥
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम्।
सूर्यमण्डलसम्भूते वरुणालयसम्भवे ॥३०॥
अमाबीजमये देवि शुक्रशापाद् विमुच्यताम्।
वेदानां [१३]प्रणवो बीजं ब्रह्मानन्दमयं यदि ॥३१॥
तेन सत्येन ते[१४] देवि ब्रह्महत्यां व्यपोहतु।
[१५]इत्युक्त्वा ब्रह्मणो मन्त्रान्[१६] भार्गवः प्रणिपत्य तम् ॥३२॥
जगाम भवनं देवि ब्रह्मा स्वभवनं ययौ।
[१७]ब्रह्मज्ञानी कुलाचारे शीघ्रं याति हरेः पदम् ॥३३॥
पतितस्य तु [१८]तस्याङ्गे [१९]गणन्ति यदि रेणवः[२०]।
तावत्कालं [२१]रेणुसंख्यं देवीलोके महीयते[२२] ॥३४॥

---

१.शुद्ध-ख.। २.तदियं-क.। ३.भुक्ष्यते-ग.। ४.सौत्रामण्या देवेन्द्रस्तृप्यते सुरयैरपि। सेयं सुरा शप्तान्वय ब्रह्मन् तस्याः शापप्रमुच्यते ॥-ग.। ५.यतोऽसौ-क.,नतोऽसौ-ख.। ६.शिफलं-क.। ७.तस्याः-ख.। ८.अमोघं च-ख.ग.। ९.नियतः-ग.। १०.कुलाचारः-क.। ११.मन्त्रं क्रमं-क.। १२.श्रृणु चैकमना भव- क.ख.,श्रृणुष्वैकमना प्रभुः-ग.। १३.परमं-ख.। १४.देवेशि-ग.। १५. इत्युक्तो ब्रह्मण-ग.। १६.मर्मान्-क.। १७.ब्रह्मज्ञानं कुलाचारे सुरां पीत्वा स्खलन् मुहुः- क.। १८.तस्याङ्गां- क.। १९.नणन्ति- ग.। २०.वेणवः- क.। २१.वेणुसंख्यम्-क.। २२.पीत्वा पीत्वा पुनः पीत्वा पतित्वा च महीतले। उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ॥ इति-ग. अधिकः पाठः।

[१]पीत्वा लिङ्गे[२] कुलाचारे[३] मदिरां[४] यौवनान्विताम् ।
कोटिजन्मार्जितं पापं तत्क्षणादेव नाशयेत् ॥३५ ॥
[५]पीत्वा पीत्वा जपित्वा च मुक्तः [६]कोटिकुलैः सह ।
ब्रह्मलोके वसेद् देवि सत्यं सत्यं न संशयः ॥३६ ॥
तत्रैव व्याप्तिमाप्नोति न पुनर्जायते भुवि ।
पीत्वा च [७]पूजयेद् देवीमीशत्वं[८] लभते ध्रुवम् ॥३७ ॥
तत्रैव लयमाप्नोति पुनर्नैव निवर्तते ।
[९]पीत्वाऽग्निहोत्री भूत्वा च त्रैलोक्यैश्वर्यभाजनम् ॥३८ ॥
[१०]जायते साधकः श्रेष्ठो महायोगी महासुखी ।
पीत्वा योगी भोजयित्वा सोऽहं [११]हंसस्ततः परम् ॥३९ ॥
स्वाहेति जायते [१२]जीवो मुक्तो वीरो जगत्त्रये ।
चिरजीवी [१३]जरामुक्तो विमुक्तः[१४] सर्वपातकैः ॥४० ॥
[१५]अणिमादियुतोऽपि स्यात् सत्यं सत्यं न संशयः ।
इति ते कथितं [१६]गुह्यं सुराशापविमोचनम् ॥४१ ॥
[१७]इत्येवं कथिता तुभ्यं यथा पूजा दिगम्बरि ।
पूजयित्वा सकृद् देवीं[१८] मुच्यते सर्वपातकैः ॥४२ ॥
एवं देवीमर्चयित्वा [१९]किमसाध्यं जगत्त्रये ।
[२०]हरौ प्रकुपिते वापि पूजयित्वा दिगम्बरीम् ॥४३ ॥

---

१. श्लोकोऽयं नास्ति ख. पुस्तके । २. लिङ्गं- ग. । ३. कुलाचारां- क. । ४. प्रमदां-ग. । ५. पीत्वा पीत्वा पुनः पीत्वा पतित्वा च महीतले । उत्थाय च पुनः पीत्वा मुक्तः कोटिकुलैः सह ॥-ख. पाठः । ६. मुक्तिः-क. । ७. पूजयित्वा च-ग. । ८. ईश्वरत्वं भवेद्-क. । ९. पीत्वापि कुण्डे हुत्वा च-क., पीत्वाग्निहोत्री भूत्वा च-ख., पीत्वाग्निहोत्रो भूत्वा च-ग. । १०. जायन्ते साधकाः सर्वे-ग. । ११. सोऽहं गच्छति तत्परः-क., हंसः शुभः परम्-ख. । १२. बीजो-क., वीरो-ख.,जीव-ग. । १३. जीवन्मुक्तो-क.ख. । १४. बीजमुक्तो-ग. । १५. अयं श्लोको नास्ति-ख., 'बलामतिबलां चापि संसिद्धिं समवाप्स्यति' इत्यधिकः पाठः-ग. । १६. दिव्यं-ग. । १७. इति ते कथितं-ग. । १८. मुच्यते हि महाभयैः-क. । १९. किमन्यच्च-ख. । २०. हरे प्रकुपिते बाणः-क., हरौ प्रजपिते चापि-ख. ।

सृष्टिस्थितिलयादीनां कर्त्ताऽसौ[१] जगदीश्वरः ।
[२]रोगेभ्यो घोररूपेभ्यः[३] पूजयित्वा विमुच्यते ॥४४ ॥

अपुत्रो लभते पुत्रं दरिद्रो धनवान्[४] भवेत् ।
आरभ्य शुक्लप्रतिपद् यावद् पञ्चदशी भवेत् ॥४५ ॥

प्रत्यहं पूजयेद् यस्तु तिथिसंख्यां दिगम्बरीम् ।
[५]मन्त्रसिद्धिर्भवेत् तस्य सत्यं सत्यं न संशयः ॥४६ ॥

वीरसाधनकर्माणि दुःखसाध्यानि केवलम् ।
सुखसंसाधनं ह्येतत् तव स्नेहात् प्रकाशितम् ॥४७ ॥

गोपनीयं प्रयत्नेन पुत्रेभ्योऽपि न दर्शयेत् ।
इत्येतत् कथितं तुभ्यं पूजाविधिमनुत्तमम् ।
साधनं सर्वथा चैनं गोपयेन्मातृजारवत् ॥४८ ॥

॥ इति महाचीनाचारतन्त्रे सर्वाचारसारोत्तमोत्तमे महाचीनाचारक्रमे
तृतीयः पटलः[६] ॥



---

१. कर्त्तारो-ख. । २. योगेभ्यो-ग. । ३. देव ऋषिभ्यो-ख. ।
४. लभते धनम्-ख., धनमाप्नुयात्-ग. । ५. सर्वसिद्धिर्भवेत्-क. ।
६. ॐ इति चनाचारस्तृतीयः— ग., इत्याचारतन्त्रे - ख. ।

# ।।अथ चतुर्थः पटलः ।।

वशिष्ठ उवाच —

[१]कुलेशानि प्रशस्तानां [२]विहितानां च लक्षणम् ।
कुलद्रव्यस्य निर्माणं वद माहात्म्यमेव च ।।१ ।।
अविधानेन यत्पापं सविधानेन तत् फलम् ।
तत्सर्वं श्रोतुमिच्छामि वद मे करुणानिधे ।।२ ।।

श्रीभगवानुवाच —

मुने श्रृणु प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य [३]श्रवणमात्रेण त्रिदशैः समतां व्रजेत् ।।३ ।।
आधारेण विना पात्रं[४] न हि तृप्यन्ति [५]मातरः ।
तस्माद् [६]विधिवदाधारं कल्पयेत् कुलनायकः ।।४ ।।
आधारं त्रिपदं[७] प्राहुः षट्पदं वा चतुष्पदम् ।
अथवा वर्तुलाकारं कुर्यादतिमनोहरम् ।। ५ ।।
स्वर्णरौप्यशिलाकूर्म[८] कपालालाबुमृण्मयम् ।
पुण्यवृक्षसमुद्भूतं पात्रं कुर्याद् विचक्षणः ।। ६ ।।
अतिसूक्ष्ममतिस्थूलं छिन्नभिन्नं च वर्जयेत् ।
[९]अम्भसां द्वादशं प्रस्थं द्विप्रस्थं[१०] पयसस्तथा ।।७ ।।
[११]मुष्टिमात्रं करे देवि एकस्मिन् [१२]योजयेच्छुचिः ।
शीतादिरहिते स्थाने स्थापयेद् दिवसद्वयम् ।। ८ ।।

---

१.कुलाशयानि पात्राणि-ख.। २.पिशितानां-क.। ३.स्मरण-ख.।
४.भ्रंशो-ख.। ५.देवता-ख.। ६.विविधमा-ख.।
७.त्रिविधं प्रोक्तं षट्दलं वा चतुर्दलम्-ख.। ८.कपालं चापि-ख.।
९.अङ्गुलं-क.। १०.प्रस्थद्वातक्रमेण च-ख.। ११.मुष्टिमात्राङ्कुरं-क.।
१२.यो जपेत्-क.।

ततो वह्नौ समारोप्य [१]जम्बालसदृशं पचेत् ।
अवरोप्य पुनः शीतामवस्थामानयेद् बुधः ॥९ ॥
पयः [२]प्रस्थेन [३]पिष्ट्वा तु हस्ताभ्यां मेलयेत्ततः ।
[४]सम्यगर्धक्रमेणैव पयसालोड्य मेलयेत् ॥१० ॥
[५]सैषा पैष्टीति विख्याता पूजिता [६]देवतानरैः [७] ।
गुरुं स्मरन् पिबन् मद्यं खादन् मांसं न दोषभाक् ॥११ ॥
सेवते चेत् सुखार्थाय मद्यादीन् स च नारकी ।
प्राशयेद् देवताप्रीत्यै [८]स्वाभिमानविवर्जितः ॥१२ ॥
श्वपचोऽपि कुलज्ञानी ब्राह्मणादतिरिच्यते ।
यः कौलिकः कुलज्ञानं न पश्यति न [९]विन्दति ॥१३ ॥
धिक् तस्य जीवनं लोके धिक् तस्यापि च पौरुषम् ।
ते विद्यापुण्यकर्माणस्ते शान्तास्तेऽपि योगिनः ॥१४ ॥
येषां चित्ते भाग्यवशात् कुलज्ञानं प्रकाशते ।
[१०]ते वन्द्यास्ते महात्मानः सुकृतार्था नरोत्तमाः ॥१५ ॥
येषामुत्पद्यते चित्ते कुलज्ञानं मयोदितम् ।
त्रासिता हि मया पूर्वं पशवः शास्त्रकोटिभिः ॥१६ ॥
कुलधर्मं न जानन्ति ततो ज्ञानाभिमानिनः ।
पशुशास्त्राणि सर्वाणि मयैव कथितानि वै ॥१७ ॥

---

१. जम्बलि-ख. । २. प्रस्थञ्च-क. । ३. पीत्वा-क., पिष्टा - ख. ।
४. संमथ्य तक्रेण-ख. । ५. एषा-क. । ६. देवदानवैः- ख. ।
७. कुलमजाविना स्वार्थं यत्करोति सुदुर्मतिः ।
स याति नरके घोरे एकविंशतिभिः कुलैः ॥
देवान् पितृन् समभ्यर्च्य मुने शास्त्रोक्तवर्त्मना । इत्यधिकः पाठः ख. ।
८. अभिशापविवर्जितैः- क. । ९. निन्दति-ख. ।
१०. ते वन्द्या इत्यारभ्य ज्ञानाभिमानिन इत्यन्तं ख. नास्ति ।

स्मृत्युक्तेन च [१]मार्गेण मोहनाय दुरात्मनाम् ।
[२]महती पशुभावानां तेषां वाञ्छापि जायते ॥१८॥

तेषां च सद्गतिर्नास्ति कल्पकोटिशतैरपि ।
बहुशः कौलिकं धर्मं श्रुत्वा ज्ञानविभेदकम् ॥१९॥
[३]विन्दन्ति पामराः सर्वे [४]पारम्पर्यविमोहिताः ॥२०॥

वशिष्ठ उवाच —

मद्यपानेन मनुजः सिद्धिं सम्यग् लभेत् प्रभो ।
मद्यपानरताः सर्वे सिद्धिं [५]यान्तु च पाशवाः ॥२१॥

मांसभोजनमात्रेण यदि [६]पुण्या गतिर्भवेत् ।
लोके मांसाशिनः सर्वे पुण्यभाजो भवन्तु वै ॥२२॥

[७]स्त्रीसम्भोगेन लोकानां यदि मोक्षो भवेदिह ।
सर्वेऽपि जन्तवो लोके मुक्ताः स्युः स्त्रीनिषेवणात् ॥२३॥

[८]बुद्ध उवाच —

[९]अतः श्रृणुष्व त्वं पुत्र [१०]कुलधर्मं महानघम् ।
मोक्षं ददाति वै तारा एतद्धर्मप्रवर्तिनाम् ॥२४॥

वृथा पानं यत्क्रियते सुरापानं तदुच्यते ।
स महापातकी चैव वेदादिषु निरूपितः ॥२५॥

वशिष्ठ उवाच —

त्वन्मुखाच्छ्रोतुमिच्छामि कुलधर्मं विशेषतः ।
एतस्य तु [११]विशेषज्ञस्त्वदन्यो नास्ति कश्चन ॥२६॥

---

१. मन्त्रेण-ख. । २. महापापवशात्मनां-ख. । अयं श्लोकः ख. नास्ति ।
३. निन्दन्ति ह सुबुद्धौ च-क. । ४. पारम्पर्य-क. । ५. यान्ति च सर्वदा-ख. ।
६. पुण्यमति-ख. । ७. स्त्रियो भोगे कौलिकानां-क. । ८. श्रीशुक उवाच-ख. ।
९. अत्र श्रृणु गुरोः पुत्र-ख. । १०. कुलधर्मा महनद्यः-क. । ११. विशेषस्तु तत्समो नास्ति-क. ।

तस्य धर्मस्य माहात्म्यं सर्वधर्मोत्तमस्य च।
वद मे परमेशान यदि चास्ति कृपा मयि ॥२७ ॥

श्रीभगवानुवाच —

मुने श्रृणु प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण [१]योगिनीनां प्रियो भवेत् ॥२८ ॥

[२]शिवब्रह्मगुहादीनां न मया कथितं पुरा।
कथयामि तव स्नेहात् श्रृणुष्वैकाग्रमानसः ॥२९ ॥

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवोत्तमः।
वैष्णवादुत्तमः शैवः शैवाद् दक्षिणमुत्तमम् ॥३० ॥

दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम्।
सिद्धान्तादुत्तमं कौलं कौलात् परतरं न हि ॥३१ ॥

गुह्याद् गुह्यतरं [३]वत्स सारात्सारतरं परम्।
[४]मथित्वा ज्ञानदण्डेन वेदागममहार्णवम्[५] ॥३२ ॥

[६]संशयस्ते मया सोऽयं कुलधर्मसमुद्भवः।
एकतः सकला धर्मा यज्ञदानजपादयः ॥३३ ॥

एकतः कुलधर्मोऽयं सर्वयज्ञाधिकप्रियः[७]।
[८]प्रविशन्ति तथा नद्यः समुद्रं मुक्तबन्धनाः[९] ॥३४ ॥

तथैव समयाः सर्वे प्रविष्टाः कुलवर्त्मनि।
यथा हस्तिपदे लीनं सर्वप्राणिपदं भवेत् ॥३५ ॥

---

१. योगिनां प्रत्ययो भवेत्-क.। २. शिवो ब्रह्मन् महायोगी यन्मया-क.।

३. प्रोक्तम्-ख.। ४. मपि अज्ञानमन्थेन-क.।

५. 'न कौलेन समो धर्मस्त्रिषु लोकेषु विद्यते' इत्यधिकः पाठः ख.।

६. संशयस्ते मया सोऽयं कुलधर्मसमुद्भवः।
एकतः सकला धर्माः यज्ञदान .....॥ अपूर्णोऽयं श्लोकः ख. पुस्तके।

७. यज्ञाधिकं मुने-ख.। ८. प्रविश्यन्ति-क.। ९. मुक्तबन्धात्-ख.।

दर्शनानि च सर्वाणि [१]कुलत्रयं तथा मुने ।
[२]यथाऽमरतरङ्गिण्या न समाः [३]सकलापगाः ॥३६ ॥

तथैव समयाः[४] सर्वे कुलधर्मेण केवलाः[५] ।
मेरुकार्यपयोमूर्ध्नि सूर्यो मुख्यतरो यथा ॥३७ ॥

तथास्य समयाश्चास्य कुलस्य महदन्तरम् ।
अस्ति चेज्ज्ञानवान् कश्च मत्समो भुवि मानवः ॥३८ ॥

तथैव कुलधर्मेण समो नास्ति जगत्त्रये ।
जन्मभिर्बहुभिर्धन्यास्तपोभिर्मुनिसत्तम[६] ॥३९ ॥

[७]मोक्षं लभन्तु ते सर्वे जीवन्मुक्तास्तु कौलिकाः ।
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं न संशयः ॥४० ॥

बहुना[८] वा किमुक्तेन श्रृणुष्व अवधानतः ।
न कौलेन समो धर्मः सत्यमेतद् वदामि ते ॥४१ ॥

योगी चेन्नैव भोगी स्याद् भोगी चेन्न तु योगवान् ।
योगभोगात्मकं कौलं तस्मात् [९]सर्वाधिकं त्विदम् ॥४२ ॥

॥ इति महाचीनाचारसारतन्त्रे सर्वाचारसारोत्तमोत्तमे महाचीनाचारक्रमे चतुर्थः पटलः ॥



१.कुलत्रयः-क । २.मरुतबन्धिन्यां-ख. । ३.सफलोपगाः-क.,सकलागमाः-ख. । ४.सवयाः-क. । ५.सेवकाः क. । ६.ध्यानात्-ख. । ७.विबुधो लभते मोक्षम्-ख. । ८.बहुनापि च वाक्येन श्रृणुष्व सावधानतः-ख. । ९.त्वं समुपाश्रय-ख. ।

## ॥अथ पञ्चमः पटलः ॥

श्रीभगवानुवाच —

[१]समयं तत्प्रवक्ष्यामि श्रृणुष्वैकाग्रमानसः ।
येन विज्ञानमात्रेण सिद्धो भवति साधकः ॥१ ॥

घातयेद् गोपयेत्तन्न निन्दयेन्न [२]विलोकयेत् ।
पूजयेद् भावयेच्चैव वर्जयेन्न तु गोपयेत् ॥२ ॥

कामं क्रोधं तु मात्सर्यं विकारं चिन्तनोद्भवम्[३] ।
निद्रां लज्जां दौर्मनस्यं घातयेदष्टकं प्रिये[४] ॥३ ॥

मन्त्रं [५]मुद्राऽक्षसूत्रं च योगिनीवरसङ्गमम्[६] ।
भैरवागमनाचारमेतत्[७] सर्वं प्रगोपयेत् ॥४ ॥

कुलं गुरुं [८]सुधां विद्यां साधकान्[९] शोभितं तथा ।
शुभाशुभञ्च यत् कर्म निन्द्यं नैव कदाचन ॥ ५ ॥

कन्यायोनिं पशुक्रीडां नग्नां स्त्रीं प्रकटस्तनीम् ।
द्यूतविग्रहपापार्थान् सर्वथा न विलोकयेत् ॥ ६ ॥

गुरुं देवीं तथा साधून् शक्तिं चात्मानमव्ययम् ।
भक्तितः साधकान् सर्वान् पूजयेच्च प्रयत्नतः ॥ ७ ॥

गुरुवाक्योपदेशञ्च साधूक्तिमिष्टदेवताम् ।
स्वधर्मञ्च कुलाचारं सदात्मानं च[१०] भावयेत् ॥ ८ ॥

अगम्यागमनञ्चैव धूर्तगोष्ठीञ्च वर्जयेत् ।
[११]अनृतं पापगोष्ठीञ्च वर्जयेत् कुलनायकः ॥ ९ ॥

---

१. समयाष्टकं-ख. ।  २. कदाचन-ख. ।  ३. चेन्द्रियोद्भवम्-ख. ।
४. मुने-ख. ।  ५. मुद्राङ्कमुद्राश्च-क. ।  ६. योगिनीनां च सङ्गमम्-क. ।
७. भैरवीगमनाचारम्-क. ।  ८. सुरां-ख. ।  ९. साधिकामधिकं तथा-ख. ।
१०. सदात्मनि विभावयेत्-ख. ।  ११. अहितां-ख. ।

[१]विण्मूत्रशोणितक्लेदहीनाङ्गीं पिबतीं सुराम्।
कपालहरणञ्चैव अष्टावेव जुगुप्सयेत् ॥१०॥
इत्येवं समयाचारं यः करोति हि साधकः।
सम्प्राप्य देवीसम्भावं जीवन्मुक्तिञ्च गच्छति ॥११॥
एवं तारामतं प्रोक्तं सर्वसिद्धिरनुष्ठिता।
अनेन चीनाचारेण साधकः स्वयमीरितः ॥१२॥
अनेन चीनाचारेण तारामाराध्य साधकः।
यद्वा[२] न लभते वस्तु तन्नास्ति[३] भुवनत्रये ॥१३॥

श्रीदेव्युवाच —

देव देव महादेव जगत्प्रलयकारक।
[४]कुलाचारेण मद्याद्यैः कथं [५]सिद्धिर्भवेत् प्रभा ॥१४॥
यदेतन्मदिरापानं यत् परस्त्रीनिषेवणम्।
अधर्मकारणं सर्वं छिन्धि मे संशयं विभो ॥१५॥

श्रीशिव उवाच —

साधु पृष्टं त्वया देवि कथयामि श्रृणुष्व मे।
पुरा [६]दारुमये रम्ये मुनयः साधनापराः ॥१६॥
[७]मद्यपानं चिकीर्षन्ति परस्त्रीघर्षणञ्च वै।
तान् दृष्ट्वा सूचिताधर्मान् ब्रह्मा मां पर्युपस्थितः ॥१७॥
देव देव महादेव सृष्टिस्थितिलयात्मक।
एते दारुवने पापा मद्यपानरतास्तथा ॥१८॥
परस्त्रियं घर्षयन्ति मद्यं खादन्ति नित्यशः।
दिगम्बरा मुण्डिताश्च गतिरेषां कथं भवेत् ॥१९॥

---

१. विण्मूत्रं शोणितं क्लेदं हीनाङ्गं च रतिं सुराः।
कपिलक्षमनं चैव धूर्तगोष्ठीं च वर्जयेत् ॥-ख.। २. यद्वाल्पं-ख.। ३. तन्नास्मि-ख.।
४. कुलाचारं न- क.। ५. सिद्धो-ख.। ६. दारुवने-ख.। ७. श्लोकौ ख. न स्तः।

इति ब्रह्मवचः श्रुत्वा तमुवाच ह्यहं प्रिये ।
पितामह न जानासि चीनाचारक्रमं भवान् ॥२० ॥

उग्रतारां महाविद्यामेते नित्यं जपन्ति हि ।
पूजयन्ति च तामेव चीनाचारपरायणाः ॥२१ ॥

साधकाः सर्व एवैते महात्मानो महाशयाः ।
जीवन्मुक्तिगताः सर्वे देवीभक्तिपरायणाः ॥२२ ॥

परस्त्रीघर्षणाच्चैव मद्यपानाच्च नित्यशः ।
अश्वमेधादप्यधिकं लभन्ते फलमुत्तमम् ॥२३ ॥

एतांस्तु निन्दयेद् यस्तु महापातकवान् भवेत् ।
इतो दूरं प्रयाहि त्वं मा मां स्पृश पितामह ॥२४ ॥

परं विस्मयमापन्नः संशयाविष्टमानसः ।
किमिदं शम्भुना प्रोक्तं वेदविद्याविधानकृत्[१] ॥२५ ॥

इति सञ्चिन्तयन् मौनं प्राह पङ्कजसम्भवम् ।
उवाच साधकास्ते वै जीवन्मुक्ता महाशयाः ॥२६ ॥

परस्त्रियं घर्षयन्ति मद्यं खादन्ति नित्यशः ।
निर्वाणं ते च यास्यन्ति भगवत्याः प्रसादतः ॥२७ ॥

[२]चीनाचारं समाश्रित्य मुनयस्ते महाशयाः ।
तत्त्वज्ञानमयाः सर्वे विहरन्ति महीतले ॥२८ ॥

त्वं शीघ्रं गच्छ तत्रैव तान् प्रसादय पद्मज ।
तेषु रुष्टेषु[३] भवतो ब्रह्मत्वमपयास्यति[४] ॥२९ ॥

महादेवेन यत् प्रोक्तं सत्यमेतन्न संशयः ।
आवयोः स न संस्पृशेत् साधकान् यो विनिन्दति ॥३० ॥

---

१. वेदाचारो विरोधकृत्-ख.। २. श्लोकोऽयं नास्ति-ख.।
३. तुष्टेषु-क.। ४. मपि यास्यसि-क.।

श्रीशिव उवाच —

ततो हि मां[१] प्रणम्यासौ परमेष्ठी पितामहः।
गत्वा दारुवनं सर्वान् प्रणनाम[२] मुनीश्वरान् ॥३१॥

तुष्टाव परया भक्त्या स्तोत्रैर्बहुविधैरपि।
तेषां प्रसादमासाद्य कृतकृत्योऽभवद् विधिः ॥३२॥

श्रीदेव्युवाच —

महाचीनक्रमाचारं ततो बुद्धादवाप्य च।
वशिष्ठः स किमकरोत् तन्मे ब्रूहि महेश्वर ॥३३॥

श्रीशिव उवाच —

महाचीनक्रमाचारं ततो देवादवाप्य सः।
नीलाचलं समासाद्य कुलाचारपरायणः ॥३४॥

ततोऽक्षमालां युवतीं चाण्डालीं रमयन्मुनिः।
जपन् स साधयामास तारां मुक्तिप्रदायिकाम् ॥३५॥

[३]तारामाराधयामास कृतकृत्योऽभवत् तदा।
साक्षाद्भूता महादेवी तारा संसारतारिणी ॥३६॥
[४]तारोवाच वशिष्ठ त्वं वरान् वृणु यथेप्सितान् ॥३७॥

श्रीशिव उवाच —

तारादेवि जगन्मातर्ज्ञानविज्ञानदायिनि।
वरमेकं वृणोमि त्वं प्रसन्ना यदि मे शिवे ॥३८॥

[५]महाचीनक्रमाचारैर्यस्त्वां सम्पूजयिष्यति।
सर्वदा तस्य मातस्त्वं सुप्रसन्ना भविष्यसि ॥३९॥

---

१. मायां-क.।    २. प्रीणयामास सुव्रति-ख.।

३. मदिराद्रवसचूर्णो मदिरामदचूर्णितः- इत्येष पाठोऽधिकः-ख.।

४. तमुवाच-ख.।    ५. अयं श्लोको नास्ति-ख.।

[१]श्रीदेव्युवाच —

चीनाचारेण यः कश्चित् तारां मां पूजयिष्यति ।
स मे [२]पुत्रत्वमापन्नः सत्यं सत्यं न संशयः ॥४० ॥

इह भोगान् वरान् भुक्त्वा बृहस्पतिरिवापरः ।
अन्ते यास्यति मत्पार्श्वं यत्र मे [३]गणनायकः ॥४१ ॥

रूपयौवनसम्पन्नैर्दिव्यकन्यागणैः सह ।
विहरत्यप्यसौ [४]धीरो यावच्चन्द्रार्कतारकाः ॥४२ ॥

तत्रापि भविता वत्स योगसिद्धिरनुत्तमा ।
अणिमाद्याः सिद्धयस्त्वां सेविष्यन्ति निरन्तरम् ॥४३ ॥

इति लब्ध्वा वरं तस्या वशिष्ठोऽसौ महामुनिः ।
नक्षत्रलोकमासाद्य चाद्यापि द्योतते [५]दिवि ॥४४ ॥

एष ते कथितो देवि चीनाचारः सुदुर्लभः ।
समाचारात् साधकेन्द्रो भुक्तिं मुक्तिं लभेद् भुवि ॥४५ ॥

एतत् सर्वं प्रयत्नेन गोपितव्यं तथा प्रिये ।
यथाऽन्योऽन्येन लभते तथा कार्यं महेश्वरि ॥४६ ॥

स्वयोनिमिव देवेशि गोपयेत् पशुसन्निधौ ।
यो भक्तः साधको ज्ञानी तस्मै वक्तव्यमेव हि ॥४७ ॥

आलिङ्गनं चुम्बनं च स्तनयोर्मर्दनं तथा ।
दर्शनं स्पर्शनं योनेर्विकासो लिङ्गघर्षणम् ॥४८ ॥

प्रवेशः स्थापनं शक्तेर्नवपुष्पाणि पूजने ।
विषं पीत्वा सुरां भुक्त्वा मांसं गत्वा रजस्वलाम् ॥४९ ॥

---

१. श्रीभगवानुवाच-क.। २. पुत्र त्वया गव्य-ख.।
३. देव-ख.। ४. वीरो-ख.। ५. विधिः- क.।

योो जपेच्चण्डिकां देवीं तस्य दुःखं पदे पदे ।
देया विद्यार्थिने विद्या व्याधितेभ्यश्च औषधम् ॥
देयं क्षुधार्थिने अन्नं त्रयं स्वर्गस्य लक्षणम् ॥५० ॥

॥ इति महाचीनाचारसारतन्त्रे सर्वाचारसारोत्तमोत्तमे महाचीनाचारक्रमे
पञ्चमः पटलः ॥

॥महाचीनाचारक्रमः समाप्तः ॥



# भूतशुद्धितन्त्रम्

## ॥अथ प्रथमः पटलः ॥

ॐ देव्युवाच —

कथयेशान ! सर्वज्ञ ! यतोऽहं तव वल्लभा ।
योगं शारीरिकं देव ! यतस्त्वं योगवित्तमः ॥१ ॥
विना येन न सिद्ध्येत् तु जपहोमार्चनादिकम् ।
आत्मज्ञानं महेशान येन त्वं सिद्धिमान् गुरुः ॥२ ॥

भैरव उवाच —

श्रृणु देवि ! प्रवक्ष्यामि सारात् सारतरं परम् ।
स्त्रीस्वभावात् कदा कुत्र न प्रकाश्यं कदाचन ॥३ ॥
अतिप्रेमवशीभूतः कथयामि तवाऽग्रतः ।
गुदोर्ध्वं द्व्यङ्गुलं देवि ! कन्दमूलं खगाण्डवत् ॥४ ॥
तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ।
तासु नाड्यः प्रधानास्तु तत्र मुख्याश्चतुर्दश ॥५ ॥
तासां मुख्यतमास्तिस्र इडाद्याः परमेश्वरि ।
इडा च पिङ्गला चैव सुषुम्णा चेति तत्क्रमात् ॥ ६ ॥
सुषुम्णा त्रितया ज्ञेया वज्राचित्रान्तरान्विता ।
पञ्च नाड्यः प्रधानास्तु योगिनां साधने हिताः ॥ ७ ॥
मेरोर्वामे इडा दक्षे पिङ्गला चाऽस्थिनि स्थिते ।
पार्श्वयोर्मध्यदेशे च सुषुम्ना त्रिगुणा मता ॥ ८ ॥
पृष्ठदेशं समाश्रित्य प्रोद्‌गता ब्रह्मरन्ध्रकम् ।
सुषुम्ना चैव वल्ली च मेरोः श्लिष्टाः पुरोगताः ॥ ९ ॥

ग्रीवान्तं प्राप्य गलितं तिर्यग्भूता वराङ्गने ! ।
शङ्खिनीनालमालम्ब्य गता सा ब्रह्मसाधने ॥१० ॥
तदूर्ध्वं द्व्यङ्गुलान्तं च वज्राख्या चित्रिणी तथा ।
त्रिगुणा चातिसूक्ष्माग्रा ललन्ती ललना तथा ॥११ ॥
अतः सुषुम्णा त्रिगुणा ब्रह्मविष्णुशिवात्मिका ।
सत्त्वादित्रिगुणाधारा मता तु ब्रह्मनाडिका ॥१२ ॥
कन्दलग्नोर्ध्वदेशे तु सहस्रच्छदमुत्तमम् ।
श्वेतोदरं तथा श्वेतकिञ्जल्कपरिमण्डितम् ॥१३ ॥
पीतकर्णिकमाश्चर्यमैश्वर्यमजमव्ययम् ।
कमलं सर्वदेवानामाक्रीडं तद्धि पार्वति ! ॥१४ ॥
तदूर्ध्वं त्र्यङ्गुलं गुह्यं मूलाधाराच्चतुर्दलम् ।
रक्तं वशषसोपेतं डाकिन्या समधिष्ठितम् ॥
ध्यानं तस्याः प्रवक्ष्यामि सावधानाऽवधारय ॥१५ ॥
रक्ताक्षीं रक्तवर्णां पशुजनभयकृच्छूलखट्वाङ्गहस्तां
वामे खड्गं दधानां चणकमपि सुधापूरितं चैकवक्त्राम् ।
अत्युग्रामुग्रदंष्ट्रामरिकुलमथनीं पायसान्ने प्रसक्तां
मूलाधारेऽमृतार्थे परिवृतवसरसां डाकिनीं चिन्तयेत् ताम् ॥१६ ॥
ध्यायेत् तत्र त्रिकोणं च तन्मध्ये विवरं शुचि ।
तत्र ध्यायेत् कुण्डलिनीं प्रसुप्तां भुजगाकृतिम् ॥१७ ॥
संवेष्ट्याधोमुखं लिङ्गं त्रिवृत्त्या पुच्छसंयुताम् ।
विनोद्वेगं विनोत्कण्ठां निजे याति ततोत्थिता ॥१८ ॥
हुताशतापसंविग्नां चोर्ध्वमात्रामृतार्थिनाम् ।
ततो नयेत् पथि प्राज्ञो जीवयोगेन तत्पदम् ॥१९ ॥

तदूर्ध्वं ध्वजमूले तु पङ्कजं षड्दलं परम् ।
स्वाधिष्ठानाख्यमाश्चर्यं सूक्ष्मं सर्वगुणान्वितम् ॥
बभमैर्यवलैर्युक्तमारक्तं राकिणीस्थितम् ॥२० ॥
श्यामां शूलाग्रहस्तां डमरुकरयुतां तीक्ष्णटङ्कं वहन्ती
मुग्रां रक्तां त्रिनेत्रां शुचिकुटिललसच्चोग्रदंष्ट्रां प्रभाति ।
दीप्तां तां देवदेवीं त्रितयकमलगां रक्तधारैकनाथां
शुक्लान्ने सक्तचित्तामभिमतफलदां राकिनीं चिन्तयेत् ताम् ॥२१ ॥
रं बीजं कर्णिकायां तु तदन्ते विष्णुलिङ्गकम् ॥२२ ॥

॥इति श्रीभूतशुद्धितन्त्रे परमरहस्ये प्रथमः पटलः ॥



## ॥अथ द्वितीयः पटलः ॥

तदूर्ध्वं नाभिमूले तु पङ्कजं मणिपूरकम् ।
नीलं दशदलं शुद्धं डादिकान्ताक्षरान्वितम् ॥१ ॥

नीलां देवीं त्रिवक्त्रां त्रिनयनलसितां दंष्ट्रिणीमुग्ररूपां
वज्रं शक्तिं दधानामभयवरकरां दक्षवामक्रमेण ।
ध्यात्वा नाभौ सुपद्मे दशदलविलसत्कर्णिके लाकिनीं तां
मांसाशीं गौरवर्णां भक्तोत्सुकहृदयां विन्यसेत् साधकेन्द्रः ॥२ ॥

कर्णिकायां त्रिकोणस्थं रक्ताभं वह्निबीजकम् ।
तदन्तं चैव लिङ्गं च ध्यात्वा सिद्धीश्वरो भवेत् ॥३ ॥

बाह्योत्तरे मुखं तत्र त्रिकोणत्रयमुत्तमम् ।
हृदि पीतं द्वादशार्णं कादिठान्तार्णसंयुतम् ॥
अनाहताख्यं देवेशि ! पङ्कजं सुमनोहरम् ॥४ ॥

तत्र ध्यायेदिमां तां रविदलकमले कामिनीं वेदहस्तैः
पाशं शूलं वहन्तीं डमरुकमभयं धारिणीं पीतवर्णाम् ।
दध्यन्ने सक्तचित्तां - - - - - काकिनीं मत्तचित्तां
पत्रार्णैः कादिठान्तैः परिवृतवपुषां भावयेद् योगिनीं ताम् ॥ ५ ॥

कर्णिकायां च षट्कोणे वायुबीजयुतं महत् ।
ततः क्रोडे ईशं तदधस्त्रिकोणे बाणलिङ्गकम् ॥ ६ ॥

तन्मध्येऽष्टदलं रक्तं तत्र कल्पतरुं तथा ।
इष्टदेवासनं चारु चन्द्रार्कोपरि राजितम् ॥ ७ ॥

पिङ्गलाभं कण्ठदेशे विशुद्धाख्यं कलादलम् ।
षोडशस्वरसंयुक्तं पङ्कजं व्योमसंस्थितम् ।
हकारं धूम्रवर्णं तु तदङ्के च सदाशिवम् ॥ ८ ॥

देवीं ज्योतिःस्वरूपां त्रिनयनलसितां पञ्चवक्त्राभिरामां

हस्तैश्चापैश्च पाशं सृणिमपि दधतीं पुस्तकं ज्ञानमुद्राम् ।

ध्यायेत् कण्ठस्थपद्मे निखिलपशुजनोन्मादिनीमस्थिसंस्थां

दुग्धान्ने प्रीतियुक्तां मधुमदमुदितां शाकिनीं साधकेन्द्रः ॥९ ॥

कर्णिकायां त्रिकोणस्थं पूर्णचन्द्रं च चिन्तयेत् ।

हेमाभबीजमारूढमाकाशं तत्र चिन्तयेत् ॥१० ॥

शुक्लं सुवेषचरितं ततो देवं सदाशिवम् ।

गिरिजाभिन्नदेहार्धं रौप्यहेमशरीरकम् ॥११ ॥

॥ इति श्रीभूतशुद्धितन्त्रे परमरहस्ये द्वितीयः पटलः ॥



## ॥अथ तृतीयः पटलः॥

तदूर्ध्वमाज्ञाचक्रं च द्विदलं धूम्रधूमकम्।

हस्ताभ्यां लसितं शङ्खमालाधिष्ठितमद्भुतम् ॥१॥

कर्णिकायां त्रिकोणस्थं मत्तालिप्रणवाकृतिम्।

जलद्वीपनिभं चोर्ध्वं नादरूपं मनोरमम्॥

बिन्दुं मकाररूपं च तदूर्ध्वं मनसालयम् ॥२॥

चक्रस्थां शुक्लवर्णां डमरुकरयुतामक्षसूत्रां कपालं
विद्यां मुद्रां दधानां त्रिनयनविलसद्रक्तसद्वक्त्रयुक्ताम्।

हारिद्रान्ने प्रसक्तां मधुमदमुदितां शुक्लमब्जस्वरूपां
देवीं देवेन्द्ररत्नाकरमधुमुदितां भावयेत् शाकिनीं ताम् ॥३॥

नादस्थानं तदूर्ध्वे तु नादान्तं च तदूर्ध्वतः।

शक्तिस्थानं तदूर्ध्वे तु समनिं च तदूर्ध्वतः ॥४॥

उन्मनीं चिन्तयेदूर्ध्वे ततो ब्रह्मपुरं व्रजेत्।

ब्रह्मरन्ध्रस्थितं शुद्धं सहस्रच्छदमद्भुतम्॥ ५॥

शङ्खिनीशिखरासीनं प्रफुल्लं भानुतेजसा।

सर्वदेवाधिसंस्थानं गुरुराष्ट्रेण वर्त्मना॥ ६॥

हृदिस्थां कुञ्जिकां कृत्वा गत्वा तदुपरि शिवे!

कण्ठाद्यं समनुप्राप्य द्वारं सङ्कोचयेद् हठात्॥ ७॥

उत्थाप्य परमेशानि! परमात्मनि दीपयेत्।

हुताशनं प्रतप्त्वा तु तापसम्भूतमूर्ध्वता॥ ८॥

प्रसुप्ता नागिनी लिङ्गे योनिवक्त्रे प्रधापयेत्।

ततः प्रचालयेद् वायुं यावन्नाभ्यन्तरेषु च॥ ९॥

गुरुराष्ट्रेण मार्गेण सकृत् तु कुम्भकेन वै।

आक्रम्यैवं ततो जीवः श्वासत्वेन यथाम्भसः ॥१०॥

ऊर्ध्वश्वासेनोर्ध्वमुखान् कोरकान् पङ्कजान् शिवे !।
प्रबोधयन् शनैर्भग्नमेरुश्रृङ्गं नयेत् सुधीः ॥११ ॥
गृहीत्वा प्रविसेद् वापि तत्तद्देवस्वरूपिणीम्।
चित्रिणीं विवरे रक्तभेदपङ्कसमुद्भवाम् ॥१२ ॥
सत्यदक्षे पार्श्वयोश्च नालस्थां वाहयेच्च ताम्।
पद्मान् नाडीन् मध्यवर्त्मबोधितान् परमेश्वरि ॥१३ ॥
नालं वार्य विशेत् पद्मान् तेन भेदः प्रजायते।
यथाऽसौ परतिं रश्मिवह्निं नाययति प्रभुः ॥१४ ॥
भेदयित्वा तथा चक्रं स उ जीवं नयेष्टताम्।
शिरःस्थानि महेशानि ! चिन्तयेद् गुरुमार्गतः ॥१५ ॥
साङ्गत्ये. . . तयोः सामरस्यं विभाव्य च।
तदुद्भूतरसेनैव तर्पयेद् देहदेवताम् ॥१६ ॥
पाननिष्ठां सदा हृष्टामानन्दाप्लुतविग्रहाम्।
पुनस्तेन पथा देवि ! आनयेत् कुलगह्वरम् ॥१७ ॥
एवं यो चिन्तयेद् देवि ! योगं चाहरहः सुधीः।
आजातयाममन्त्रस्थस्तुभ्यं नित्यं न संशयः ॥१८ ॥
एतद्योगं विना देवि ! दीक्षापूजाजपादिकम्।
निष्फलं नात्र सन्देहो विजस्थे चषकं यथा ॥१९ ॥
एतत् तत्त्वं परं तत्त्वं यो जानाति स एव हि।
इत्येतत् कथितं तत्त्वं परं पिण्डविशोधनम् ॥
विना येन न सिद्धिः स्यात् सप्तजन्मकृतात् श्रमात् ॥२० ॥
तथाऽन्यत् सम्प्रवक्ष्यामि गुह्याद् गुह्यतरं महत्।
यज्ज्ञात्वा सिद्धिमाप्नोति षण्मासादपि साधकः ॥२१ ॥

॥ इति श्रीभूतशुद्धितन्त्रे परमहस्ये तृतीयः पटलः ॥

## ॥अथ चतुर्थः पटलः ॥

भैरव उवाच —

इडायां सञ्चरेच्चन्द्रः पिङ्गलायां च भास्करः ।
सुषुम्नायां सदा वह्नी रेतायोगविशेषतः ॥१ ॥

युगपत्क्रमोद्योगमहं वेद्मि न चापरः ।
शुद्धचित्तेन सिद्धेन गुरोः प्रियहुतं क्वचित् ॥२ ॥

जानाति परमेशान ! गुरुपादप्रसादतः ।
त्रिधारां वहते तास्तु यस्तां वेत्ति स सर्ववित् ॥३ ॥

इडायां यमुना देवि ! पिङ्गलायां सरस्वती ।
सुषुम्नायां वहेद् गङ्गा तासां योगस्त्रिधा भवेत् ॥४ ॥

सङ्गता ध्वजमूलेन विमुक्ता भ्रूवियोगतः ।
त्रियोगवेणी सा प्रोक्ता तत्र स्नानं महाफलम् ॥ ५ ॥

ग्रहणेऽर्कस्य चेन्दोर्वा सुषुम्नायां सदा शुभे ।
गत्वा त्रिवेण्यां स्नात्वा च मनःसङ्कल्पपूर्वकम् ॥ ६ ॥

ग्रासाद् विमुक्तिपर्यन्तं जप्त्वा सिद्धीश्वरो भवेत् ।
यस्तु मन्त्री सुषुम्नायां विमले बिन्दुतीर्थके ॥ ७ ॥

गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः ।
त्रिवेण्यां यस्तु स्नायाद्वै पुष्करे वा द्विजाकुले ॥ ८ ॥

तस्य पुण्यफलं वक्तुं न शक्नोमि महेश्वरि ।
नित्यं स्नात्वा च तीर्थेऽस्मिन् जपपूजादिकं चरेत् ॥ ९ ॥

मन्त्रसिद्धिर्भवेत् तस्य पुरश्चर्यादिभिर्विना ।
सहस्रारे गुरुं ध्यात्वा परमानन्दनिर्वृतः ॥
कुर्वीताहरहः कृत्यं न च पापैर्विलिप्यते ॥१० ॥

सहस्रदलपङ्कजं सकलशीतरश्मिप्रभं
वराभयकराम्बुजं विविधगन्धमालान्वितम् ।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं
स्मरेत् शिरसि हंसगं तदभिधानपूर्वं गुरुम् ॥११ ॥

एतत् ते कथितं तत्त्वं सुगोप्यं पशुसङ्कटे ।
न कस्मैचित् प्रवक्तव्यं यदीच्छेत् सिद्धिमात्मनः ॥१२ ॥

॥ इति श्रीभूतशुद्धितन्त्रे परमरहस्ये चतुर्थः पटलः ॥

॥ग्रन्थश्च समाप्तः ॥

# तन्त्रसंग्रह-पञ्चमभाग-श्लोकसूची

## सर्वविजयितन्त्रस्य

## गुप्तसाधनतन्त्रस्य

## मायातन्त्रस्य

## षडाम्नायतन्त्रस्य

## गायत्रीतन्त्रस्य

## चीनाचारतन्त्रस्य

## भूतशुद्धितन्त्रस्य

